Shri Atmananda Jain Granth Ratnamala Serial No. 87

# BRIHAT KALPA SUTRA

AND

# ORIGINAL NIRYUKTI

OF

## STHAVIR ARYA BHADRABAHU SWAMI

AND

A Bhashya by Shri Sanghadas Gani Kshamashramana thereon with a Commentary begun by Acharya Shri Malayagiri and Completed by Acharya Shri Kshemakirti.

Volume IV

SECOND AND THIRD UDDESHAS

EDITED BY

GURU SHRI CHATURVIJAYA

AND HIS

SHISHYA PUNYAVIJAYA

THE FORMER BEING THE DISCIPLE OF

PRAVARTAKA SHRI KANTIVIJAYAJI

INITIATED BY

NYAYAMBHONIDHI SHRIMAD VIJAYANANDA SURIJI

1ST ACHARYA OF

BRIHAT TAPA GACHÇHHA SAMVIGNA SHAKHA.

**Publishers:**—SHRI ATMANAND JAIN SABHA, BHAVNAGAR

| | | | | |
|---|---|---|---|---|
| Vir Samvat | 2465 | Copies 500 | Atma Samvat | 42 |
| Vikrama Samvat | 1994 | | A. D. | 1938 |

श्रीआत्मानन्द-जैनग्रन्थरत्नमालायाः सप्ताशीतितमं रत्नम् ( ८७ )

स्थविर-आर्यभद्रबाहुस्वामिप्रणीतस्वोपज्ञनिर्युक्त्युपेतं

# बृहत् कल्पसूत्रम् ।

श्रीसङ्घदासगणिक्षमाश्रमणसूत्रितेन भाष्येणोपबृंहितम् ।

जैनागम-प्रकरणाद्यनेकग्रन्थानिगूढार्थप्रकटनप्रौढटीकाविधानसमुपलब्ध-
'समर्थटीकाकार'विख्यातिभिः श्रीमद्भिर्मलयगिरिसूरिभिः
प्रारब्धया बृहत्पोशालिकतपागच्छीयैः श्रीक्षेमकीर्त्या-
चार्यैः पूर्णीकृतया च वृत्त्या समलङ्कृतम् ।

तस्यायं

## च तु र्थो वि भा गः

## द्वितीय-तृतीयावुद्देशकौ ।

तत्सम्पादकौ—

सकलागमपरमार्थप्रपञ्चनप्रवीण-बृहत्तपागच्छान्तर्गतसंविग्नशाखीय—आद्याचार्य—
न्यायाम्भोनिधि—श्रीमद्विजयानन्दसूरीश( प्रसिद्धनाम—श्रीआत्मारामजी—
महाराज )शिष्यरत्नप्रवर्त्तक-श्रीमत्कान्तिविजयमुनिपुङ्गवानां
शिष्य-प्रशिष्यौ चतुरविजय-पुण्यविजयौ ।

प्रकाशं प्रापयित्री—

भावनगरस्था श्रीजैन-आत्मानन्दसभा ।

वीरसंवत् २४६५
ईस्वी सन १९३८

प्रतयः ५००

विक्रमसंवत् १९९४
आत्मसंवत् ४२

इदं पुस्तकं मुम्बय्यां कोलभाटवीथ्यां
२६-२८ तमे गृहे निर्णयसागर-
मुद्रणालये रामचन्द्र येसु शेडगे-
द्वारा मुद्रापितम्



प्रकाशितं च तत् "वल्लभदास त्रिभुवनदास
गांधी, सेक्रेटरी श्रीआत्मानन्द जैन
सभा, भावनगर" इत्यनेन

आ फोटो अमदावाद निवासी नगरशेठ श्रीयुत चीमनलाल लालभाईनां धर्मपत्नी

बृहत्तपागच्छान्तर्गत संविग्नशाखीय आद्याचार्य

न्यायाम्भोनिधि श्री १००८ श्री विजयानन्दसूरि

प्रशिष्यरत्न शान्तमूर्ति महाराज

जन्म-विक्रम संवत [illegible]



श्री १००८ श्री हंसविजयजी महाराज

स्वर्गगमन-विक्रम संवत १९७० फागुण सुदि प्रथम १०

श्रीमती महालक्ष्मीबहेन तरफथी तैयार कराववामां आव्यां छे.



# स्मरणाञ्जलिः

पूज्यपाद, प्रातःस्मरणीय, शान्तमूर्ति, निर्मलज्ञान-चारित्रादि सद्गुण विभूषित,

देशविदेशमां परिभ्रमण करी जैनशासननी अभिवृद्धि करनार,

अनेक प्राचीन जैन तीर्थोना जीर्णोद्धार करावनार,

प्रभावसंपन्न, ख्यातकीर्ति, पुनीतनामधेय, पुण्यपुरुष

श्री १००८ श्रीहंसविजयजी महाराजश्रीना

पवित्र गुणपूर्ण मंगलनामनुं

निर्युक्ति-भाष्य-वृत्तिविभूषित बृहत्कल्पसूत्रना चतुर्थ विभागमां

स्मरण करी अमे कृतकृत्य थइए छीए.

चरणसेवको—

मुनि चतुरविजय

तथा

मुनि पुण्यविजय

# बृहत्कल्पसूत्रचतुर्थविभागसंशोधनकृते सङ्गृहीतानां प्रतीनां सङ्केताः ।

भा० पत्तनस्थभाभापाटकसत्कचित्कोशीया प्रतिः ।

डे० अमदावादडेलाउपाश्रयभाण्डागारसत्का प्रतिः ।

मो० पत्तनान्तर्गतमोंकामोदीभाण्डागारसत्का प्रतिः ।

ले० पत्तनसागरगच्छोपाश्रयगतलेहेरुवकीलसत्कज्ञानकोशगता प्रतिः ।

कां० प्रवर्तकश्रीमत्कान्तिविजयसत्का प्रतिः ।

तामू० पत्तनीयश्रीसङ्घभाण्डागारसत्का ताडपत्रीया मूलसूत्रप्रतिः ।

ताटी० पत्तनीयश्रीसङ्घभाण्डागारसत्का ताडपत्रीया टीकाप्रतिः ।

ताभा० पत्तनीयश्रीसङ्घभाण्डागारसत्का ताडपत्रीया भाष्यप्रतिः ।

प्रकाश्यमानेऽस्मिन् ग्रन्थेऽस्माभिर्येऽशुद्धाः पाठाः प्रतिषूपलब्धास्तेऽस्मत्कल्पनया संशोध्य (  ) एतादृग्वृत्तकोष्ठकान्तः स्थापिताः सन्ति, दृश्यतां पृष्ठ १० पङ्क्ति २६, पृ० १७ पं ३०, पृ० २५ पं० १२, पृ० ३१ पं० १७, पृ० ४० पं० २४ इत्यादि । ये चास्माभिर्गलिताः पाठाः सम्भावितास्ते [  ] एतादृक्चतुरस्रकोष्ठकान्तः परिपूरिताः सन्ति, दृश्यतां पृष्ठ ३ पंक्ति ९, पृ० १५ पं० ६, पृ० २८ पं० ५, पृ० ४९ पं० २६ इत्यादि ।

# प्रकाश्यमानेऽस्मिन् ग्रन्थे टीकाकृताऽस्माभिश्च निर्दिष्टानामवतरणानां स्थानदर्शकाः सङ्केताः ।

| | |
|---|---|
| अनुयो० | अनुयोगद्वारसूत्र |
| आचा० श्रु० अ० उ० | आचाराङ्गसूत्र श्रुतस्कन्ध अध्ययन उद्देश |
| आव० हारि० वृत्तौ | आवश्यकसूत्र हारिभद्रीयवृत्तौ |
| आव० नि० गा०<br>आव० निर्यु० गा० | आवश्यकसूत्र निर्युक्ति गाथा |
| आव० मू० भा० गा० | आवश्यकसूत्र मूलभाष्य गाथा |
| उ० सू० | उद्देश सूत्र |
| उत्त० अ० गा० | उत्तराध्ययनसूत्र अध्ययन गाथा |
| ओघनि० गा० | ओघनिर्युक्ति गाथा |
| कल्पबृहद्भाष्य | बृहत्कल्पबृहद्भाष्य |
| गा० | गाथा |
| चूर्णि | बृहत्कल्पचूर्णि |
| जीत० भा० गा० | जीतकल्पभाष्य गाथा |
| तत्त्वार्थ० | तत्त्वार्थाधिगमसूत्राणि |
| दश० अ० उ० गा० | दशवैकालिकसूत्र अध्ययन उद्देश गाथा |
| दश० अ० गा०<br>दशवै० अ० गा० | दशवैकालिकसूत्र अध्ययन गाथा |
| दश० चू० गा० | दशवैकालिकसूत्र चूलिका गाथा |
| देवेन्द्र० गा० | देवेन्द्र-नरकेन्द्रप्रकरणगत देवेन्द्रप्रकरण गाथा |
| नाट्यशा० | भरतनाट्यशास्त्रम् |
| पञ्चव० गा० | पञ्चवस्तुक गाथा |
| पिण्डनि० गा० | पिण्डनिर्युक्ति गाथा |
| प्रज्ञा० पद | प्रज्ञापनोपाङ्गसटीक पद |
| प्रशम० आ० | प्रशमरति आर्या |
| मल० | मलयगिरीया टीका |
| महानि० अ० | महानिशीथसूत्र अध्ययन |
| विशे० गा० | विशेषावश्यकमहाभाष्य गाथा |
| विशेषचूर्णि | बृहत्कल्पविशेषचूर्णि |

| | |
|---|---|
| व्य० भा० पी० गा० | व्यवहारसूत्र भाष्य पीठिका-गाथा |
| व्यव० उ० भा० गा० | व्यवहारसूत्र उद्देश भाष्य गाथा |
| श० उ० | शतक उद्देश |
| श्रु० अ० उ० | श्रुतस्कन्ध अध्ययन उद्देश |
| सि०<br>सिद्ध० | सिद्धहेमशब्दानुशासन |
| सि० हे० औ० सू० | सिद्धहेमशब्दानुशासन औणादिक सूत्र |
| हैमाने० द्विस्व० | हैमानेकार्थसङ्ग्रह द्विस्वरकाण्ड |

यत्र टीकाकृद्भिर्ग्रन्थाभिधानादिकं निर्दिष्टं स्यात् तत्रास्माभिरुल्लिखितं श्रुतस्कन्ध-अध्ययन-उद्देश-गाथादिकं स्थानं तत्तद्ग्रन्थसत्कं ज्ञेयम्, यथा पृष्ठ १५ पं० ९ इत्यादि। यत्र च तन्नोल्लिखितं भवेत् तत्र सामान्यतया सूचितमुद्देशादिकं स्थानमेतत्प्रकाश्यमानबृहत्कल्पसूत्रग्रन्थसत्कमेव ज्ञेयम्, यथा पृष्ठ २ पंक्ति २-३-४, पृ० ५ पं० ३, पृ० ८ पं० २७, पृ० ११ पं० २७, पृ० ६७ पं० १२ इत्यादि।

## प्रमाणत्वेनोद्धृतानां प्रमाणानां स्थानदर्शक-ग्रन्थानां प्रतिकृतयः।

| | |
|---|---|
| अनुयोगद्वारसूत्र— | शेठ देवचन्द लालभाई जैन पुस्तकोद्धार फंड सुरत। |
| अनुयोगद्वारसूत्र चूर्णी— | रतलाम श्रीऋषभदेवजी केशरीमलजी श्वेताम्बर संस्था। |
| अनुयोगद्वारसूत्र सटीक (मलधारीया टीका) — | शेठ देवचन्द लालभाई जैन पुस्तकोद्धार फण्ड सुरत। |
| आचाराङ्गसूत्र सटीक— | आगमोदय समिति। |
| आवश्यकसूत्र चूर्णी— | रतलाम श्रीऋषभदेवजी केशरीमलजी श्वेताम्बर संस्था। |
| आवश्यकसूत्र सटीक (श्रीमलयगिरिकृत टीका) — | आगमोदय समिति। |
| आवश्यकसूत्र सटीक (आचार्य श्रीहरिभद्रकृत टीका) — | आगमोदय समिति। |
| आवश्यक निर्युक्ति— | आगमोदय समिति प्रकाशित हारिभद्रीय टीकागत। |
| ओघनिर्युक्ति सटीक— | आगमोदय समिति |
| कल्पचूर्णि— | हस्तलिखित। |
| कल्पबृहद्भाष्य— | ” |
| कल्पविशेषचूर्णि— | ” |
| कल्प-व्यवहार-निशीथसूत्राणि— | जैनसाहित्यसंशोधक समिति। |

| | |
|---|---|
| जीवाजीवाभिगमसूत्र सटीक— | आगमोदय समिति । |
| दशवैकालिक निर्युक्ति टीका सह— | शेठ देवचन्द लालभाई जैन पुस्तकोद्धार फण्ड सुरत । |
| दशाश्रुतस्कन्ध अष्टमाध्ययन (कल्पसूत्र) — | शेठ देवचन्द लालभाई जैन पुस्तकोद्धार फंड सुरत । |
| देवेन्द्रनरकेन्द्र प्रकरण सटीक— | श्रीजैन आत्मानन्दसभा भावनगर । |
| नन्दीसूत्र सटीक (मलयगिरिकृत टीका) — | आगमोदय समिति । |
| नाट्यशास्त्रम्— | निर्णयसागर प्रेस मुंबई । |
| निशीथचूर्णि— | हस्तलिखित । |
| पिण्डनिर्युक्ति— | शेठ देवचन्द लालभाई जैन पुस्तकोद्धार फंड सुरत । |
| प्रज्ञापनोपाङ्ग सटीक— | आगमोदय समिति । |
| बृहत्कर्मविपाक— | श्रीजैन आत्मानन्द सभा भावनगर । |
| महानिशीथसूत्र— | हस्तलिखित । |
| राजप्रश्नीय सटीक— | आगमोदय समिति । |
| विपाकसूत्र सटीक— | " |
| विशेषणवती— | रतलाम श्रीऋषभदेवजी केशरीमलजी श्वेताम्बर संस्था । |
| विशेषावश्यक सटीक— | श्रीयशोविजय जैन पाठशाला बनारस । |
| व्यवहारसूत्रनिर्युक्ति भाष्य टीका— | श्रीमाणेकमुनिजी सम्पादित । |
| सिद्धप्राभृत सटीक— | श्रीजैन आत्मानन्द सभा भावनगर । |
| सिद्धहेमशब्दानुशासन— | शेठ मनसुखभाई भगुभाई अमदाबाद । |
| सिद्धान्तविचार— | हस्तलिखित । |
| सूत्रकृताङ्ग सटीक— | आगमोदय समिति । |
| स्थानाङ्गसूत्र सटीक | " |

॥ अर्हम् ॥

# प्रासंगिक निवेदन ।

निर्युक्ति-भाष्य-वृत्तिसहित बृहत्कल्पसूत्रना आ अगाउ अमे त्रण विभाग प्रसिद्ध करी चूक्या छीए । आजे एनो चतुर्थ विभाग प्रसिद्ध करवामां आवे छे । पहेला त्रण विभागमां पहेलो उद्देश समाप्त थयो छे अने आ विभागमां बीजो-त्रीजो उद्देश पूर्ण थाय छे । आ विभागनी समाप्ति साथे निर्युक्ति-भाष्य-वृत्तिसहित बृहत्कल्पसूत्रनी मनाती ४२६०० श्लोक-संख्या पैकी ३३८२५ श्लोक सुधीनो अंश समाप्त थाय छे । आ प्रमाण अमे अमारी नोंध अनुसार जणावीए छीए । निर्युक्ति-भाष्य-वृत्तियुक्त बृहत्कल्पसूत्रनी जुदी जुदी प्रतोमां ग्रन्थाग्रं०नी नोंध अति अस्तव्यस्त होई एने आधारे विवेक करी आपेली अमारी ग्रन्थप्रमाणनी संख्या सर्वथा वास्तविक होवामाटे अमे भार मूकता नथी ते छतां अमे एटलुं भारपूर्वक कहीए छीए के अमे ग्रन्थाग्रं०नी नोंध आपवा माटे अतिघणी काळजी अने चोकसाई राखेली छे ।

पहेलां प्रसिद्ध करवामां आवेला त्रण विभागना संशोधनमां जे जे हस्तलिखित प्रतिओनो उपयोग करवामां आव्यो छे ते बधीओनो परिचय अमे ते ते विभागना "प्रासंगिक निवेदन" वगेरेमां आप्यो छे । प्रस्तुत चतुर्थ विभागना संशोधनमां, तृतीय विभागना "प्रासङ्गिक निवेदन"मां जणावेल द्वितीयखंडनी सात प्रतिओ उपरांत तेज भंडारमांनी त० प्रति सिवायनी तृतीयखंडनी छ प्रतिओनो पण अमे उपयोग कर्यो छे; जेमनो परिचय आ नीचे आपवामां आवे छे ।

## तृतीयखंडनी प्रतिओ

१-२ **डे० प्रति अने कां० प्रति**—आ बन्नेय प्रतिओनो परिचय आ पहेलां प्रकाशित थइ चूकेला विभागोमां संपूर्णपणे अपाइ गयेल होवाथी आने अंगे अमारे अहीं कशुं ज कहेवानुं रहेतुं नथी ।

३ **भा० प्रति**—आ प्रति पाटण-भाभाना पाडामांना विमळना ज्ञानभंडारनी छे । एनां पानां २२९ छे । दरेक पानामां पूठीदीठ १८-१९ लीटीओ लखेली छे अने दरेक लीटीमां ४० थी ४७ अक्षरो छे । प्रतिनी लंबाई ११॥ इंचनी अने पहोळाई ४॥ इंचनी छे । प्रतिना अंतमां नीचे प्रमाणेनी, प्रस्तुत प्रति जेना उपरथी लखाई छे तेना लखावनारनी तेम ज प्रस्तुत प्रतिना लखनार-लखावनारनी पुष्पिका छे—

2

॥ छ ॥ मंगलं महाश्री ॥ : ॥ छ ॥ शुभं भवतु ॥ छ ॥ ॥ श्रीजैत्र श्रीजिनाय नमः ॥

श्रीमद्गूर्जरवंशमौक्तिकमणिः सद्वृत्तताभाजनं,
तेजस्वी पुरुषोऽजयद्द्य इति ख्यातः क्षमायामभूत् ।
आश्चर्याय बभूव यस्य गुरुता सा काऽपि भूमण्डले,
यस्याः साम्यमुपैति नैव निवहः क्षोणीधराणामपि ॥ १ ॥
जैत्रश्रीरिति चैतस्य, जज्ञे श्रीरिव वल्लभा ।
वसन्ती हृदयाम्भोजे, परं चापल्यवर्जिता ॥ २ ॥
सुतस्तस्योदारः स्फुरदुरुयशाः सत्त्वसदनं,
हरिश्चन्द्रो नामा नव इव बभौ कोऽपि जगति ।
यतो यस्यान्तेहा अगमदनिशं चैकदशया,
तथा नासीच्छक्रादपि परिभवो यज्जनयितुः ॥ ३ ॥
पुण्यश्रीकुक्षिभूस्तस्य, तनयो विनयोद्यतः ।
कुमारपाल इत्यासीत्, सङ्घाधिपतिपुङ्गवः ॥ ४ ॥
षड्वेदवह्नीन्दु १३४६ मिते च वर्षे, तीर्थेषु यात्रां परमां विधाय ।
विम्बे विधोरेष लिलेख लक्ष्मलक्ष्मेण दक्षः प्रकटां स्वसंज्ञाम् ॥ ५ ॥
एतस्याऽनङ्गपालाख्यस्तेजःपालोऽथ केशवः ।
गजश्च नयपालश्च, जयन्ति भुवि सोदराः ॥ ६ ॥
कुमारपालस्य च देविनीति, जायाऽस्ति साक्षादिव गेहनीतिः ।
पुत्रास्त्वमी धर्मधुरैकधुर्याः, ख्यातास्त्रयो निर्मितधर्मकार्याः ॥ ७ ॥
आद्यस्तेषु प्रतीतो नृपसदसि सदा लब्धहम्मीरवीर-
प्राज्यप्रौढाधिकारस्फुरितगुरुयशाः क्षेत्रसिंहो विवेकी ।
अर्थिस्वान्तोदधीन्दुः सकरुणहृदयः सोमसिंहो द्वितीयः,
मूलं सन्नीतिवल्लेरतिधिषणमतिर्मूलराजस्तृतीयः ॥ ८ ॥
श्रीवज्रसेनाह्वगुरोर्मुखेन्दुवाक्चन्द्रिकापानपरश्चकोरः ।
श्रीक्षेत्रसिंहः सकुटुम्बकोऽपि, सौहित्यमुच्चैरनिशं बभार ॥ ९ ॥
तेषामेवोपदेशेनालेखयद् भ्रातृसंयुतः ।
कल्पाध्ययनटीकायाः, पुस्तकत्रितयं मुदा ॥ १० ॥
पुष्पदन्ताविमौ यावद्, वर्त्तेते गगनाङ्गणे ।
साधुभिर्वाच्यमानोऽयं, तावन्नन्दतु पुस्तकः ॥ ११ ॥

संवत् १६०८ वर्षे महाचैत्रमासे शुक्लपक्षे द्वादश्यां तिथौ गुरुवासरे ॥ श्री·········
भ० श्रीश्रीश्री································································ ॥

जादृशं पुस्तके दृष्टं, तादृशं लिखितं मया ।
यदि शुद्धमशुद्धं वा, मम दोषो न दीयते ॥ १ ॥

ग्रन्थाग्रम् सहस्र ४२६०० ॥ ॥ श्री ॥ छ ॥ ॥ श्री ॥ ॥ श्रीरस्तु नो गुरोः ॥ छ ॥ श्री ॥ ॥ श्री ॥ छ ॥ ..........................

आ पुष्पिकामां ज्यां टपकां मूकवामां आव्यां छे ते अक्षरोने आ प्रतिना कोई उठाउगीरे भूसी नाख्या छे । प्रतिनी स्थिति साधारण छे । प्रति भाभाना पाडाना ज्ञानसंग्रहमांनी होवाथी एनी अमे भा० संज्ञा राखी छे । आ प्रति अमे ज्ञानभंडारना वहीवटदार शेठ **उत्तमचंद नागरदास** द्वारा मेळवी छे ।

४ **मो० प्रति**—आ प्रति **पाटण-सागरगच्छना** उपाश्रयमां मूकेला **शेठ मोंका मोदीना** भंडारनी छे । एनां पानां १५१ छे । दरेक पानानी पूठीदीठ सत्तर सत्तर लीटीओ छे अने ए दरेक लीटीमां ६६ थी ७० अक्षरो छे । प्रतिनी लंबाई १३॥। इंचनी अने पहोळाई ५। इंचनी छे । प्रतिना अंतमां लेखकनी पुष्पिका आदिनो उल्लेख नथी, ते छतां आ प्रति एक ज लेखकना हाथे लखायेली होई तेना पहेला बीजा खंडो अनुक्रमे संवत् १५७३-७४ मां लखायेला होवाथी आ त्रीजो खंड ए पछीना वर्षमां लखायेलो छे एमां लेश पण शंकाने स्थान नथी । प्रतिनी स्थिति जीर्ण जेवी छे । प्रति **मोदीना** भंडारनी होई तेनी अमे **मो०** संज्ञा राखी छे ।

५ **ले० प्रति**—आ प्रति **पाटण-सागरगच्छना** उपाश्रयमां रहेला **लेहेरु वकीलना** ज्ञानभंडारनी छे । आ प्रति अपूर्ण होई तेनां पानां मात्र ४१ रह्यां छे अने बीजां गूम थयां छे । दरेक पानानी पूठीदीठ सत्तर सत्तर लीटीओ छे अने दरेक लीटीमां ६९ थी ७४ अक्षरो छे । प्रतिनी लंबाई १३॥ इंचनी अने पहोळाई ५ इंचनी छे । प्रतिनी स्थिति जीर्ण जेवी छे । प्रति **लेहेरु** वकीलना भंडारनी होवाथी एनी अमे **ले०** संज्ञा राखी छे ।

उपरोक्त बन्नेय प्रतिओ अमे भंडारनी संरक्षक **हेमचन्द्रसभा** द्वारा मेळवी छे ।

६ **ताटी० प्रति**—आ प्रति **पाटण-वखतजीनी सेरीमां** रहेला **संघना ज्ञानभंडारनी** छे । एनां पानां ३३५ छे । दरेक पानानी पूठीदीठ ४ थी ६ लीटीओ लखायेली छे अने दरेक लीटीमां १३० थी १४४ अक्षरो छे । प्रतिनी लंबाई ३४। इंचनी अने पहोळाई २। इंचनी छे । प्रति लांबी होई एने त्रण विभागमां लखवामां आवी छे अने तेने बांधवामाटे त्रण विभागना बे अंतरोमां वचमां काणां पाडेलां छे । प्रतिना अंतमां नीचे प्रमाणेनी पुष्पिका छे—

ग्रं० ९५५१ ॥ साहु० आसधरसुत साधु० श्रीरतनसीहसुत तेजपालश्रेयोऽर्थं अयं कल्पवृत्तिपुस्तकं तृतीयषंडं करापितं लिषापितं च ॥ सुभं भवतु ॥

आ पुष्पिकामां संवतनो निर्देश नथी, ते छतां प्रतिनुं स्वरूप जोतां ते ग्रन्थरचनाना नजीकना समयमां लखायेली होवानी संभावना करी शकाय छे । आ प्रति, तेने बांधवानी बेकाळजीने लीधे वळी गयेली छे, ते छतां तेनी स्थिति एकंदर घणी सारी छे । प्रति ताडपत्रीय होई तेनी अमे **ताटी०** संज्ञा राखी छे । मुद्रित तृतीय विभागमां अमे आ प्रतिनी संज्ञा मात्र **ता०** राखी हती, परंतु प्रस्तुत ग्रंथना संशोधनमां भाष्य अने टीका ए उभयनी ताडपत्रीय प्रतोनो उपयोग करेल होवाथी टीका अने भाष्यगाथाना पाठभेदमां बन्नेयना संकेतने समजवामां गरबड न थाय ए माटे आ विभागमां अमे भाष्यनी प्रतिने **ताभा०** संज्ञाथी अने वृत्तिनी प्रतिने **ताटी०** संज्ञाथी ओळखावी छे । आ प्रति अमे ज्ञानभंडारनी संरक्षक शेठ **धर्मचंद अभेचंदनी पेढी** द्वारा मेळवी छे ।

## तृतीयखंडनो विभाग

**भा०** प्रति अने **ताटी०** प्रतिमां त्रीजा खंडनी समाप्ति साथे ज प्रस्तुत महाशास्त्रनी समाप्ति थाय छे । अने **डे०** प्रति अने **कां०** प्रति एक विभागमां लखायेली होवा छतां ए बन्नेय प्रतो खंडात्मक प्रतो उपरथी लखायेली होवाथी एमां खंडसमाप्तिनो उल्लेख ते ते स्थळे नोंधायेलो छे, जे अमे पहेलाना विभागोना "प्रासङ्गिक निवेदन"मां जणावी चूक्या छीए; ते मुजब आ बन्नेय प्रतोमां पण त्रीजा खंडनी समाप्ति साथे ज प्रस्तुत महाग्रन्थनी समाप्ति थाय छे । अर्थात् **भा० ताटी० डे०** अने **कां०** आ चारे प्रतिओमां त्रीजा खंडनी समाप्ति साथे ज निर्युक्ति-भाष्य-वृत्तियुक्त बृहत्कल्पसूत्र महाग्रंथनी समाप्ति थाय छे ।

**मो०** प्रति अने **ले०** प्रति चार खंडमां लखायेल होवाथी एना तृतीयखंडनी समाप्ति मुद्रित पांचमा विभागना १४६९ मा पानामां चोथा उद्देशाना २९ मा सूत्रमां ५५४९ भाष्यगाथानी टीका समाप्त थया पछी थाय छे ( जुओ पृ० १४६९ टिप्पणी १ ) । आ खंडनो विभाग पाडवामां तेना लखनार-लखावनाराओए जरा सरखो य विवेक दाखव्यो नथी । कारण के आ पछी थोडे ज अंतरे चालु सूत्रनी व्याख्या समाप्त थाय छे त्यां विभाग न पाडतां अधूरी सूत्रव्याख्याए विभाग पाडी नाख्यो छे ।

## प्रतिओनी समविषमता

प्रस्तुत चतुर्थ विभागना संशोधनमाटे उपर जणाव्या मुजब तृतीय खंडनी कुल छ प्रतो एकत्र करवामां आवी छे, जे चार वर्गमां वहेंचाइ जाय छे—एक वर्ग **मो० ले० ताटी०** प्रतिनो, बीजो **डे०** प्रतिनो, त्रीजो **भा०** प्रतिनो अने चोथो वर्ग **कां०** प्रतिनो । आ चारे वर्गनी प्रतिओ एक-बीजा वर्गनी प्रतिओथी पाठभेदवाळी छे; ते छतां **मो० ले० ताटी०** वर्गनी प्रतिओ अने **डे०** प्रति परस्पर घणुं खरुं मळती रहे छे, ज्यारे **भा०** प्रति अने **कां०** प्रति परस्पर जुदा वर्गनी तेमज अतिशय पाठभेदवाळी छतां

आपसमां घणी वार मळती रहे छे । आम छतां त्रीजा विभागना "प्रासङ्गिक निवेदन"मां जणाव्या प्रमाणे पाठभेदना विषयमां एक बीजा वर्गनी प्रतिओ केटलीये वार सेळभेळ थइ जाय छे, जे टिप्पणमां आपेला समविषम पाठभेदो उपरथी जोइ शकाशे ।

पाठभेदनी बाबतमां वधारे तरीके अमारे अहीं एटलुं ज उमेरवानुं छे के–पहेला त्रण विभाग करतां आ विभागमां एटले के बीजा त्रीजा उद्देशामां पाठभेदो बहुज ओछा प्रमाणमां आव्या छे अने ए पाठभेदो पण मुख्यत्वे करीने भा० प्रति अने कां० प्रतिना ज छे ।

प्रस्तुत विभागमां अने आ पछीना विभागोमां आपेला सूत्रोना संख्यादर्शक अंको, प्रकृतोनां नाम अने तेनो विभाग वगेरेना संबंधमां अमारे जे कांइ कहेवानुं छे ते अमे छेल्ला विभागमां स्पष्ट रीते जणावीशुं ।

अंतमां अमे एटलुं ज निवेदन करीए छीए के अमारा प्रस्तुत संशोधन वगेरेमां स्खलना नजरे आवे तो विशेषज्ञ विद्वानो क्षमा करे ।

निवेदक—गुरु–शिष्य

**मुनि चतुरविजय–पुण्यविजय**

॥ अर्हम् ॥

# द्वितीयोद्देशकप्रकृतानामनुक्रमः ।



# तृतीयोद्देशकप्रकृतानामनुक्रमः ।



१ यद्यप्यत्र **कृत्स्नाकृत्स्नप्रकृतम्** इति मुद्रितं वर्तते तथाप्यत्र **कृत्स्नाकृत्स्नवस्त्रप्रकृतम्** इति बोद्धव्यम् ॥

२ १०७५ पृष्ठशिरोदेशे **सूत्रम्** इत्यस्योपरिष्टात् **भिन्नाभिन्नवस्त्रप्रकृतम्** इति ज्ञातव्यम् ॥

३ अत्र **यथारत्नाधिकवस्त्रग्रहणप्रकृतम्** इति मुद्रितं विद्यते तत्स्थाने **वस्त्रपरिभाजनप्रकृतम्** इति ज्ञेयम् ॥

१ अत्र **यथारत्नाधिकशय्यासंस्तारग्रहणप्रकृतम्** इति मुद्रितं तत्स्थाने **शय्यासंस्तारकपरिभाजनप्रकृतम्** इति ज्ञेयम् ॥

२ अत्र **सेनाप्रकृतम्** इति मुद्रितं तत्स्थाने **रोधकप्रकृतम्** इति विज्ञेयम् ॥

३ अत्र **अवग्रहक्षेत्रप्रमाणप्रकृतम्** इति मुद्रितं वर्तते तत्स्थाने **अवग्रहप्रमाणप्रकृतम्** इति बोद्धव्यम् ॥

॥ अर्हम् ॥

# बृहत्कल्पसूत्र चतुर्थ विभागनो विषयानुक्रम ।

## द्वितीय उद्देश ।

## तृतीय उद्देशक।



१ आ ठेकाणे मूळमां निर्ग्रन्थ्युपाश्रयप्रवेशप्रकृतम् एम छपायुं छे तेने बदले उपाश्रयप्रवेशप्रकृतम् समजवुं ॥

१ १०७४ मा पृष्ठमां ३९१७ गाथानी व्याख्या पछी ॥ कृत्स्नाकृत्स्नप्रकृतं समाप्तम् ॥ एटलुं उमेरवुं ॥

---

१ १०७५ मा पानानें मथाळे **सूत्रमूना** पहेलां **भिन्नाभिन्नवस्त्रप्रकृतम्** एटलुं उमेरवुं ॥

---

१ आ ठेकाणे मूळमां **यथारत्नाधिकवस्त्रग्रहणप्रकृतम्** छपायुं छे तेने बदले **यथारत्नाधिकवस्त्रपरिभाजनप्रकृतम्** समजवुं ॥

१ आ ठेकाणे मूळमां यथारत्नाधिकशय्यासंस्तारकग्रहणप्रकृतम् छपायुं छे तेने बदले **यथारत्नाधिकशय्यासंस्तारकपरिभाजनप्रकृतम्** समजवुं ॥

---

॥ अर्हम् ॥

पूज्यश्रीभद्रबाहुस्वामिविनिर्मितस्वोपज्ञनिर्युक्त्युपेतं

# बृहत् कल्पसूत्रम् ।

श्रीसङ्घदासगणिक्षमाश्रमणसूत्रितेन लघुभाष्येण भूषितम् ।

आचार्यश्रीमलयगिरिपादविरचितयाऽर्धपीठिकावृत्त्या तपाश्रीक्षेमकीर्त्त्या-
चार्यवरानुसन्धितया शेषसमग्रवृत्त्या समलङ्कृतम् ।

द्वितीय-तृतीयावुद्देशकौ ।

# बृहत्कल्पसूत्र-चतुर्थविभागस्य शुद्धिपत्रम्

| पत्रम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९३६ | २३ | ॥ ॥ | ॥ ३३३१ ॥ |
| ९३६ | २४ | ॥ ३३३१ ॥ | ० |
| ९३८ | १८ | -विषयां यत- | -विषयामयत- |
| ९६७ | २८ | ओरुमण, | ओरुमण |
| १००३ | २८ | सागं च | सागं व |
| १०१५ | १८ | गुरू | गुरू, |
| १०१५ | २४ | चेइयकड- | चेइय कड- |
| १०३० | ६ | अज्जो ! | अज्जो !, |
| १०५३ | १९ | दुल्लभें, | दुल्लमे, |
| १०७८ | १३ | यावत | यावत् |
| १०९९ | १५ | भीयते | मीयते |
| १११५ | १२ | दर्घ्य- | दैर्घ्य- |
| ११२२ | १६ | षणम् । | षणम् ॥ ४११८ ॥ |
| ११२२ | १६ | ॥ ४११८ ॥ | ० |
| ११७८ | २१ | कोप्परपट्ठ- | कोप्पर पट्ठ- |
| १२५० | १४ | एषा | ० |
| १२५० | १५ | पुरा- | एषा पुरा- |
| १२८० | २८ | दाईय- | दाइय- |
| १२८९ | २१ | 'भैक्षे' | भैक्षे |
| १२८९ | २४ | वईयासु | वइयासु |
| १३०५ | २५ | ४७७१ | ४८७१ |

॥ अर्हम् ॥

## ॥ प्रकृतनाम्नां संशोधनम् ॥

पत्र १०२३ मध्ये **नि र्ग्र न्थ्यु पा श्र य प्र वे श प्र कृ त म्** इत्यस्य स्थाने **उ पा श्र य प्र वे श प्र कृ त म्** इति ज्ञेयम् ॥

पत्रं १०५० पंक्तिः २२ **॥ निर्ग्रन्थ्युपाश्रयप्रवेशप्रकृतं समाप्तम् ॥** इत्यस्य स्थाने **॥ उपाश्रयप्रवेशप्रकृतं समाप्तम् ॥** इति ज्ञेयम् ॥

पत्रं १०६७ पङ्क्तिः १ कृ त्स्ना कृ त्स्न प्र कृ त म् इत्यस्य स्थाने
कृ त्स्ना कृ त्स्न व स्त्र प्र कृ त म् इति ज्ञेयम् ॥

पत्र १०७४ मध्ये ३९१७ गाथाव्याख्यानन्तरम्—

**कृत्स्नाकृत्स्नवस्त्रप्रकृतं समाप्तम् ॥** इति ज्ञेयम् ॥

पत्र १०७५ शिरोदेशे "सूत्रम्" इत्यस्योपरि **भि न्ना भि न्न व स्त्र प्र कृ त म्** इति ज्ञेयम् ॥

पत्रं ११६७ पङ्क्तिः ६ य था र त्ना धि क व स्त्र ग्र ह ण प्र कृ त म् इत्यस्य स्थाने **य था र त्ना धि क व स्त्र प रि भा ज न प्र कृ त म्** इति ज्ञेयम् ॥

पत्रं ११८० पङ्क्तिः २९ **॥ यथारत्नाधिकवस्त्रग्रहणप्रकृतं समाप्तम् ॥** इत्यस्य स्थाने **॥ यथारत्नाधिकवस्त्रपरिभाजनप्रकृतं समाप्तम् ॥** इति ज्ञेयम् ॥

पत्रं ११८१ पङ्क्तिः १ य था र त्ना धि क श य्या सं स्ता र ग्र ह ण प्र कृ त म् इत्यस्य स्थाने य था र त्ना धि क श य्या सं स्ता र प रि भा ज न प्र कृ त म् इति ज्ञेयम् ॥

पत्रं ११९२ पङ्क्तिः १२ **॥ यथारत्नाधिकशय्यासंस्तारग्रहणप्रकृतं समाप्तम् ॥** इत्यस्य स्थाने **॥ यथारत्नाधिकशय्यासंस्तारपरिभाजनप्रकृतं समाप्तम् ॥** इति ज्ञेयम् ॥

पत्रं १२९८ पङ्क्तिः १६ **अ व ग्र ह क्षे त्र प्र मा ण प्र कृ त म्** इत्यस्य स्थाने
**अ व ग्र ह प्र मा ण प्र कृ त म्** इति ज्ञेयम् ॥



॥ श्रीमद्विजयानन्दसूरिवरेभ्यो नमः ॥

### पूज्यश्रीभद्रबाहुस्वामिविनिर्मितस्वोपज्ञनिर्युक्त्युपेतं

# बृहत् कल्पसूत्रम् ।

### श्रीसङ्घदासगणिक्षमाश्रमणसूत्रितेन लघुभाष्येण भूषितम् आचार्यश्रीमलयगिरिपादविरचितयाऽर्धपीठिकावृत्त्या तपाश्रीक्षेमकीर्त्याचार्यवरानुसन्धितया शेषसमग्रवृत्त्या समलङ्कृतम् ।

## द्वितीय उद्देशः ।

### उ पा श्र य प्र कृ त म्

**बीजसूत्राणि १-३**

व्याख्यातः प्रथम उद्देशकः, सम्प्रति द्वितीय[1]: प्रारभ्यते, [2]तस्य चेदमादिसूत्रम्—

**उवस्सयस्स अंतोवगडाए सालीणि वा वीहीणि वा मुग्गाणि वा मासाणि वा तिलाणि वा कुलत्थाणि वा गोहूमाणि वा जवाणि वा जवजवाणि वा [3]उक्खित्ताणि वा विक्खित्ताणि वा वि[4]इकिन्नाणि वा विप्पकिन्नाणि वा, नो कप्पइ निग्गंथाण वा निग्गंथीण वा अहालंदमवि वत्थए १ ॥**

अथास्य सूत्रस्य कः सम्बन्धः? इत्याह—

एरिसए खेत्तम्मी, उवस्सए केरिसम्मि वसितव्वं ।
पुव्वुत्तदोसरहिते, बीयादिजढेस संबंधो ॥ ३२९० ॥

'ईदृशे' प्रथमोद्देशकान्त्यसूत्रवर्णिते आर्यक्षेत्रे विहरद्भिरुपाश्रये कीदृशे वस्तव्यम्? इति चिन्तायामनेन सूत्रेणोपवर्ण्यते । पूर्वम्—आद्योद्देशके ये उपाश्रयस्य दोषाः—सागारिकत्वादय

---

१ **°य आर°** ताटी० मो० ले० ॥ २ **अस्य** त० डे० ॥

३ डे० प्रतिं विहाय सर्वास्वपि प्रतिषु—**उक्खित्ताणि वा विक्खित्ताणि वा** इति पाठो दृश्यते । टीका पुनरेतत्पाठानुसारेण भा० प्रतावेव वर्त्तते । दृश्यतां पत्रं ९२४ टिप्पणी ३ ॥

४ भा० कां० तामू० विनाऽन्यत्र—**विइकिन्ना°** ताटी० मो० ले० । **विकिन्ना°** तामू० ॥

उक्ताः ( सूत्रम् २५-२९ ) तैः रहितो बीजादिपरित्यक्तश्च य उपाश्रयस्तत्र वस्तव्यमिति । एष पूर्वसूत्रेण सहास्य सम्बन्धः ॥ ३२९० ॥

**अहवा पढमे सुत्तम्मि पलंबा वण्णिया ण भोत्तव्वा ।**
**तेसिं चिय रक्खट्ठा, तस्सहवासं निवारेति ॥ ३२९१ ॥**

'अथवा' इति सम्बन्धस्य प्रकारान्तरताद्योतकः । प्रथमोद्देशके 'प्रथमे' प्रलम्बसूत्रे ( गा० ८४९-५७ ) सविस्तरं प्रलम्बान्युपवर्णितानि, तानि च न भोक्तव्यानीति प्रतिषिद्धानि; अतो द्वितीयोद्देशकेऽपि प्रथमसूत्रे 'तेषामेव' प्रलम्बानां रक्षार्थं तैः-बीजाख्यैः प्रलम्बैः सह वासम्-अवस्थानं निवारयति ॥ ३२९१ ॥

**अवि य अणंतरसुत्ते, उवस्सतो अधिकतो णिसिं जत्थ ।**
**समणाण न निग्गंतुं, कप्पति अह तेण जोगो उ ॥ ३२९२ ॥**

'अपि च' इत्यभ्युच्चये, न केवलं पूर्वोक्तं सम्बन्धद्वयम्, तृतीयोऽपि सम्बन्धोऽस्तीति भावः । पूर्वसूत्रस्याधस्ताद् 'अनन्तरसूत्रे' "नो कप्पइ निग्गंथस्स एगाणियस्स राओ वा वियाले वा" ( उ० १ सू० ४९ ) इत्यादिलक्षणे उपाश्रयोऽधिकृतः, यत्रैकाकिनां श्रमणानां 'निशि' रात्रौ विचारभूम्याद्यर्थं न निर्गन्तुं कल्पते । 'अथ' अयं तेन सूत्रेण सह 'योगः' सम्बन्धः ॥३२९२॥

इत्यनेकैः सम्बन्धैरायातस्यास्य व्याख्या—उपाश्रयस्य या 'अन्तर्वगडा' वगडाया अभ्यन्तरम्, तच्च प्रतिश्रयमध्यं वा स्यात् प्राङ्गणं वा[3] । तत्र "सालीणि व" त्ति शालिबीजानि वा "वीहीणि व" त्ति व्रीहिबीजानि वा, एवं मुद्ग-माष-तिल-कुलत्थ-गोधूम-[ यव- ]यवयवैरपि तत्तद्बीजान्युच्यन्ते, यवयवाः-यवविशेषास्तद्बीजानि वा । एतानि बीजानि यत्रोपाश्रये उत्क्षिप्तानि वा विक्षिप्तानि वा व्यतिकीर्णानि वा विप्रकीर्णानि वा तत्र नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा यथालन्दमपि वस्तुम् । इह यथालन्दं त्रिधा—जघन्यं मध्यममुत्कृष्टं च । यावता कालेनोदकार्द्रो हस्तः शुष्यति तद् जघन्यम्, पञ्चरात्रिन्दिवान्युत्कृष्टम्, तयोरपान्तराले सर्वमपि मध्यमम् । अत्र जघन्य-मध्यमयोः सूत्रावतारः । अपिशब्दः सम्भावनायाम् । जघन्यमपि मध्यममपि वा यथालन्दं नो कल्पते वस्तुम्, किं पुनरुत्कृष्टम् ? इति भावः । अत्र चोत्क्षिप्तादीनि पदानि भाष्यगाथयैव व्याख्यास्यन्त इत्यभिप्रायेणात्र न व्याख्यातानीति सूत्रसङ्क्षेपार्थः ॥

अथ **निर्युक्तिविस्तरः**—

**नामं ठवणा दविए, भावे य उवस्सओ मुणेयव्वो ।**
**एएसिं नाणत्तं, वोच्छामि अहाणुपुव्वीए ॥ ३२९३ ॥**

नामोपाश्रयः स्थापनोपाश्रयो द्रव्योपाश्रयो भावोपाश्रयश्चेति उपाश्रयश्चतुर्द्धा मन्तव्यः । एतेषा-

---

१ वासमपि निवा° भा० ॥ २ यत्र एकस्य-एकाकिनः श्रमणस्य 'निशि' भा० ॥
३ वा । तत्र शालयो वा व्रीहयो वा मुद्गा वा माषा वा तिला वा कुलत्था वा गोधूमा वा यवा वा यवयवा वा । वाशब्दाः सर्वेऽपि विकल्पार्थाः । सूत्रे च प्राकृतत्वान्नपुंसकनिर्देशः । यवयवा यवविशेषाः, शेषाः सुप्रसिद्धाः । एतानि धान्यानि यत्रोपाश्रये उत्कीर्णानि वा विकीर्णानि वा व्यतिकीर्णानि भा० ॥

मुपाश्रयाणां 'नानात्वं' विशेषमहमानुपूर्व्या वक्ष्यामि ॥ ३२९३ ॥

तत्र नाम-स्थापने क्षुण्णत्वादनादृत्य द्रव्य-भावोपाश्रयौ प्रतिपादयति—

**दव्वम्मि ऊ उवस्सओ, कीरइ कड वुत्थमेव सुन्नम्मि ।**
**भावम्मि निसिट्ठे संजएसु दव्वम्मि इयरेसु ॥ ३२९४ ॥**

'द्रव्ये तु' द्रव्यविषयः पुनरुपाश्रयो यः संयतार्थं 'क्रियते' क्रियमाणो वर्त्तते, कृतो वा[1] परमद्यापि न संयतेभ्यो वितीर्यते, अथवा यो गृहस्थैरात्मार्थं निष्पादितः परं तत्र संयता मासकल्पं वर्षाकल्पं वा "वुत्थ" त्ति उषित्वा अन्यत्र गताः, साम्प्रतं स उपाश्रयः शून्यस्तिष्ठति एष द्रव्योपाश्रयः । भावोपाश्रयो नाम यः संयतेभ्यः 'निसृष्टः' प्रदत्तः, तैः परिभुज्यमान इत्यर्थः । यः पुनः 'इतरेषां' पार्श्वस्थादीनां निसृष्टः सोऽपि द्रव्योपाश्रयो विज्ञेयः ।

आह च **बृहद्भाष्यकृत्**—

जो समणट्ठाए कतो, वुत्था वा आसि जत्थ समणा उ ।
अहवा दव्वउवस्सओ, पासत्थादीपरिग्गहिओ ॥　　　॥ ३२९४ ॥

अथोपाश्रयस्यैकार्थिकान्याह—

**उवसग पडिसग सेज्जा, आलय वसधी णिसीहिया ठाणे ।**
**एगट्ठ वंजणाई, उवसग वगडाय निक्खेवो ॥ ३२९५ ॥**

उपेत्य- आगत्य साधुभिराश्रीयत इत्युपाश्रयः । एवं प्रतिश्रीयत इति प्रतिश्रयः । शेरते साधवोऽस्यामिति शय्या । आलीयन्ते साधवोऽत्रेत्यालयः । वसन्ति साधवोऽस्यामिति वसतिः । निषेधः—गमनादिव्यापारपरिहारः स प्रयोजनमस्याः तमर्हतीति वा नैषेधिकी । तिष्ठन्ति साधवोऽत्रेति स्थानम् । एतान्येकार्थानि 'नानाव्यञ्जनानि' पृथगक्षराण्युपाश्रयस्य नामानि । अथ वगडाया निक्षेपः कर्त्तव्यः ॥ ३२९५ ॥ तमेवातिदेशेनाह—

**एमेव होति वगडा, चउव्विहा सा उ वतिपरिक्खेवो ।**
**दव्वम्मि तिप्पगारा, भावे समणेहि भुज्जंती ॥ ३२९६ ॥**

'एवमेव' उपाश्रयवद् वगडा अपि नामादिभेदात् चतुर्विधा भवति । तत्र द्रव्यवगडा गृहसम्बन्धी वृतिपरिक्षेपो मन्तव्यः । सा च त्रिप्रकारा, तद्यथा—सचित्ता अचित्ता मिश्रा च । इयं त्रिप्रकाराऽपि यथा **मासकल्पप्रकृते** द्रव्यपरिक्षेपः (गा० ११२२-२३) उक्तस्तथैव वक्तव्या । 'भावे' भाववगडा 'श्रमणैः' साधुभिर्यो वृतिपरिक्षेपः परिभुज्यते सा मन्तव्या[2] ॥ ३२९६ ॥ ◁ अथ कोऽसावुपाश्रयो यस्यैषा वगडा वर्णिता ? उच्यते—▷[3]

**वलया कोट्ठागारा, हेट्ठा भूमी य होइ रमणिज्जा ।**

---

१ °तार्थं क्रियमाणः कृतो वा वर्त्तते, स चाद्या° भा० । "दव्वम्मि तु० गाथा । कीरमाणो वा कतो वा संजतेहिं अपरिग्गहितो ।" इति चूर्णौ । "दव्वम्मि उ० गाहा । जो संजयट्ठाए उवस्सओ कीरइ कतो वा, जो ण ताव णिसिरिज्जइ ।" इति विशेषचूर्णौ ॥

२ °वति । सा तु वगडा वृतिपरिक्षेपो मन्तव्यः । तत्र द्रव्यवगडा त्रिप्रकारा, भा० ॥

३ ◁ ▷ एतच्चिह्नमध्यगतमवतरणमिदं भा० नास्ति ॥

**बीएहिँ विप्पमुक्को, उवस्सओ एरिसो होइ ॥ ३२९७ ॥**

'वलयानि' कटपल्यादीनि 'कोष्ठागाराणि च' सुप्रतीतानि यत्र भवन्ति, अधस्ताच्च तत्र भूमिर्भवति 'रमणीया' बीजाद्यभावेन प्रशस्या, ईदृश उपाश्रयो बीजैर्विप्रमुक्तो भवति ॥३२९७॥

इदमेव व्याख्यानयति—

**कडपल्लाणं सण्णा, तणपल्लाणं च देसितो वलया ।**
**णिप्परिसाडिमभुंजंतगा य कयभूमिकम्मंता ॥ ३२९८ ॥**

'देशीतः' देशीभाषामाश्रित्य कटपल्यानां तृणपल्यानां च वलयानीति संज्ञा।[3] ◁ तेषां मालेषु बद्धेषु धान्यानि क्रियन्ते ▷। तानि च यत्र 'निःपरिशाटीनि' परिशाटिरहितानि, 'अभुज्यमानानि' अव्यापार्यमाणानि, तथा कृतं भूमिकर्म—छगणलेपनादिकम् अन्तेषु—प्रान्तप्रदेशेषु येषां तानि कृतभूमिकर्मान्तानि, अधस्ताच्च भूमिका बीजादिविप्रमुक्ता, ईदृशे प्रतिश्रये वस्तुं कल्पते ॥ ३२९८ ॥ अथ कोष्ठागाराणि व्याचष्टे—

**चाउस्सालघरेसु व, जत्थोव्वर-कोट्ठएसु धण्णाइं ।**
**निच्चट्ठइतमभोगा, तेसु निवासं न वारेइ ॥ ३२९९ ॥**

अथवा चतुःशालादिगृहेषु यत्रोपाश्रयेऽपवरकेषु वा इष्टकादिमयेषु कोष्ठकेषु वा मृत्तिकामयेषु धान्यानि 'नित्यस्थगितानि' सदापिहितानि 'अभोग्यानि' परिभोगरहितानि तिष्ठन्ति तत्र ये शेषा अपवरकाः कोष्ठका वा तेषु निवासं न वारयति ॥ ३२९९ ॥

क पुनस्तर्हि वस्तुं न कल्पते ? इत्याह—

**सालीहिं वीहीहिं, तिल-कुलत्थेहिं विप्पकिण्णेहिं ।**
**आदिण्णे वितिकिण्णे, अहलंद ण कप्पती वासो ॥ ३३०० ॥**

शालिभिर्व्रीहिभिस्तिलैः कुलत्थैः उपलक्षणत्वाद् मुद्ग-माषादिभिश्च विप्रकीर्णैराकीर्णैर्व्यतिकीर्णैः उपलक्षणत्वाद् विकीर्णैश्च सङ्कुले उपाश्रये निर्ग्रन्थानां निर्ग्रन्थीनां च यथालन्दमपि कालं न कल्पते वासः। एषा **श्रीभद्रबाहुस्वामिकृता गाथा**। अनया सूत्रपदानि संगृहीतानि—आकीर्णग्रहणेन च उत्क्षिप्तपदं विकीर्णग्रहणे तु विक्षिप्तपदं गृहीतं मन्तव्यम् ॥ ३३०० ॥

---

१ **भूमिरतिरमणीया बीजादिविप्रमुक्ता। ईदृश** भा० ॥ २ **देशविशेषमा°** भा० ॥

३ "कडपल्ल त्ति वा धण्णसाल त्ति वा तणपल्ल त्ति वा वलय त्ति वा एगट्ठं, तेसिं माला बद्धा, तेसु धन्नाणि कीरंति" इति **चूर्णौ विशेषचूर्णौ** च ॥ ४ ◁ ▷ एतदन्तर्गतः पाठः भा० नास्ति ॥ ५ **°न्तानि, ईदृशानि वलयानि यत्र मालोपरि भवन्ति, अधस्ता°** भा० ॥

६ "उव्वरओ त्ति वा कोट्ठगो त्ति वा एगट्ठं" **विशेषचूर्णौ** ॥

७ "सालीहिं० गाहा **पुरातना** ॥ एतीसे विभासागाहाओ तिन्नि—सालीहि व० गाहा कण्ठ्या ॥ ओखित्त० गाहा कण्ठ्या ॥ तिविहं व० गाहा कण्ठ्या ॥" इति **विशेषचूर्णौ** ॥

८ **'विप्रकीर्णैः' इतस्ततो विक्षिप्तैः 'आकीर्णे' एकजातीयैर्धान्यैरभिव्याप्ते 'व्यतिकीर्णे' तैरेवानेकजातीयैः सङ्कुले** भा० ॥

९ **°था ॥ ३३०० ॥ अथैनामेव भाष्यकारो व्याख्यानयति—तत्र परः प्राह।** भा० ॥

अत्र परः प्राह—ननु जातिवाचकाः शब्दाः 'सम्पन्नः शालिः' इत्यादिवदेकवचननिर्देशेन व्यवह्रियमाणा उपलभ्यन्ते, ततः किमर्थमत्र "शालिभिर्व्रीहिभिः" इत्यादौ बहुवचनेन निर्देशः कृतः ? उच्यते—

**सालीहिँ व वीहीहिँ व, इति उत्ते होति एतदुत्तं तु ।**
**सालीमादीयाणं, होंति पगारा बहुविहा उ ॥ ३३०१ ॥**

शालिभिर्वा[1] व्रीहिभिर्वा 'इत्युक्ते' एवं बहुवचननिर्देशे कृते एतद् 'उक्तम्' अभिहितं भवति—शाल्यादीनां धान्यानां बहुविधाः प्रकारा भवन्ति । तद्यथा—कलमशालिः रक्तशालिर्महाशालिरित्यादि ॥ ३३०१ ॥ उत्क्षिप्तादिपदानां[2] व्याख्यानमाह[3]—

**उक्खित्त[4] भिन्नरासी, विक्खित्ते[5] तेसि होति संबंधो ।**
**वितिकिण्णे सम्मेलो, विपइण्णे संथडं जाणे ॥ ३३०२ ॥**

उत्क्षिप्तानि[6] नाम येषां धान्यानां राशयो भिन्नाः । विक्षिप्तानि[7] नाम त एव धान्यराशयो भिन्नाः परमेकतः सम्बद्धाः, अत एवाह—विक्षिप्तपदे[8] व्याख्यायमाने 'तेषां' भिन्नराशीनां सम्बन्धो भवति । व्यतिकीर्णानि तु तानि सर्वाण्यपि धान्यान्येकतः सम्मिलितानि, आह च—व्यतिकीर्णपदे तेषां धान्यानां सम्मीलको भवति । विप्रकीर्णानि तु सर्वतः संस्तृतानि पुष्पप्रकरवत्, अत एवाह—विप्रकीर्णपदे 'संस्तृतं' विप्रकिरणं जानीयात् ॥ ३३०२ ॥

अथ यथालन्दपदं व्याचष्टे—

**तिविहं च अहालंदं, जहन्नयं मज्झिमं च उक्कोसं ।**
**उदउल्लं च जहण्णं, पणगं पुण होइ उक्कोसं ॥ ३३०३ ॥**

'त्रिविधं च' त्रिप्रकारं यथालन्दम्, तद्यथा—जघन्यं मध्यममुत्कृष्टं च । तत्रोदकार्द्रः करो यावता कालेन शुष्यति तावन्मात्रं जघन्यम् । 'पञ्चकं' पञ्चरात्रिन्दिवानि पुनरुत्कृष्टम् । अर्थादापन्नं तयोरपान्तरालवर्ति सर्वमपि मध्यमम् ॥ ३३०३ ॥

अथात्र बीजाकीर्णे प्रतिश्रये तिष्ठतां प्रायश्चित्तमाह—

**बीयाईआइण्णे, लहुओ मासो उ ठायमाणस्स ।**
**आणादिणो अ दोसा, विराहणा संजमाऽऽताए ॥ ३३०४ ॥**

"बीयाइ" त्ति आदिशब्दः स्वगतानेकभेदसूचकः । ततश्च बीजैः—शाल्यादिभेदादनेकप्रकारैराकीर्णे उपाश्रये तिष्ठत आचार्यादेर्लघुको मासः प्रायश्चित्तम्, अयं च तपः-कालविशेषितः । तद्यथा—आचार्यस्य तपसा कालेन च गुरुकः, उपाध्यायस्य तपसा गुरुकः, वृषभस्य कालेन गुरुकः, भिक्षोस्तपसा कालेन च लघुकः । एतत् प्रत्येकबीजविषयं प्रायश्चित्तमुक्तम् । अनन्तबीजेष्वप्येवमेव । नवरं मासलघुस्थाने मासगुरुकम् । संयतीनामपि प्रवर्त्तिनी-गणावच्छेदिन्य-

---

१ °लिभिर्व्रीहिभिश्च 'इत्यु° भा० ॥ २ उत्कीर्णादिप° भा० ॥ ३ एतदग्रे ताटी० मो० ले० ग्रन्थाग्रम्—१०० वर्तते ॥ ४ उक्खित्त भि° भा० कां० चूर्णौ विशेषचूर्णौ च ॥ ५ विक्खित्ते ते° भा० त० डे० कां० । विकेण्णे ते° ताभा० ॥ ६ उत्कीर्णानि नाम भा० ॥ ७ विकीर्णानि नाम भा० ॥ ८ विकीर्णपदे व्या° भा० ॥

भिषेका-भिक्षुणीनामेवमेव वक्तव्यम् । आज्ञादयश्च दोषा अत्र भवन्ति । तथा विराधना संयमे आत्मनि च मन्तव्या । इयं द्विधाऽपि पुरस्तादभिधास्यते ॥ ३३०४ ॥

प्रकारान्तरेण प्रायश्चित्तमेवाह—

**उक्खित्तमाइएसुं, थिरा-ऽथिरेसुं तु ठायमाणस्स ।**
**पणगादी जा भिण्णो, विसेसितो भिक्खुमाईणं ॥ ३३०५ ॥**
**साहारणम्मि गुरुगा, दसादिगं मासें ठाति समणीणं ।**
**मासो विसेसिओ वा, लहुओ साहारणे गुरुगो ॥ ३३०६ ॥**

उत्क्षिप्तादिपु पदेपु स्थिरा-ऽस्थिरभेदभिन्नेपु तिष्ठतां भिक्षुप्रभृतीनां पञ्चकादारभ्य भिन्नमासं यावत् तपः-कालविशेपितं प्रायश्चित्तम् । तद्यथा—उत्क्षिप्तेषु स्थिरसंहननिपु बीजेपु तिष्ठति लघुपञ्च‹रात्रिन्दिवानि, अस्थिरसंहननिपु लघु›दशरात्रिन्दिवानि; विक्षिप्तेपु स्थिरेपु तिष्ठति लघुदशरात्रिन्दिवानि, अस्थिरेपु लघुपञ्चदशरात्रिन्दिवानि; व्यतिकीर्णेषु स्थिरेपु तिष्ठति लघुपञ्चदशरात्रिन्दिवानि, अस्थिरेपु लघुविंशतिरात्रिन्दिवानि; विप्रकीर्णेषु स्थिरेपु तिष्ठति लघुविंशतिरात्रिन्दिवानि, अस्थिरेपु लघुपञ्चविंशतिरात्रिन्दिवानि । एतत् सर्वमपि प्रायश्चित्तं भिक्षोस्तपसा कालेन च लघुकम्, वृपभस्य कालेन गुरुकम्, उपाध्यायस्य तपसा गुरुकम्, आचार्यस्य तपसा कालेन च गुरुकम् । एतत् प्रत्येकबीजविषयं प्रायश्चित्तमुक्तम् ॥ ३३०५ ॥

साधारणबीजेपु त्वेतदेव गुरुकं कर्तव्यम्, गुरुपञ्चकादारभ्य गुरुपञ्चविंशतिकान्तमित्यर्थः । श्रमणीनां तु लघुदशरात्रिन्दिवेभ्यः प्रारब्धं लघुमासे तिष्ठति । तत्रापि भिक्षुण्या उभयलघुकम्, अभिपेकायाः कालगुरुकम्, गणावच्छेदिन्यास्तपोगुरुकम्, प्रवर्त्तिन्या उभयगुरुकम् ।

१ उक्खित्तमा° मो० ले० विना ॥ २ उत्कीर्णादि° भा० ॥

३ "उक्खिण्ण० गाधाद्वयम । उक्खत्तेसु थिरेसु भिक्खू ठाति ना, अथिरेसु १०· विक्खिण्णेसु थिरेसु १०, अथिरेसु १०ना; वितिकिण्णेसु थिरेसु १०ना, अथिरेसु थः विप्पतिण्णेसु थिरेसु थः अथिरेसु थना । एतं भिक्खुस्स उभयलहुं, वसभस्स कालगुरुं, अभिसेतस्स तवगुरुं, आयरियस्स उभयगुरुं । एतं परित्तएसुं । एतं चेव गुरुगं पच्छित्त संजतीणं दससु आरद्धं मासलहुए ठाति, भिक्खुणि-अभिसेयपत्त-गणावच्छेइणी-पवत्तिणीणं । एतं परित्तेसु । अणंतेसु एतं चेव गुरुगं । एसा संजमविराधणा ॥" इति **चूर्णिः** ।

"उक्खित्तेसु अथिरेसु ठायंतस्स पंचराइंदिया, थिरेसु दस; विक्खिण्णेसु अथिरेसु दस, थिरेसु पनरस; वितिगिण्णेसु अथिरेसु पनरस, थिरेसु वीस; विप्पकिण्णेसु अथिरेसु वीस, थिरेसु पणुवीस । एवं भिक्खुस्स दोहि लहुया, वसभस्स कालगुरु, अभिसेयस्स तवगुरु, आयरियस्स उभयगुरु । एयं परित्तेसु । संजईण दससु आरद्धं मासलहुए ठाति । भिक्खुणी अभिसेयपत्ता गणावच्छेइणी पवत्तिणी एयासिं तव-कालविसेसो । एतं परित्तेसु । अणंतेसु एए चेव पायच्छित्ता । अहवा सव्वेसिं चेव उक्खिण्णेसु मासलहुं उभयलहुं, विक्खिण्णेसु कालगुरुं, वितिकिण्णेसु तवगुरुं, विप्पकिण्णेसु उभयगुरुं । एतं परित्ते । अणंते एतं चेव मासगुरुं । आणादी दोसा । विराहणा दुविहा संजमा-ऽऽयाए । संजमविराहणा णितो वा अतिंतो वा बीयकायसंघट्टं करेइ तण्णिष्फण्णं, जे य तदस्सिया पाणा ॥" इति **विशेषचूर्णिः** ॥

४ उत्कीर्णेषु स्थि° भा० ॥ ५ ‹ › एतच्चिह्नमध्यगतः पाठः कां० एव वर्त्तते ॥

एवं प्रत्येकबीजविषयमुक्तम् । अनन्तबीजेषु त्वेवमेव गुरुदशरात्रिन्दिवेभ्यः प्रारब्धं गुरुमासान्तं वक्तव्यम् । अथवा भिक्षुप्रभृतीनां चतुर्णामप्यविशेषेणोत्कीर्णादिषु चतुर्ष्वपि तपः-कालविशेषितो मासलघुकः, तद्यथा—उत्कीर्णेषु तपसा कालेन च लघुकः, विकीर्णेषु कालेन गुरुकः, व्यतिकीर्णेषु तपसा गुरुकः, विप्रकीर्णेषु तपसा कालेन च गुरुकः । अनन्तबीजेष्वप्युत्कीर्णादिष्वेवमेव तपः-कालविशेषितं मासगुरुकम् । द्विविधा च विराधना संयमा-ऽऽत्मविषयाऽत्र मन्तव्या । तत्र संयमविराधना निर्गच्छन् वा प्रविशन् वा बीजानां सङ्घट्टनं परितापनमपद्रावणं वा कुर्यात्, ये च तदाश्रिताः प्राणिनस्तेषामपि सङ्घट्टनादिकं कुर्यात् तन्निष्पन्नं प्रायश्चित्तम् ॥ ३३०६ ॥

अथात्मविराधनां भावयति—

**सालि-जव अच्छि सालुग, णिस्सरणं मास-मुग्गमादीसु ।**
**ससू गुज्झ कुतूहल, विप्पइरण मास णिस्सरणं ॥ ३३०७ ॥**

तत्र स्थितानां साधूनां शालि-यवानां शालुकान्यक्ष्णोः प्रविशन्ति । तैश्च प्रविष्टैश्चक्षुषी अनागाढमागाढं वा परिताप्येते । तथा मुद्ग-माषादिषु विप्रकीर्णेषु गमना-ऽऽगमने विदधानानां 'निस्सरणं' प्रस्खलनं भवति, ततश्च हस्तभङ्गादयो दोषाः । अत्र **श्वश्रूदृष्टान्तः**—

एगो अगारो चिंतेइ—जइ सस्सुगाए गुज्झोरुगाइ पेच्छामि । ताहे मासा अइगमण-निग्गमणपहे विप्पकिन्ना । सा तत्थ वच्चंती फिलसिया गलियवसणा उत्ताणिया पडिया ॥

इदमेवाह—"सस्सू" इत्यादि । श्वश्र्वाः सम्बन्धि यद् गुह्यं तदवलोकने यत् कुतूहलं तद्वशाद् माषाणां विप्रकिरणम्, ततस्तस्याः श्वश्र्वाः 'निस्सरणं' प्रस्खलनमभवत् । एवं तत्र स्थितानां साधूनामप्यात्मविराधना भवेत् ॥ ३३०७ ॥ ◁ द्वितीयपदमाह—▷

**बिइयपय कारणम्मि, पुव्विं वसभा पमज्ज जतणाए ।**
**विकिखरणम्मि वि लहुओ, तत्थ वि आणादिणो दोसा ॥ ३३०८ ॥**

द्वितीयपदे 'कारणे' अध्वनिर्गमनादौ शुद्धोपाश्रयालाभे बीजाकीर्णेऽप्युपाश्रये तिष्ठन्ति । कथम् ? इत्याह—पूर्वं वृषभा दण्डप्रोञ्छनकं गृहीत्वा तत्र गत्वा यतनया यथा तेषां बीजानां परितापनादि न भवति तथा प्रमृज्य ततः सबाल-वृद्धमपि गच्छमानीय यथालन्दं कालं तिष्ठन्ति । यदि प्रमार्जनां विदधाना बीजानां विकिरणम्—इतस्ततो विक्षेपणं कुर्वते तदा लघुमासः प्रायश्चित्तम् । तत्राप्यविधिप्रमार्जने आज्ञादयो दोषाः ॥ ३३०८ ॥ अथैतदेव स्पष्टयति—

**गीया पुरा गंतु समिक्खियम्मि, थिरे पमज्जित्तुमहाथिरे वा ।**
**साहट्टुमेगंति वसंति लंदं, उक्कोसयं जाणिय कारणं वा ॥ ३३०९ ॥**

केचिदध्वनिर्गतादयः साधवो विवक्षितं ग्रामं प्राप्ताः, तत्र च गीतार्थाः पुरतो गत्वा त्रिकृत्वः शुद्धां वसतिं समीक्षन्ते—प्रत्युपेक्षन्ते । यदि तथासमीक्षिते न प्राप्यते तदा शाल्यादिबीजेषूत्कीर्णेषु प्रथमं स्थिरसंहननिषु तिष्ठन्ति, तदभावेऽस्थिरसंहननिष्वपि । तानि च

१ कां० विनाऽन्यत्र—**स्वयमेव** भा० । **त्वेनमेव** ताटी० त० डे० मो० ले० ॥
२ °**प्युत्क्षिप्तादिष्वे**° भा० ॥ ३ **सुसू** ताभा० विना ॥ ४ °**क्षुषोरनागाढमागाढं वा परिताप्यते** भा० ॥ ५ ◁ ▷ एतन्मध्यगतमवतरणं भा० नास्ति ॥ ६ °**षां जीवानां परि**° मो० ले० ॥

बीजानि यतनया प्रमृज्य तत एकान्ते संहरन्ति—संस्थापयन्ति । संहृत्य च तत्र जघन्यं वा मध्यमं वा यथालन्दं वसन्ति । 'कारणं वा' अध्वपरिश्रमादिकं ज्ञात्वोत्कृष्टमपि यथालन्दं वसन्ति । अत्र पाठान्तरम्—"साहट्टुमेगं तु" त्ति तानि बीजानि संहृत्य ततः 'एकम्' इति जघन्यं यथालन्दं वसन्ति, शेषं प्राग्वत् । उत्कीर्णानामभावे विकीर्णेषु, तेषामभावे व्यतिकीर्णेषु, तदप्राप्तौ विप्रकीर्णेष्वपि तिष्ठन्ति । तत्रापि प्रथमं प्रत्येकेषु, ततः साधारणेष्वपि । अथोत्क्रमेण तिष्ठन्ति ततो मासलघु । संयतीनामप्येवमेव द्वितीयपदं मन्तव्यम् ॥ ३३०९ ॥

सूत्रम्—

**अह पुण एवं जाणिज्जा—नो उक्खित्ताइं नो विक्खित्ताइं नो विइकिण्णाइं नो विप्पकिण्णाइं रासिकडाणि वा पुंजकडाणि वा भित्तिकडाणि वा कुलियाकडाणि वा लंछियाणि वा मुद्दियाणि वा पिहिताणि वा कप्पइ निग्गंथाण वा निग्गंथीण वा हेमंतगिम्हासु वत्थए २ ॥**

⊲ अथ पुनरेवं जानीयात्—तानि शाल्यादीनि बीजानि तत्रोपाश्रये नो उत्क्षिप्तानि नो विक्षिप्तानि नो विकीर्णानि नो विप्रकीर्णानि, किन्तु राशीकृतानि वा पुञ्जीकृतानि वा भित्तिकृतानि वा कुलिकाकृतानि वा लाञ्छितानि वा मुद्रितानि वा पिहितानि वा, तत एवं कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा हेमन्तग्रीष्मेषु वस्तुमिति सूत्राक्षरार्थः ॥ ⊳

अत्र भाष्यम्—

**रासीकडा य पुंजे-कुलियकडा पिहित मुद्दिते चेव ।**
**ठायंतगाण लहुगा, काम अगीतत्थ सुत्तं तु ॥ ३३१० ॥**

यत्रोपाश्रये राशीकृतानि पुञ्जीकृतानि कुलिकाकृतानि पिहितानि मुद्रितानि चशब्दाद् भित्तिकृतानि लाञ्छितानि च बीजानि तत्र तिष्ठतां चतुर्लघुकाः । कस्य पुनरेतत् प्रायश्चित्तम्? उच्यते—अगीतार्थस्य । 'सूत्रं तु' सूत्रं पुनर्गीतार्थविषयं द्रष्टव्यमिति वाक्यशेषः ॥ ३३१० ॥

अथ राशीकृतादिपदानां व्याख्यानमाह—

**पुंजो य होति वट्टो, सो चेव य ईसिआयतो रासी ।**
**कुलिया कुड्डल्लीणा, भित्तिकडा संसिया भित्ती ॥ ३३११ ॥**

'वृत्तः' वृत्ताकारो धान्योत्करः पुञ्ज इत्युच्यते । स एव 'ईषदायतः' मनाग् दीर्घो राशिः । अपुञ्जः पुञ्जः कृतानीति व्युत्पत्त्या पुञ्जीकृतानि, एवं राशीकृतानीत्यपि । तथा कुलिका कुड्यमुच्यते, ततः कुलिकाकृतानि नाम कुड्यालीनानि कृत्वा स्थापितानि । भित्तिकृतानि तु भित्तौ

१ °क्खिण्णाइं नो विक्खिण्णाइं तामू० ताटी० कां० ॥ २ विकिण्णा° तामू० । विइकिण्णा° ताटी० ॥ ३ ⊲ ⊳ एतच्चिह्नान्तर्वर्तिनीयं सूत्रवृत्तिर्भा० प्रतौ नास्ति ॥

संश्रितानि, भित्तिनिश्रया स्थापितानीत्यर्थः । अथ कुड्य-भित्त्योः कः प्रतिविशेषः ? उच्यते—इष्टकादिरचिता भित्तिः, मृत्पिण्डादिनिर्मितं कुड्यम् ॥ ३३११ ॥

**छारेण लंछिताइं, मुद्दा पुण छाणपाणियं दिण्णं ।**
**पंरिकल्लाइँ करेत्ता, किलिंजकडएहिँ पिहिताइं ॥ ३३१२ ॥**

लाञ्छितानि नाम 'क्षारेण' भस्मना चिह्नितानि । तथा मुद्रा पुनः छगणपानीयं तद् यत्र प्रदत्तं तानि मुद्रितानि । ''पंरिकल्लाइं'' ति यानि नापि लाञ्छितानि नापि मुद्रितानि किन्तु तदुभयप्रकारबाह्यानि कृत्वा विवक्षितप्रदेशे स्थापयित्वा किलिञ्जकटैरेवमेव स्थगितानि तानि पिहितान्युच्यन्ते । एवंविधेषु बीजेषु हेमन्त-ग्रीष्मयोर्गीतार्थस्य वस्तुं कल्पते नागीतार्थस्येति ॥ ३३१२ ॥ परः प्रेरयति—

**नत्थि अगीतत्थो वा, सुत्ते गीतो व वण्णितो कोइ ।**
**जा पुण एगाणुण्णा, सा सेच्छा कारणं किं वा ॥ ३३१३ ॥**

सूत्रे अगीतार्थो वा गीतार्थो वा न कश्चिद् निर्द्धार्य 'वर्णितः' निर्दिष्टोऽस्ति, अतो येयं भवद्भिः एकस्य—गीतार्थपक्षस्यानुज्ञा अपरस्यागीतार्थपक्षस्य प्रतिषेधः क्रियते सैषा युष्माकं व्याख्यातॄणां स्वेच्छा, न पुनर्भगवदुक्तमिति भावः । अथ कारणं किमप्यत्रास्ति ततोऽभिधीयताम् ॥ ३३१३ ॥ सूरिराह—

**एयारिसम्मि वासो, ण कप्पती जति वि सुत्तऽणुण्णातो ।**
**अव्वोकडो उ भणितो, आयरिओ उवेहती अत्थं ॥ ३३१४ ॥**

'एतादृशे' उपाश्रये वासो यद्यपि सूत्रेऽनुज्ञातस्तथापि न कल्पते, यतः 'अव्याकृतः' अविशेषित एवार्थः सूत्रे भणितः, परमाचार्यस्तमर्थम् 'उत्प्रेक्षते' विषयविभागप्रकटनेनोन्मीलयति । यथा किलैकस्माद् मृत्पिण्डात् कुलालोऽनेकानि घट-शरावादिरूपाणि निष्पादयति, एवमाचार्योऽप्येकस्मात् सूत्रपदादभ्यूह्यानेकेषामर्थविकल्पानामुपदर्शनं करोति । यथा वा सान्धकारे गृहादौ विद्यमाना अपि घटादयः पदार्थाः प्रदीपं विना न विलोक्यन्ते, तथा सूत्रेऽप्यर्थविशेषा आचार्येणाप्रकाशिताः सन्तोऽपि नोपलभ्यन्ते ॥ ३३१४ ॥ किञ्च—

**जं जह सुत्ते भणितं, तहेव तं जइ वियालणा नत्थि ।**
**किं कालियाणुओगो, दिट्ठो दिट्ठिप्पहाणेहिं ॥ ३३१५ ॥**

'यद्' वस्तु 'यथा' येन विधिरूपेण प्रतिषेधरूपेण वा प्रकारेण सूत्रे भणितं तत् तथैव यदि प्रतिपत्तव्यं 'विचारणा' विषयविभागव्यवस्थापना युक्ता-ऽयुक्तविमर्शो वा 'नास्ति' न क्रियते ततः 'किं' केन हेतुना कालिकश्रुतस्यानुयोगः 'दृष्टः' विधेयतयोपलब्धः 'दृष्टिप्रधानैः' केवलज्ञान-श्रुतज्ञानरूपलोचनप्रवरैस्तीर्थकर-गणधरैः ?; अथवा 'दृष्टिप्रधानैः' नैगमादिनयमतविशारदैः श्रीभद्रबाहुस्वामिभिः किमिति निर्युक्तिकरणद्वारेण कालिकश्रुतानुयोगो 'दृष्टः' प्रतिपादितः ? ॥ ३३१५ ॥ अपि च—

**उस्सग्गसुतं किंची, किंची अववातियं भवे सुत्तं ।**

---

१ पक्खिल्लाइं ताभा० ॥ २ "पक्खिल्लाइं" कां० ॥

**तदुभयसुत्तं किंची, सुत्तस्स गमा मुणेयव्वा ॥ ३३१६ ॥**

किञ्चिदुत्सर्गसूत्रम् १, किञ्चित् पुनरापवादिकं सूत्रम् २, किञ्चित् तदुभयसूत्रम्, तच्च द्विधा—उत्सर्गापवादिकम् अपवादौत्सर्गिकम् ३-४। एते सूत्रस्य 'गमाः' प्रकाराश्चत्वारो ज्ञातव्याः। अथवा 'गमा नाम' द्विरुच्चारणीयानि पदानि। तद्यथा—उत्सर्गौत्सर्गिकम् ५ अपवादापवादिकम् ६ एवमेतौ द्वौ भेदौ चत्वारश्च प्रागुक्ता इत्येवं सूत्रस्य षड् भेदाः सञ्जाताः। एते च पुरस्तादुदाहरिष्यन्ते ॥ ३३१६ ॥ ◁ अन्येऽपि च सूत्रस्य भेदा भवन्तीति दर्शयति—▷

**णेगेसु एगगहणं, सलोम णिल्लोम अकसिणे अइणे।**
**विहिभिन्नस्स य गहणं, अववाउस्सग्गियं सुत्तं ॥ ३३१७ ॥**

'अनेकेषु' कषायेन्द्रिया-ऽऽश्रवादिष्वर्थेषु ग्रहीतव्येषु क्वापि सूत्रे एकस्य—अन्यतरस्य ग्रहणं भवेत्, यथा—यत्र सूत्रे क्रोधनिग्रहः साक्षादुपदिष्टस्तत्र माननिग्रहादयोऽप्यर्थत उक्ता द्रष्टव्याः। एवमिन्द्रिया-ऽऽश्रवादिष्वपि भावनीयम्।

कानिचित्तु सूत्राणि साधूनां साध्वीनां च प्रत्येकविषयाणि। यथेहैव **कल्पाध्ययने सलोमसूत्रं निर्लोमसूत्रं** वा। तद्यथा—"नो कप्पइ निग्गंथाणं अलोमाइं चम्माइं धारित्तए ( )। कप्पइ निग्गंथाणं सलोमाइं चम्माइं धारित्तए ( उ० ३ सू० ४ )। नो कप्पइ निग्गंथीणं सलोमाइं चम्माइं धारित्तए। ( उ० ३ सू० ३ )। कप्पइ निग्गंथीणं अलोमाइं चम्माइं धारित्तए ( )।"

कानिचित्तु सामान्यसूत्राणि भवन्ति, यथा अकृत्स्नाजिनविषयं सूत्रम्। तच्चेदम्—"कप्पइ निग्गंथाण वा निग्गंथीण वा अकसिणाइं चम्माइं धारित्तए" ( उ० ३ सू० ६ )।

अथ "अनानुपूर्व्यापि व्याख्याङ्गम्" इति **न्यायो**पदर्शनार्थं प्रागुक्तसूत्रषट्कमध्यात् चतुर्थभेदमुदाहरति—"विहिभिन्नस्स य" इत्यादि। इहैव ग्रन्थे यद् विधिभिन्नस्य ग्रहणमुक्तं तदपवादौत्सर्गिकं सूत्रम्। तच्चेदम्—"कप्पइ निग्गंथीणं पक्के तालपलंबे भिन्ने पडिगाहित्तए, से वि य विहिभिन्ने नो चेव णं अविहिभिन्ने" ( उ० १ सू० ५ ) ॥ ३३१७ ॥

आह यद्यपवादेनानुज्ञातं तर्हि भूयः कथं प्रतिषिध्यते ? इत्याह—

**उस्सग्गठिई सुद्धं, जम्हा दव्वं विवज्जयं लभति।**
**ण य तं होइ विरुद्धं, एमेव इमं पि पासामो ॥ ३३१८ ॥**

'उत्सर्गस्थितौ' उत्सर्गपदे 'शुद्धम्' उद्गमादिदोषरहितं यद् भक्त-पानादिद्रव्यं ग्रहीतुं कल्पते तदेवापवादपदे यस्माद् 'विपर्ययं' वैपरीत्यं लभते, अशुद्धमप्युपादातुं कल्पते इत्यर्थः। 'न च' नैव तत् तथा गृह्यमाणं विरुद्धं भवति, ज्ञानादिगुणोपकारकत्वादविरुद्धमेवेति भावः। एवमेव 'अमुमपि' प्रकृतमर्थं "कल्पते निर्ग्रन्थीनां पक्वं तालप्रलम्बं भिन्नं प्रतिग्रहीतुम्" ( उ० १ सू० ५ ) इत्यपवादेनानुज्ञातस्याप्यविधिभिन्नप्रतिषेधरूपमविरुद्धमेव पश्यामः ॥ ३३१८ ॥

अथोत्सर्गसूत्रादीनामुदाहरणान्याह—

१ °वमेते सूत्रस्य भा० ॥ २ ◁ ▷ एतदन्तर्गतमवतरणं भा० नास्ति ॥
३ °र्व्योऽपि व्याख्यानम्" इति भा० कां० विना ॥

**उस्सग्ग गोयरम्मी, निसेज्ज कप्पाऽववादतो तिण्हं ।**
**मंसं दल मा अट्ठी, अववादुस्सग्गियं सुत्तं ॥ ३३१९ ॥**

उत्सर्गसूत्रं गोचरं पर्यटतः साधोर्गृहद्वयापान्तराले या 'निषद्या' निषदनं तद्विषयम् । तच्चेदम्—"नो कप्पइ निग्गंथाण वा निग्गंथीण वा अंतरगिहंसि आसइत्तए वा जाव काउस्सग्गं वा ठाणं वा ठाइत्तए ( उ० ३ सू० २२ ) त्ति ।"

यत्तु 'त्रयाणां' जराभिभूतादीनां निषद्या कल्पते इत्येवंलक्षणं सूत्रं तदापवादिकम् । तच्चेदम्—"अह पुण एवं जाणिज्जा जराजुण्णे १ वाहिए २ तवस्सी ३ मुच्छिज्ज वा पवडिज्ज वा एवण्हं कप्पइ अंतरगिहंसि आसइत्तए ।" ( उ० ३ सूत्र $\frac{२२}{२}$ )

इदं पुनरपवादौत्सर्गिकम्—"[1]मंसं दल मा अट्ठि" त्ति पुद्गलं प्रयच्छ मा अस्थीनीति ॥३३१९॥

**नो कप्पति व अभिन्नं, अववातेणं तु कप्पती भिन्नं ।**
**कप्पति पक्कं भिण्णं, विधीय अववायउस्सग्गं ॥ ३३२० ॥**

"नो कल्पतेऽभिन्नमामप्रलम्बं प्रतिग्रहीतुम्" ( उ० १ सू० १ ) एतद्वा उत्सर्गसूत्रम् ।

यत पुनः 'अपवादपदेन' अध्वा-ऽवमौदर्यादिषु भिन्नं प्रतिग्रहीतुं कल्पते इत्येवंरूपं ( उ० १ सू० २ ) तदापवादिकम् ।

यत् पुनः "निर्ग्रन्थीनां कल्पते पक्वं प्रलम्बं विधिभिन्नं नाविधिभिन्नम्" ( उ० १ सू० ५ ) इति सूत्रं तदपवादौत्सर्गिकम् । एतत् प्रागुक्तमपि स्पष्टीकरणार्थमिहाभिहितम् ।

इदं त्वौत्सर्गापवादिकम्—"नो कप्पइ० राओ वा वियाले वा सेज्जा-संथारयं पडिगाहित्तए । नऽन्नत्थ एगेणं पुव्वपडिलेहिएणं सिज्जा-संथारएणं ( उ० १ सू० ४३ ) ।

इदं पुनरुत्सर्गोत्सर्गिकम्—"नो कप्पइ० असणं वा [2]एक पढमाए पोरिसीए पडिगाहित्ता पच्छिमं पोरिसिं उवाइणावेत्तए । से य आहच्च उवाइणाविए सिया, जो तं भुंजइ भुंजंतं वा साइज्जइ से आवज्जइ चाउम्मासियं परिहारट्ठाणं उग्घाइयं ( उ० ४ सू० ११ ) ।

तथा येषु सूत्रेष्वपवादो भणितस्तेष्वेवार्थतः पुनरनुज्ञा प्रवर्तते तान्यपवादापवादिकानि ॥ ३३२० ॥ किञ्चान्यत्—

**कत्थइ देसग्गहणं, कत्थति भण्णंति णिरवसेसाइं ।**
**उक्कम-कमजुत्ताइं, कारणवसतो णिजुत्ताइं ॥ ३३२१ ॥**

क्वचित् सूत्रेऽभिधेयपदानां देशतो ग्रहणं क्रियते, कुत्रापि च निरवशेषाण्यभिधेयपदानि भण्यन्ते, तथा कानिचित् सूत्राण्युत्क्रमयुक्तानि, कानिचित्तु क्रमयुक्तानि 'कारणवशतः' कारणविशेषमाश्रित्य 'नियुक्तानि' गणधरादिभिः श्रुतधरैर्विरचितानि ॥ ३३२१ ॥

एतदेव विवृणोति—

**देसग्गहणे बीएहि सूयिया मूलमादिणो हुंति ।**
**कोहादिअणिग्गहिया, सिंचंति भवं निरवसेसं ॥ ३३२२ ॥**

---

१ "अभिकंखसि मे दाउं जावइयं तावइयं पुग्गलं दलयाहि, मा य अट्ठियाणि" इतिरूपं सूत्रं आचाराङ्गे श्रु० २ चू० १ अ० १ उ० १० ॥ २ वा एक पढ° त० डे० ॥

देशग्रहणे कृते सति तज्जातीयानां सर्वेषामपि ग्रहणं भवति, यथा—"सालीणि वा वीहीणि वा" इत्यादावस्मिन्नेव सूत्रे बीजैर्गृहीतैर्मूलादयोऽपि भेदाः सूचिता भवन्ति ।

कुत्रापि च सूत्रे निरवशेषाण्यभिधेयपदानि गृह्यन्ते, यथा **दशवैकालिके** क्रोधादयोऽनिगृहीताः सन्तः 'भवं' संसारं 'निरवशेषं' चतुर्गतिकमपि सिञ्चन्तीत्युक्तम् । तथा च तत्सूत्रम्—

कोहो य माणो य अणिग्गहीया, माया य लोभो अ पवड्ढमाणा ।
चत्तारि एए कसिणा कसाया, सिंचंति मूलाइँ पुणब्भवस्स ॥

( अध्य० ८ श्लो० ४० ) ॥ ३३२२ ॥

◁ अथोत्क्रम-क्रमयुक्तानि सूत्राणि दर्शयति— ▷[1]

**सत्थपरिण्णादुक्कमे, गोयर पिंडेसणा कमेणं तु ।**
**जं पि य उक्कमकरणं, तमभिणवधम्ममादऽट्ठा ॥ ३३२३ ॥**

**शस्त्रपरिज्ञाध्ययने** तेजःकायोद्देशकानन्तरं वायुकायोद्देशकः क्रमप्राप्तोऽपि नोक्तः, किन्तु वनस्पति-त्रसकायोद्देशकौ प्ररूप्य पर्यन्तेऽसौ भणितः, एवमादिकमुत्क्रमयुक्तं सूत्रमुच्यते ।

क्वचित्तु सूत्रे क्रमेणैवार्थपदानि भवन्ति, यथा—अष्टौ गोचरभूमयः, तद्यथा—"पेडा अद्धपेडा गोमुत्तिया पतंगवीहिया अंतोसंवुक्का बाहिंसंवुक्का उज्जुगी गंतुंपच्चागता ।" तथा सप्तपिण्डैषणासूत्रमपि क्रमनिबद्धं मन्तव्यम् । तद्यथा—"असंसट्ठा संसट्ठा उद्धडा अप्पलेवा उग्गहिता पग्गहिता उज्झितधम्मिया ।"

अथवा 'पिण्डैषणा' इति प्रथमं पिण्डपदं तत एषणापदं यत्र **ओघनिर्युक्त्यादौ** सूत्रे यथाक्रमं प्ररूप्यते तत् क्रमनिबद्धम् ।

यदपि चोत्क्रमकरणं शस्त्रपरिज्ञादावध्ययने तदभिनवधर्माद्यर्थम् । किमुक्तं भवति?—अभिनवधर्मा शैक्षः, स ह्यद्याप्यपरिणतजिनवचनतया वायुकायं परिस्फुटमनुपलभ्यमानतया प्रथमतः प्ररूप्यमाणं न सम्यक् प्रतिपद्यते, अतो वनस्पति-त्रसान् प्ररूप्य यदा तेषु सम्यग् जीवत्वं प्रतिपन्नस्तदा वायुकायं जीवत्वेन प्ररूप्यमाणं सुखेनैव श्रद्धत्ते, एवमादिभिः कारणैरुत्क्रमकरणं मन्तव्यम् ॥३३२३॥ अथ "बीएहि सूइया मूलमाइणो" ( गा० ३३२२ ) त्ति पदं व्याचष्टे—

**बीएहि कंदमादी[2], वि सूयिया तेहिं सव्व वणकाओ ।**
**भोम्मादिगा वणेण तु, सभेद सारोवणा भणिता ॥ ३३२४ ॥**

इहैव सूत्रे बीजैर्गृहीतैः कन्द-मूलादयोऽपि भेदाः सूचिताः[3], तेष्वपि तिष्ठतः प्रायश्चित्तं भवतीति भावः । 'तैश्च' कन्दादिभिः सर्वोऽपि 'वनस्पतिकायः' परीत्ता-ऽनन्तभेदभिन्नः सूचितः । 'वनेन तु' वनस्पतिना 'भौमादयः' पृथिव्यप्कायादयः कायाः सूचिताः । एवं 'सभेदाः' भेद-प्रभेदसहिताः षडपि कायाः 'सारोपणाः' सप्रायश्चित्ता भणिता अवसातव्याः ॥ ३३२४ ॥

**जत्थ उ देसग्गहणं, तत्थऽवसेसाइं[4] सूइयवसेणं ।**
**मोत्तूणं अहिगारं, अणुयोगधरा पभासंति[5] ॥ ३३२५ ॥**

---

१ ◁ ▷ एतन्मध्यगतमवतरणं भा० नास्ति ॥ २ °दी, तु सू° ताभा० ॥
३ सूचिताः । तैश्च सर्वोऽपि भा० ॥ ४ °त्थ वि सेसाइं ताभा० ॥ ५ पसासंति ताभा० ॥

एवमत्रापि यत्र देशग्रहणं तत्रावशेषाण्यर्थपदानि, सूचितं सूचा, भावे क्तप्रत्ययः, तद्वशेनावगन्तव्यानि । तथा कुत्रापि सूत्रेऽनुयोगधराः 'अधिकारं' प्रस्तुतार्थं मुक्त्वा सूत्रानुपाति प्रसङ्गागतमर्थं प्रथमतः प्रभाषन्ते, यथा पिण्डाधिकारे प्रस्तुते—

"पुढवी आउक्काए, तेऊ वाऊ वणस्सई चेव ।
बिइ तिय चउरो पंचिंदिया य लेवो दसमओ अ ॥" ( गा० ३३६ )

इत्यादिनौघनिर्युक्तौ सविस्तरं कायप्ररूपणा कृता । एवं विचित्राणि सूत्राणि भवन्ति, अत एव यावदमीषामर्थः सूरिणा न व्यक्तीकृतस्तावन्न सम्यगवगमपथमुपगच्छति ॥ ३३२५ ॥

अथौत्सर्गिका-ऽऽपवादिकसूत्रयोर्विषयविभागमाह—

**उस्सग्गेणं भणियाणि जाणि अववादतो तु जाणि भवे ।**
**कारणजातेण मुणी!, सव्वाणि वि जाणितव्वाणि ॥ ३३२६ ॥**

उत्सर्गेण यानि सूत्राणि भणितानि यानि चापवादतः सूत्राणि तानि हे मुने! कारणजातेन सर्वाण्यपि ज्ञातव्यानि । किमुक्तं भवति?—प्रतिषिद्धस्य आचरणहेतुः कारणम्, तच्च ज्ञानादि, तत्र चोत्सर्गसूत्रेषु साक्षादुत्सर्गविषयो निबन्धः, अर्थतस्तु कारणजाते तत्राप्यनुज्ञा मन्तव्या; अपवादसूत्रेषु पुनः कारणजातमुद्दिश्य साक्षादपवादविषयो निबन्धः, अर्थतस्तु तत्राप्युत्सर्गो द्रष्टव्यः । एवं सर्वसूत्रेषु तत्त्वत उत्सर्गा-ऽपवादावुभावपि निबद्धाववगन्तव्यौ ॥ ३३२६ ॥

अथ किं पुनरनयोः स्वस्थानम्? इत्याह—

**उस्सग्गेण निसिद्धाइँ जाइँ दव्वाइँ संथरे मुणिणो ।**
**कारणजाते जाते, सव्वाणि वि ताणि कप्पंति ॥ ३३२७ ॥**

'उत्सर्गेण' संस्तरणमाश्रित्य यानि 'द्रव्याणि' प्रलम्बादीनि 'मुनेः' संयतस्य प्रतिषिद्धानि तान्येव 'कारणजाते' विशुद्धालम्बनप्रकारे 'जाते' समुत्पन्ने सति सर्वाण्यपि कल्पन्ते ॥३३२७॥

अत्र परः प्रश्नयति—

**[1]जं चिय पए णिसिद्धं, तं चिय जति भूतो कप्पती तस्स ।**
**एवं होतऽणवत्था, ण य तित्थं णेव सच्चं तु ॥ ३३२८ ॥**

'यदेव' प्रलम्बादिकं 'प्राक्' पूर्वं निषिद्धं तदेव यदि 'भूयः' पुनरपि 'तस्य' साधोः कल्पते, तत एवं सूत्रार्थस्य यदृच्छाप्रवृत्तौ चरण-करणस्यानवस्था भवति । ततश्च न तीर्थमनुस(ष)जति, नैव च प्रतिषिद्धं समाचरतः 'सत्यं' संयमो भवति, तदभावे दीक्षा निरर्थिका, तन्निरर्थकतायां मोक्षस्याप्यभावः प्राप्नोति ॥ ३३२८ ॥ अपि च—

**उम्मत्तवायसरिसं, खु दंसणं ण वि य कप्पऽकप्पं तु ।**
**अध ते एवं सिद्धी, ण होज्ज सिद्धी उ कस्सेवं ॥ ३३२९ ॥**

आचार्य! पूर्वमेकत्र सूत्रे प्रतिषिध्य पुनस्तदेवानुजानत इदं भवतो दर्शनमुन्मत्तवाक्यसदृशं प्राप्नोति, तथा नापि च 'इदं कल्प्यम्, इदमकल्प्यम्' इति व्यवस्था भवति, यदि चैवमपि [3]ब्रुवतस्तवाभिप्रेतार्थसिद्धिर्भवति तर्हि कस्य न सा भवेत्? चरक-परिव्राजकादीनामप्यसमञ्जस-

१ °ज्ञानुग° भा० ॥ २ जं पि य भा० ॥ ३ यद्यपि प्र° भा० ॥

प्रलापिनां सा भविष्यतीति भावः ॥ ३३२९ ॥ सूरिराह—

**ण वि किंचि अणुण्णायं, पडिसिद्धं वा वि जिणवरिंदेहिं ।**
**एसा तेसिं आणा, कज्जे सच्चेण होतव्वं ॥ ३३३० ॥**

हे नोदक! यदेतद् भवता प्रलपितं तत् प्रवचनरहस्यानभिज्ञतासूचकम्, यतो जिनवरेन्द्रैस्तथाविधकारणाभावे नापि 'किञ्चिद्' अकल्पनीयमनुज्ञातम्, कारणे च समुत्पन्ने नापि किञ्चित् प्रतिषिद्धम्, किन्तु एषा 'तेषां' तीर्थकृतां निश्चय-व्यवहारनयद्वयाश्रिता सम्यगाज्ञा मन्तव्या—यदुत 'कार्ये' ज्ञानादावालम्बने 'सत्येन' सद्भावसारेण साधुना भवितव्यम्, न मातृस्थानतो यत्किञ्चिदालम्बनीयमित्यर्थः । अथवा सत्यं नाम–संयमः तेन कार्ये समुत्पन्ने भवितव्यम्, यथा यथा संयम उत्सर्पति तथा तथा कर्त्तव्यमिति भावः । आह च **बृहद्भाष्यकारः**—

कज्जं नाणादीयं, सच्चं पुण होइ संजमो नियमा ।
जह जह सो होइ थिरो, तह तह कायव्वयं होइ ॥ ॥ ३३३० ॥

इदमेव भावयति—

**दोसा जेण निरुब्भंति जेण खिज्जंति पुव्वकम्माइं ।**
**सो सो मोक्खोवाओ, रोगावत्थासु समणं वा ॥ ३३३१ ॥**

'येन' अनुष्ठानविशेषेण 'दोषाः' रागादयो निरुध्यन्ते, पूर्वोपचितानि च कर्माणि येन क्षीयन्ते, 'स सः' अनुष्ठानविशेषो मोक्षोपायो ज्ञातव्यः । 'रोगावस्थासु' ज्वरादिरोगप्रकारेषु 'शमनमिव' उचितौषधप्रदानापथ्यपरिहाराद्यनुष्ठानमिवः यथा तेन विधीयमानेन ज्वरादिरोगः क्षयमुपगच्छति, एवमुत्सर्गे उत्सर्गमपवादेऽपवादं समाचरतो रागादयो दोषा निरुध्यन्ते पूर्वकर्माणि च क्षीयन्ते । अथवा यथा कस्यापि रोगिणः पथ्यौषधादिकं प्रतिषिध्यते कस्यापि पुनस्तदेवानुज्ञायते, एवमत्रापि यः समर्थस्तस्याकल्प्यं प्रतिषिध्यतेऽसमर्थस्य तु तदेवानुज्ञायते ।

उक्तञ्च **भिषग्वरशास्त्रे**—

उत्पद्येत हि साऽवस्था, देश-काला-ऽऽमयान् प्रति ।
यस्यामकार्यं कार्यं स्यात्, कर्म कार्यं च वर्जयेत् ॥

एवंविधं चोत्सर्गा-ऽपवादविभागमगीतार्थो न जानाति ॥ ३३३१ ॥ अतः—

**अगीयस्स न कप्पइ, तिविहं जयणं तु सो न जाणाइ ।**
**अणुन्नवणाए जयणं, सपक्ख-परपक्खजयणं च ॥ ३३३२ ॥**

अगीतार्थस्य प्रस्तुतसूत्रविषयभूतं वस्तुं न कल्पते, यतोऽसौ त्रिविधां यतनां न जानीते । तद्यथा—अनुज्ञापनायतनां स्वपक्षयतनां परपक्षयतनां चेति । तिस्रोऽप्येता वक्ष्यमाणस्वरूपाः । परः प्राह—अगीतार्थेनापि तावत् सूत्रमधीतम् अतः कथमसौ न जानीते? उच्यते—इह सर्वेषामप्यागमानामर्थपरिज्ञानमाचार्यसहायकादेवोपजायते, न यथाकथञ्चित् । उक्तञ्च—

सत्स्वपि फलेषु यद्वन्न ददाति फलान्यकम्पितो वृक्षः ।
तद्वत् सूत्रमपि बुधैरकम्पितं नार्थवद् भवति ॥ ॥ ३३३२ ॥

---

१ च ताभा० ॥ २ °स्य बीजाकीर्णे उपाश्रये वस्तुं कां० ॥

इदमेवाह—

**निउणो खलु सुत्तत्थो, ण हु सक्को अपडिबोधितो णाउं ।**
**ते सुणह तत्थ दोसा, जे तेसिं तहिँ वसंताणं ॥ ३३३३ ॥**

'निपुणः' सूक्ष्मः खलु सूत्रस्यार्थो भवति, अत एव न शक्योऽसावाचार्येणाप्रतिबोधितः सम्यक् परिज्ञातुम्; अतोऽगीतार्थः सूत्रमात्रेण पठितेन न यतनामवबुध्यते, अतः 'तेषाम्' अगीतार्थानां 'तत्र' बीजाकीर्णोपाश्रये वसतां ये दोषा भवन्ति तान् शृणुत ॥ ३३३३ ॥

**अगीयत्था खलु साहू, णवरिं दोसे गुणे अजाणंता ।**
**रमणिज्जभिक्ख गामो, ठायंतऽह धण्णसालाए ॥ ३३३४ ॥**

अगीतार्थाः खलु, के ? 'साधवः' साधुक्रियासु उद्यताः 'नवरं' केवलं सदोषाया निर्दोषाया वा वसतेरनुज्ञापने दोषान् गुणांश्चाजानन्तः क्वापि ग्रामे भैक्षं प्रभूतं लब्ध्वा भिक्षया 'रमणीयोऽयं ग्रामः' इति कृत्वा 'अथ' अनन्तरं धान्यशालायां तिष्ठन्ति ॥ ३३३४ ॥ इदमेव स्पष्टतरमाह—

**रमणिज्जभिक्ख गामो, ठायामो इहेव वसहि झोसेह ।**
**धण्णघराणुण्णवणा, जति रक्खह देमु तो भंते ! ॥ ३३३५ ॥**

कश्चिदगीतार्थगच्छो ग्रामानुग्रामिकं विहरन् कमपि ग्रामं सम्प्राप्तः । तत्र बहिर्देवकुलादौ स्थित्वा भिक्षां पर्यटन् प्रभूतम् इष्टं च भैक्षं लब्धवान् । ततस्तैः साधुभिः परस्परमुक्तम्—रमणीयोऽयं ग्रामः अत इहैव मासकल्पं तिष्ठामः, परं वसतिरद्यापि न गवेषिता अतस्तां "झोसेह" त्ति देशीवचनत्वाद् गवेषयत । ततस्तैर्वसतिं प्रत्युपेक्षमाणैः कस्याप्यगारिणो धान्यगृहं दृष्टम्, ततस्तस्यानुज्ञापना कृता । गृहपतिः प्राह—यदि भदन्त ! मदीयं धान्यगृहं तस्कर-गवादिभिरुपद्रूयमाणं रक्षत ततोऽहं प्रयच्छामि नान्यथा ॥ ३३३५ ॥ अपि च—

**वसहीरक्खणवग्गा, कम्मं न करेमो णेव पवसामो ।**
**णिच्चिंतो होहि तुमं, अम्हे रत्तिं पि जग्गामो ॥ ३३३६ ॥**

वयमस्या वसतेः—धान्यशालारूपाया रक्षणे व्यग्राः सन्तः कृष्यादिकं कर्मापि न कुर्महे, न च सुहृदादिभिरामन्त्रिताः क्वापि विवाहादौ कार्ये ग्रामान्तरे प्रवसामः । ततस्तेऽगीतार्था वसत्यनुज्ञापनाविधिमजानन्तो ब्रुवते—निश्चिन्तस्त्वमत्रार्थे भव, वयं रात्रिमपि प्रहरकेण जागरिष्यामः॥ ३३३६॥

**जोतिस-णिमित्तमादी, छंदं गणियं व अम्ह साधेत्था ।**
**अक्खरमादी डिंभे, गाधेस्सह अजतणा सुणणे ॥ ३३३७ ॥**

ज्योतिषं निमित्तम् आदिशब्दादन्यदपि गन्धर्वविद्यादिकं तथा छन्दःशास्त्रं गणितशास्त्रं वा यदस्माकं कथयिष्यथ, अक्षराणि नाम—लिपिविज्ञानं तद् आदिशब्दाद् व्याकरणादिकं वा यदस्माकं 'डिम्भानि' बालकानि ग्राहयिष्यथ ततस्तिष्ठन्तु भवन्त इति । एवं वसतिस्वामिनोक्ते सति यदि तेऽगीतार्थास्तत् 'प्रतिशृण्वन्ति' 'आमम्, कथयिष्यामो ग्राहयिष्यामो वा' इत्यनुमन्यन्ते ततोऽनुज्ञापनाया अयतना कृता भवति ॥ ३३३७ ॥ तत्र चामी दोषाः—

---

१ मो० ले० विनाऽन्यत्र—°**क्रियासु यताः** त० डे० । °**क्रियायामुद्यताः** ताटी० भा० कां० ॥
२ °**क्षार्थे पर्य°** डे० ॥

**अणुण्णवण अजतणाए, पउत्थ सागारिए घरे चेव ।**
**तेसिं पि य चीयत्तं, सागारियवज्जियं जातं ॥ ३३३८ ॥**

एवमयतनानुज्ञापनया तत्र तेषु स्थितेषु सागारिकश्चिन्तयति—'एते साधवस्तावद् मदीयं धान्यगृहं रक्षन्ति अतः कस्मादहं स्वजनादिकार्ये न गच्छामि?' इति परिभाव्य कुत्रचिद् ग्रामादौ प्रवसति । प्रोषिते च तस्मिन् गृह एव वा निश्चिन्ततया धान्यानां व्यापारमवहमाने तेषामपि संयतानां प्रीतिकं भवति—साधु साधु सागारिकवर्जितं जातम् ॥ ३३३८ ॥

अस्या एव गाथायाः पूर्वार्द्धं व्याचष्टे—

**तेसु ठिएसु पउत्थो, अच्छंतो वा वि ण वहती तत्तिं ।**
**जति वि य पविसितुकामो, तह वि य ण चएति अतिगंतुं ॥ ३३३९ ॥**

'तेषु' संयतेषु तत्र स्थितेषु स सागारिको निश्चिन्ततया प्रोषितो गृहे वा तिष्ठन् धान्यानां 'तत्तिं' व्यापारं न वहति । यद्वा धान्यं सम्भालयितुं यद्यप्यसौ तत्र प्रवेष्टुकामः तथापि 'नातिगन्तुं' न प्रवेष्टुं शक्नोति ॥ ३३३९ ॥ कुतः? इति चेद् उच्यते—

**संथारएहि य तहिं, समंततो आतिकिण्ण विइकिण्णं ।**
**सागारितो ण एती, दोसे य तहिं ण जाणाती ॥ ३३४० ॥**

संस्तारकैः 'तत्र' उपाश्रये समन्ततः 'अतिकीर्णं' परिपाट्या प्रसृतैर्मालितं 'व्यतिकीर्णं' तैरेवानानुपूर्व्या प्रसृतैर्व्याप्तं दृष्ट्वा सागारिकः 'नैति' नागच्छति, ततो ये तत्र धान्यपरिशटनादयो दोषास्तानसौ न जानीते ॥ ३३४० ॥

²एषा अनुज्ञापनाया अयतना । अथ संयतलक्षणस्वपक्षविषयां यतनामाह—²

**ते तत्थ सण्णिविट्ठा, गहिया संथारगा जधिच्छाए ।**
**णाणादेसी साधू, कामइ चिंता समुप्पण्णा ॥ ३३४१ ॥**

'ते' अगीतार्थाः 'तत्र' उपाश्रये 'सन्निविष्टाः' स्थिताः, यदृच्छया च तैस्तत्र संस्तारका गृहीताः, न गणावच्छेदिकेन यथारत्नाधिकं प्रदत्ता इति भावः, नानादेशीयाश्च तत्र साधवः, तेषां मध्ये "कामइ" त्ति कस्यचिद् मन्दधर्मणश्चिन्ता समुत्पन्ना ॥ ३३४१ ॥ यथा—

**अणुहूया धण्णरसा, णवरं मोत्तूण सेडगतिलाणं ।**
**काहामि कोउहल्लं, पासुत्तेसुं समारद्धो ॥ ३३४२ ॥**

अनुभूतास्तावदपरेषां धान्यानां रसाः, 'नवरं' केवलं "सेडगतिलाणं" ति श्वेतकतिलानां रसं मुक्त्वा, अत एतद्विषयं 'कौतुकम्' अभिलाषं 'करिष्यामि' पूरयिष्यामीत्यर्थः । एवं विचिन्त्य शेषसाधुषु रात्रौ प्रसुप्तेषु समारब्धस्तान् तिलान् भक्षयितुम् ॥ ३३४२ ॥ ततश्च—

**विगयम्मि कोउहल्ले, छट्ठवतविराहण त्ति पडिगमणं ।**
**वेहाणस ओहाणे, गिलाण सेधेण वा दिट्ठो ॥ ३३४३ ॥**

१ 'अतिकीर्णं' परिपाट्या प्रसृतैर्मालिते 'व्यतिकीर्णे' तैरेवानानुपूर्व्या [प्रसृतैः] व्याप्ते सागारिकः भा० ॥
२ ² ² एतन्मध्यगतमवतरणं भा० नास्ति ॥ ३ "सेडगतिला पंडरा" इति चूर्णौ ॥

'विगते' व्यतीते सति कौतुके 'षष्ठव्रतस्य विराधना ममाभूत्, एकव्रतभङ्गे च सर्वव्रतभङ्गः' इति कृत्वा 'प्रतिगमनं' भूयोऽपि गृहवासाश्रयणं कुर्यात्, वैहायसं वा मरणमभ्युपगच्छेत्, 'अवधावनं वा' संविग्नविहारं कुर्वीत, पार्श्वस्थादिविहारमाद्रियेत इत्यर्थः । अथवा स संयतस्तिल-भक्षणं विदधानो ग्लानेन वा शैक्षेण वा दृष्टो भवेत् ॥ ३३४३ ॥ ततश्च—

**दट्ठूण वा गिलाणो, खुधितो भुंजेज्ज जा विराधणता ।**
**एमेव सेधमादी, भुंजे अप्पच्चयो वा सिं ॥ ३३४४ ॥**

तं साधुं तिलान् भक्षयन्तं दृष्ट्वा ग्लानः क्षुधितः सन् तांस्तिलान् भुञ्जीत, ततश्चापथ्यप्रति-सेवनेन या तस्य परितापनादिका विराधना तन्निष्पन्नं प्रायश्चित्तम् । एवमेव शैक्षादयोऽपि तं तिलान् भुञ्जानं दृष्ट्वा तथैव भुञ्जीरन्, अप्रत्ययो वा तेषां भवेत्—यथैतद् मृषा तथाऽन्यदप्य-मीषामेवंविधमिति ॥ ३३४४ ॥

**उड्डाहं व करेज्जा, विप्परिणामो व होज्ज सेहस्स ।**
**गेण्हंतेण व तेणं, सव्वो पुंजो समारद्धो ॥ ३३४५ ॥**

स शैक्षस्तं तिलान् भक्षयन्तं विलोक्यापरापरजनेभ्यः कथयन्नुड्डाहं वा कुर्यात्, विपरिणामो वा शैक्षस्य भवेत्, विपरिणतश्च सम्यक्त्वं चारित्रं लिङ्गं वा परित्यजेत् । तेन च साधुना 'गृह्णता' भक्षयता सर्वोऽपि तिलपुञ्जः खादितुं समारब्धः ॥ ३३४५ ॥ ततश्च—

**फेडिय मुद्दा तेणं, कज्जे सागारियस्स अतिगमणं ।**
**केण इमं तेणेहिं, तेणाणं आगमो कत्तो ॥ ३३४६ ॥**

तिलपुञ्जस्य या छगणपानीयादिना मुद्रा कृताऽऽसीत् सा 'तेन' तिलान् भक्षयता 'स्फेटिता' अपनीता । तत्र च क्वचित् कार्ये 'सागारिकस्य' शय्यातरस्य 'अतिगमनं' प्रवेशो भवेत् । दृष्टश्च तेन खण्डितस्तिलपुञ्जः । ततः पृष्टाः—केनेदं धान्यं विलुप्तम् ? । साधवो भणन्ति—स्तेनैः । सागारिकः प्राह—स्तेनानामागमः कुतो नामास्मद्गृहे सञ्जातो येनास्माभिर्न ज्ञातः ? इति । ततः सागारिकेण चेतसि निश्चितम्—नूनमेतैरेव भक्षितमिदं धान्यमिति ॥ ३३४६ ॥

स च भद्रको वा स्यात् प्रान्तो वा । भद्रकस्तावदिदं ब्रूयात्—

**इहरा वि ताव अम्हं, भिक्खं व बलिं व गिण्हह ण किंचि ।**
**एण्हिं खु तारितो मी, गिण्हह छंदेण जा अट्ठो ॥ ३३४७ ॥**

इतरथाऽपि तावदस्माकं गृहे भिक्षां वा 'बलिं वा' देवतानिवेदनमुद्धरितं गृह्णीथ, अत इदानीं संसारसागरात् तारितोऽस्म्यहम्, अन्येनापि येन भवताम् 'अर्थः' प्रयोजनं तद् भगवन्तः 'छन्देन' स्वेच्छया गृह्णीध्वम् ॥ ३३४७ ॥

**लहुगा अणुग्गहम्मी, अप्पत्तिग धम्मकंचुए गुरुगा ।**
**कडुग-फरुसं भणंते, छम्मासा करभरे छेदो ॥ ३३४८ ॥**

यद्येवं भद्रकोऽनुग्रहं मन्यते तदा चतुर्लघवः । अथ प्रान्तोऽसौ ततोऽप्रीतिकं कुर्यात्—एते धर्मकञ्चुकप्रविष्टा लोकं मुष्णन्ति; एवमप्रीतिके चतुर्गुरवः । अथासौ 'कटुक-परुषं' 'चौरस्त्वम्,

१ °तो म्हि, गि° भा० । °तो मि, गि° ताभा० ॥ २ °हम्मि, अ° ताभा० ॥

धिग् मुण्ड !, दुरात्मन् !' इत्यादि वचनं भणति तदा षड्गुरवः । अथैवं ब्रूयात्—अहो ! राजकरभरभग्नैरस्माभिरिदानीं श्रमणकरो वोढव्यः; तदा छेदः प्रायश्चित्तम् ॥ ३३४८ ॥

**मूलं सएज्झएसुं, अणवट्ठप्पो तिए चउक्के य ।**
**रच्छा-महापथेसु य, पावति पारंचियं ठाणं ॥ ३३४९ ॥**

सइज्झका नाम—सहवासिनः, प्रातिवेश्मिका इत्यर्थः, तैः परिज्ञातम् यथा—श्रमणैर्धान्यं स्तैन्येन भक्षितम्; ततो मूलम् । अथ त्रिके चतुष्के वा साधूनां स्तेनवादः प्रसरमुपगतः ततोऽनवस्थाप्यम् । अथ रथ्यासु महापथेषु वा स्तैन्यापयशः समुच्छलितं ततः पाराञ्चिकं स्थानमाचार्यादिः प्राप्नोति ॥ ३३४९ ॥ अथ कटुक-परुष-करभरपदानि व्याचष्टे—

**चोरु त्ति कडुय दुब्बोडितो त्ति फरुसं हतो सि पव्वावी ! ।**
**समणकरो वोढव्वो, जातो णे करभरहताणं ॥ ३३५० ॥**

'चौरस्त्वम्' इत्यादि वचनं कटुकम् । यत्तु 'दुर्मुण्डः' इति वा 'हतोऽसि प्रव्रजित !' इति वा वचनं तत् परुषं मन्तव्यम् । तथा स शय्यातरो ब्रूयात्—अस्माकं करभरहतानां सम्प्रति श्रमणानां करो वोढव्यः सञ्जातः ॥ ३३५० ॥

एषा स्वपक्षविषया अयतनाऽभिहिता । अथ परपक्षविषयामयतनामाह—

**परपक्खम्मि अजयणा, दारे उ अवंगुतम्मि चउलहुगा ।**
**पिहणे वि होंति लहुगा, जंते तसपाणघातो य ॥ ३३५१ ॥**

मनुष्य-गवादयो येऽसंयतास्ते परपक्षः तद्विषया अयतना भाव्यते—इह कोलिकादिजीवविराधनाभयाद् यदि द्वारमपावृतं करोति—न स्थगयतीत्यर्थः ततश्चतुर्लघवः । अथ द्वारस्य पिधानं कुर्वन्ति तदापि चतुर्लघवः । 'यन्त्रे' चचुइआरकाख्ये सञ्चारिमानामुद्देहिकादीनां त्रसप्राणिनां घातो भवतीति तन्निष्पन्नं प्रायश्चित्तम् ॥ ३३५१ ॥

**गोणे य साणमादी, वारण लहुगा य जं च अधिकरणं ।**
**खरए य तेणए या, गुरुगा य पदोसओ जं च ॥ ३३५२ ॥**

अपिहिते द्वारे गौः प्रविष्टो धान्यं भक्षयेत्, श्वानो वा आदिशब्दाद् मार्जारो वा प्रविश्य धान्यं विकिरेत् खादेद्वा, ते च यदि वार्यन्ते तदा चतुर्लघवः । ते च वारिताः प्रतिनिवृत्य व्रजन्तो हरितमर्दनादिरूपं यदधिकरणं कुर्वन्ति तन्निष्पन्नम्; चशब्दादन्तरायं च तेषां कृतं भवति । तथा शय्यातरस्य यद् व्यक्षरकं—दास-दासीरूपं ये च स्तेनकास्ते धान्यं हर्तुकामा यदि वार्यन्ते तदा चतुर्गुरुकाः । ते च वारिताः प्रद्विषन्तो यदभ्याख्यान-परितापनादिकं करिष्यन्ति तन्निष्पन्नं प्रायश्चित्तम् ॥ ३३५२ ॥

**तेसिं अवारणे लहुगा, गोसे सागारियस्स सिट्ठम्मि ।**

---

१ °षयां यतनामसौ न जानीते । कथम् ? इति चेद् उच्यते—आवर्तनपीठिकायां जीवव्यपरोपणभया° भा० ॥ २ तादी° कां० विनाऽन्यत्र—°र्लघु । 'यन्त्रे' चचुइआकारके सञ्चारि° त० डे० मो० ले० । °र्लघु । वर्त्तनपीठिकायां सञ्चारि° भा० ॥
३ द्वारे गो-श्वान-मार्जारादयः प्रविशेयुः ! ते च यदि भा० ॥

**लहुगा य जं च जत्तो, असिट्ठे संकापदं जं च ॥ ३३५३ ॥**

अथैतद्दोषभयात् 'तेषां' द्यक्षरकादीनां[1] वारणं न करोति तदा चतुर्लघवः । ते चावारिताः सन्तः प्रविश्य धान्यं भक्षयेयुरपहरेयुर्वा ततो यदि 'गोसे' प्रत्यूषे सागारिकस्य कथयन्ति यथा 'अमुकेनामुकेन च रात्रौ धान्यमपहृतम्' ततश्चतुर्लघुकाः । 'शिष्टे' कथिते सति स रुष्टः सन् यद् द्यक्षरकादीनां परितापनादि 'यतः' बन्धन-घातनविशेषतः करिष्यति तन्निष्पन्नं प्रायश्चित्तम् । अथ न कथयन्ति ततोऽपि चतुर्लघुकाः । यच्च साधूनामुपरि शङ्कापदं शय्यातरः करोति—'नूनमेतैरपहृतं यदेवं न कथयन्ति' तत्र चतुर्लघु । निःशङ्किते चतुर्गुरु ॥ ३३५३ ॥

गवादीनां वारणे दोषानुपदर्शयति—

**तिरियनिवारण अभिहणण मारणं जीवघातो णासंते ।**
**खरिया छोभ विसाऽगणि, खरए पंतावणादीया ॥ ३३५४ ॥**

गवादीनां तिरश्चां निवारणे शृङ्गादिना संयतानामभिघातो मारणं वा भवेत् । ते च निवारिता नश्यन्तो जीवघातं कुर्युः । द्यक्षरिका च निवारिता संयतानां 'छोभम्' अभ्याख्यानं दद्यात्—एष श्रमणो मां प्रार्थयते; विषं वा दद्यात्, वसतिं वाऽग्निना प्रज्वालयेत् । द्यक्षरको वा प्रद्विष्टः प्रान्तापनादिकं कुर्यात् ॥ ३३५४ ॥

अथ स्तेनका येन कारणेन धान्यमपहरन्ति तत् प्रतिपादयति—

**आसन्नो य छणूसवो, कज्जं पि य तारिसेण धण्णेणं ।**
**तेणाण य आगमणं, अच्छह तुण्हिक्कका तेणा ॥ ३३५५ ॥**

क्षणः—एकदैवसिकः, उत्सवः—बहुदैवसिकः, क्षणयुक्त उत्सवः क्षणोत्सवः, शाकपार्थिवादिवद् मध्यपदलोपी समासः, क्षण उत्सवो वा इत्यर्थः । स स्तेनानां प्रत्यासन्नो वर्त्तते, तत्र च तेषां तादृशेन धान्येन कार्यमस्ति ततः स्तेनानामागमनम्, ततश्चागीनार्था भणन्ति—भदन्त ! स्तेनाः समायाताः सन्ति अतस्तूष्णीकास्तिष्ठथ । न कल्पते साधूनामेवमाख्यातुम्—अयं स्तेनः, अयं चोपचरक इति । अथवा संयतैः 'स्तेना आयाताः सन्ति' इत्युक्ते स्तेना ब्रुवते—संयताः ! तूष्णीकास्तिष्ठथ, अन्यथा युष्मानपद्रावयिष्यामः ॥ ३३५५ ॥

एवमुक्त्वा तैः किं कृतम् ? इत्याह—

**गहियं च णेहिँ धण्णं, घेत्तूण गता जहिं सि गंतव्वं ।**
**सागारिओ य भणती, सउणी वि य रक्खए णेड्डं ॥ ३३५६ ॥**

गृहीतं च 'तैः' स्तेनकैर्धान्यम्, गृहीत्वा च ते गतास्तत्र स्वस्थाने यत्र तेषां गन्तव्यम् । सागारिकश्चात्मीयकार्येण प्रभाते समागतो मुद्राभेदं दृष्ट्वा भणति—भगवन् ! 'शकुनिकाऽपि' पक्षिण्यपि तावदात्मनः 'नीडम्' आश्रयं रक्षति, भवद्भिः पुनरेतदपि न रक्षितमिति भावः ॥ ३३५६ ॥

**रासी ऊणे दट्ठुं, सव्वं णीतं व धण्णखेरिं वा ।**
**केण इमं तेणेहिं, असिट्ठे भद्देतर इमं तु ॥ ३३५७ ॥**

---

१ 'तेषां' द्व्यक्षरक-द्व्यक्षरिका-स्तेनानामवारणे प्रत्येकं चतुर्लघवः भा० ॥

स सागारिकस्तत्र धान्यराशीन् 'ऊनान्' तुच्छान् दृष्ट्वा, सर्वं वा धान्यं 'नीतम्' अपहृतं विलोक्य, यद्वा धान्यस्य खेरि-परिशाटिं दृष्ट्वा पृच्छति—केनेदमपहृतम्? । साधवो ब्रुवते—स्तेनैः । स भूयः पृच्छति—के पुनः स्तेनाः? । ततो यदि नाम्ना वर्णेन वयसा वा निर्दिश्य कथयन्ति ततः स्तेनानां ग्रहणा-ऽऽकर्षणादयो दोषाः । 'अशिष्टे' अकथिते 'एतैरेव हृतम्' इति शङ्का स्यात् तत्र भद्रकेतरदोषा भवन्ति । यद्यसौ सागारिको भद्रकस्तदा अनुग्रहं मन्येत । अथ 'इतरः' प्रान्तस्ततोऽप्रीतिकादयो दोषाः ॥ ३३५७ ॥

तेषु च भद्रक-प्रान्तदोषेष्विदं प्रायश्चित्तम्—

**लहुगा अणुग्गहम्मि, गुरुगा अप्पत्तियम्मि कायव्वा ।**
**कडुग-फरुसं भणंते, छम्मासा करभरे छेदो ॥ ३३५८ ॥**
**मूलं सएज्झएसुं, अणवट्ठप्पो तिए चउक्के य ।**
**रच्छा-महापहेसु य, पावति पारंचियं ठाणं ॥ ३३५९ ॥**

गाथाद्वयस्य व्याख्या प्राग्वत् (गा० ३३४८-४९) ॥ ३३५८ ॥ ३३५९ ॥

**एगमणेगे छेदो, दिय रातो विणास-गरहमादीया ।**
**जं पाविहिंति विहणिग्गतादि वसधिं अलभमाणा ॥ ३३६० ॥**

सागारिकः प्रद्विष्टः सन् एकेषां—तेषामेव अनेकेषां वा—सर्वसाधूनाम्, यद्वा एकस्य—तद्द्रव्यस्य अनेकेषां वा—तद्द्रव्या-ऽन्यद्रव्याणां व्यवच्छेदं विदध्यात् । अथवा दिवा निष्काशयति चतुर्लघु, रात्रौ निष्काशयति चतुर्गुरु । निष्काशिताश्च स्तेन-श्वापदादिभिर्विनाशं लोकाद्वा गर्हामासादयन्ति, 'एते स्तेनाः' इति कृत्वा निष्काशिताः, [1]◁ आदिग्रहणेन ग्रहणा-ऽऽकर्षणादयो दोषाः ▷ । यच्च विधं—अध्वा ततो निर्गता आदिशब्दादशिवादिनिर्गता वा तदीयदोषेण वसतिमलभमाना आत्मविराधनादिकं प्राप्स्यन्ति तन्निष्पन्नम् ॥ ३३६० ॥

एतेऽगीतार्थानां दोषा उक्ताः । अथ गीतार्थानधिकृत्य विधिमाह—

**गीयत्थेसु वि एवं, णिक्कारण कारणे अजतणाए ।**
**कारणे कडजोगिस्सा, कप्पति तिविहाएँ जतणाए ॥ ३३६१ ॥**

गीतार्था अपि यदि निष्कारणे धान्यशालायां तिष्ठन्ति, कारणे वा स्थिता यतनां न कुर्वन्ति ततस्तेष्वप्येवमेव दोषाः । अथ 'कृतयोगी' गीतार्थः कारणे तिष्ठति तदा तस्य 'त्रिविधया यतनया' अनुज्ञापनादिविषयया वक्ष्यमाणया तत्र स्थातुं कल्पते ॥ ३३६१ ॥ इदमेव स्पष्टतरमाह—

**निक्कारणम्मि दोसा, पडिबद्धे कारणम्मि निद्दोसा ।**
**ते चेव अजतणाए, पुणो वि सो लग्गती दोसे ॥ ३३६२ ॥**

धान्यप्रतिबद्धे गृहे निष्कारणं तिष्ठतामेते दोषा मन्तव्याः । कारणे तु यतनया तिष्ठन्तो निर्दोषाः । अथ कारणे स्थितो यतनां न करोति तदा 'तानेव' पूर्वोक्तान् दोषान् 'लगति' प्राप्नोति ॥ ३३६२ ॥ किं पुनस्तत् कारणम्? इत्याह—

**अद्धाणनिग्गतादी, तिक्खुत्तो मग्गिऊण असतीए ।**

---

१ ◁ ▷ एतन्मध्यगतः पाठः भा० नास्ति ॥

**गीतत्था जतणाए, वसंति तो धण्णसालाए ॥ ३३६३ ॥**

अध्वनिर्गतादयः 'त्रिकृत्वः' त्रीन् वारान् विशुद्धां वसतिं मार्गयित्वा यदि न प्राप्नुवन्ति तदा गीतार्था यतनया धान्यशालायां वसन्ति ॥ ३३६३ ॥ तामेव यतनामाह—

**तुस-धन्नाइं जहियं, णिप्परिसाड-परिसाडगाइं वा ।**
**तेसु पढमं तु ठायति, तेमऽसती दंतखज्जेसु ॥ ३३६४ ॥**

येषूपाश्रयेषु 'तुषधान्यानि' व्रीहि-यवादीनि निष्परिशाटीनि परिशाटीनि वा भवन्ति तेषु प्रथमतस्तिष्ठन्ति । तेषामभावे यत्र 'दन्तखाद्यानि' तिलादीनि धान्यानि तत्र तिष्ठन्ति ॥ ३३६४ ॥

तिष्ठतां च यदि वसतिस्वामी ब्रूयात्—यद्यस्माकम् अस्मद्बालकानां वा ज्योतिषादिकमक्षरादिविज्ञानं वा कथयिष्यथ गृहादिकं वा रक्षिष्यथ ततो वसतिं प्रयच्छाम इति । तत्र साधुभिर्वक्तव्यम्—

**ण वि जोइसं ण गणियं, ण अक्खरे ण वि य किंचि रक्खामो ।**
**अप्पस्सगा असुणगा, भातणखंभोवमा वसिमो ॥ ३३६५ ॥**

वयं नापि ज्योतिषं न गणितं नाक्षराणि वा शिक्षयामो न वा जानीमः, नापि च किञ्चिद् गृहादिकं रक्षामः, किन्तु भाजनस्तम्भोपमा वसामः । यथा भवतां भाजन-स्तम्भ-कुड्यादीनि सौस्थ्य-दौःस्थ्यव्यापारं न वहन्ति, एवं वयमपि भवद्भिर्मन्तव्याः । अत एव भवद्गृहे कस्यापि[1] कार्यस्य विपत्तिं पश्यन्तोऽप्यपश्यकाः । यदा च कोऽपि ब्रूयात्—इदं शय्यातरस्य कथयत तदा वयं शृण्वन्तोऽप्यश्रोतारो मन्तव्याः । ◁ यद्येवमभ्युपगच्छति तदा स्थातव्यम् ॥ ३३६५ ॥

अत एवाह —▷[3]

**निक्कारणम्मि एवं, कारणे दुलभे भणंतिमं वसभा ।**
**अम्हे ठितेल्लग चिय, अधापवत्तं वहह तुब्भे ॥ ३३६६ ॥**

'निष्कारणे' कारणाभावे एवं तिष्ठन्ति । अथाशिवादौ कारणे शुद्धा वसतिर्दुर्लभा ततो धान्यशालायां तिष्ठन्त इत्थं साधारणवचनं वृषभा भणन्ति—वयं तावदत्र स्थिता एव, यूयमपि यथाप्रवृत्तं दिवसदैवसिकं व्यापारं वहथैव ॥ ३३६६ ॥

गता अनुज्ञापनायतना । अथ स्वपक्षयतनामाह—

**आमं ति अब्भुवगते, भिक्ख-वियारादि णिग्गत मिएसु ।**
**भणति गुरू सागारिय, णाउं जे कत्थ किं धण्णं ॥ ३३६७ ॥**

'आमम्' इत्यनुमतार्थद्योतकमव्ययम् । यदि सागारिकेणानुमतम्—मम निष्प्रत्युपकारिणो भूत्वा यूयं तिष्ठत; ततस्तत्र स्थातव्यम् । स्थितानां च तत्रायं विधिः—यदा सर्वेऽपि मृगाः—अगीतार्था भिक्षायां विचारभूम्यादौ वा निर्गता भवन्ति तदा 'गुरुः' आचार्यः सागारिकमन्यव्यपदेशेन भणति । किमर्थम् ? इत्याह[4]—कुत्र किं धान्यं वर्त्तते ? इति ज्ञातुम् । "जे" इति पादपूरणे ॥ ३३६७ ॥

---

१ भवद्गृहे कस्यापि भा० कां० ॥ २ °स्याधिपत्ति त० डे० ॥ ३ ◁ ▷ एतन्मध्यगतः पाठः भा० नास्ति ॥ ४ °ह—'ज्ञातुं' परीक्षितुम्, "जे" इति वाक्यालङ्कारे, कुत्र किं धान्यं वर्त्तते ॥ भा० ॥

**सालीणं वीहीणं, तिल-कुलत्थाण मुग्ग-मासाणं ।**
**दिट्ठ मए सण्णिचया, अण्णे देसे कुडुंबीणं ॥ ३३६८ ॥**

शालीनां व्रीहीणां तिल-कुलत्थानां मुद्गानां माषाणां च सन्निचया अन्यस्मिन् देशे कुटुम्बिनां गृहेषु मया दृष्टाः ॥ ३३६८ ॥

**एवं च भणितमित्तम्मि कारणे सो भणाति आयरियं ।**
**अत्थि महं सण्णिचया, पेच्छह णाणाविहे धण्णे ॥ ३३६९ ॥**

एवं चाचार्येण भणितमात्रेऽपि स सागारिकः कथनकारणे क्रमप्राप्ते सति आचार्यं भणति—भगवन्! सन्ति मे बहवः सन्निचयाः, पश्यत नानाविधानि धान्यानि । एवं ब्रुवन् हस्तसंज्ञया निर्दिशति, यथा—अत्र शालयः सन्ति, अत्र गोधूमाः, अत्र तिला इत्यादि ॥ ३३६९ ॥

**उवलक्खिया य धण्णा, संथाराणं जहाविधि ग्गहणं ।**
**जो जस्स उ पाउग्गो, सो तस्स तहिं तु दायव्वो ॥ ३३७० ॥**

आचार्येणोपलक्षितानि तानि धान्यानि, ततः संस्तारकाणां 'यथाविधि' यथारत्नाधिकं ग्रहणे प्राप्तेऽपि तत्र सूरय औत्पत्तिकीं सामाचारीं स्थापयन्ति । कथम्? इत्याह—यः 'यस्य' शैक्ष-ग्लानादेर्गीतार्थादेर्वा धान्यस्य दूरेऽदूरे वा यत्र संस्तारकः प्रायोग्यः स तस्य तत्रावकाशे दातव्यः ॥ ३३७० ॥

**निक्खम-पवेसवज्जण, दूरेण अभाविया तु धण्णाणं ।**
**धण्णंतेण परिणता, चिलिमिणि दिवरत्तऽसुण्णं तु ॥ ३३७१ ॥**

यत्र सागारिको धान्यग्रहणार्थं निष्क्रामति प्रविशति वा तमवकाशं वर्जयित्वा साधुभिरासितव्यं शयितव्यं वा । ये पुनः 'अभाविताः' अगीतार्थास्ते धान्यानां दूरेण स्थाप्यन्ते । ये तु 'परिणताः' धर्मश्रद्धालवः स्थिरचेतसश्च ते धान्यानाम् अन्तेन—पार्श्वेन क्रियन्ते । धान्यानां चापान्तराले चिलिमिलिका दातव्या । गीतार्थपरिणामकैश्च दिवा च रात्रौ चाशून्यं कर्त्तव्यम् ॥ ३३७१ ॥

**ते तत्थ सन्निविट्ठा, गहिया संथारगा विहीपुव्वं ।**
**जागरमाणं वसंती, सपक्खजतणाएँ गीयत्था ॥ ३३७२ ॥**

'ते' साधवः 'तत्र' उपाश्रये सन्निविष्टाः सन्तः स्वाध्यायादिकं कुर्वन्तीति वाक्यशेषः । तैश्च संस्तारकाः 'विधिपूर्वं' यथा पूर्वोक्ता दोषा न भवन्ति तथा गृहीताः । तत्र च गीतार्थाः 'स्वपक्षयतनायै' स्वपक्षविषयरक्षार्थं 'जाग्रतः' सजागराः 'वसन्ति' स्वपन्ति ॥ ३३७२ ॥

**ठाणं वा ठायंती, णिसिज्ज अहवा सजागर सुवंति ।**
**बहुसो अभिद्दवेंते, वयणमिणं वायणं देमि ॥ ३३७३ ॥**

ये वा दृढसंहननास्ते 'स्थानं तिष्ठन्ति' कायोत्सर्गं कुर्वन्तीत्यर्थः । अथवा "निसिज्ज" ति

१ °ण सुवंती भा० । एतदनुसारेणैव भा० टीका । दृश्यतां टिप्पणी २ ॥
२ °तनां-स्वपक्षविषयां रक्षां कुर्वाणाः 'जाग्रतः' सजागराः स्वपन्ति भा० ॥
३ °न्तीति भावः । अथवा भा० ॥

निषण्णाः ते सूत्रार्थमनुप्रेक्षमाणास्तिष्ठन्ति । यश्च शैक्षादिरपरिणतस्तेषां धान्यराशीनां समीपे व्रजति तत्र गुरवो वृषभा वा सजागराः स्वपन्तस्तथा काशितादिशब्दं कुर्वन्ति यथाऽसौ प्रतिनिवर्त्तते । अथासौ 'बहुशः' भूयो भूयोऽभिद्रवति ततो गुरुभिः सामान्यत इदं वचनं वक्तव्यम्—आर्याः ! उत्तिष्ठत येन युष्मभ्यं वाचनां प्रयच्छामि । यद्वा तमेव साधुं भणन्ति—आर्य ! तुभ्यमहं वाचनां प्रयच्छामि ? ॥ ३३७३ ॥

**फिडियं धण्णट्ठं वा, जतणा वारेंति न उ फुडं बेंति ।**
**मा णं सोही[1] अण्णो, णित्थक्को लज्ज गमणादी ॥ ३३७४ ॥**

'स्फिटितं' दिङ्मूढतया द्वारात् परिभ्रष्टं 'धान्यार्थिनं वा' धान्यभक्षणाभिलाषिणं साधुं यतनया वारयन्ति, न पुनस्तस्य सम्मुखं 'स्फुटं' रूक्षवचनं ब्रुवते । कुतः ? इत्याह—मा स्फुटमभिधीयमानमन्यः श्रोष्यति, स च श्रुत्वा अन्येषां कथयेत्, ततश्च परम्परया सर्वैरपि साधुभिर्ज्ञाते 'नित्थक्कः' निर्लज्जो भवेत् । यद्वा 'ज्ञातोऽस्म्यहम्' इति लज्जया प्रतिगमन-वैहायसादीनि विदध्यात् ॥ ३३७४ ॥ कथं पुनर्वारयन्ति ? इत्याह—

**दारं न होइ एत्तो, णिद्दामत्ताणि पुंछ अच्छीणि ।**
**भण जं व संकियं ते, गिण्हह वेरत्तियं भंते ! ॥ ३३७५ ॥**

यः स्फिटितो धान्यार्थी वा साधुः स वक्तव्यः—आर्य ! यत्र भवान् गच्छति इतो द्वारं न भवति, निद्राप्रमत्ते वाऽक्षिणी 'प्रोञ्छ' हस्तेन परिस्पृशयोन्मीलयेत्यर्थः, यच्च किमपि ते सूत्रेऽर्थे वा शङ्कितं तदस्माकमग्रे भण येन निःशङ्कितं कुर्महे । यद्वा साधवो वक्तव्याः—'भदन्ताः !' आर्याः ! गृह्णीध्वं वैरात्रिकं कालं येन स्वाध्यायः क्रियते ॥ ३३७५ ॥

गता स्वपक्षयतना । अथ परपक्षयतनामाह[2]—( सर्वग्रन्थाग्रम्–२३४२० )

**परपक्खम्मि वि दारं, पिहंति जतणाएँ दो वि वारेंति ।**
**तह वि य अठायमाणे, उवेह पुट्ठा व साहिंति ॥ ३३७६ ॥**

'परपक्षे' गो-श्वान-मार्जारादौ प्रतिश्रयं प्रविशति यतनया द्वारं पिदधति । अथ द्वारं पिधातव्यं न भवति ततः 'द्वावपि' तिर्यङ्-मनुष्यौ दासी-दासौ वा स्त्री-पुरुषौ वा आक्रान्तिकाऽनाक्रान्तिकस्तेनौ वा प्रविशन्तौ निवारयन्ति । यदि तथापि 'न तिष्ठन्ति' धान्यग्रहणाद् नोपरमन्ते तत उपेक्षां कुर्वन्ति, तूष्णीकास्तिष्ठन्तीति भावः । सागारिकेण च 'केनेदं धान्यं[3] नीतम् ?' इति पृष्टाः सन्तः कथयन्ति— अमुकेनामुकया वा इति **सङ्ग्रहगाथा**समासार्थः ॥ ३३७६ ॥

अथैनामेव विवरीषुराह—

**पेहिय पमज्जिया णं, उवओगं काउ सणिय ढक्केंति ।**
**तिरिय णर दोन्नि एते, खर-खरि पुं-थी णिसिद्धितरे ॥ ३३७७ ॥**

चक्षुषा प्रत्युपेक्ष्य रजोहरणेन प्रमृज्य शनैर्यथा जीवानां विराधना न स्यात् तथा 'तं' द्वारं 'ढक्कयन्ति' स्थगयन्ति । अथ तदानीमचक्षुर्विषयं ततः श्रोत्रादिभिरिन्द्रियैरुपयोगं कृत्वा द्वार-

---

१ **सोहिति अ°** ता० ॥ २ एतदनन्तरं तादी० मो० ले० प्रतिषु **ग्रन्थाग्रम्**—७५०० इति वर्त्तते ॥ ३ **°न्यं गृहीतम् ?'** कां० ॥

पिधानं कुर्वन्ति । तथा द्वौ नाम–तिर्यङ्-नरौ, अथवा खरः–दासः खरिका–दासी एतौ, यद्वा पुरुष-स्त्रीरूपौ, अथवा निसृष्टः इतरश्च–अनिसृष्टः । निसृष्टो नाम–यस्य शय्यातरेण प्रवेशोऽनुज्ञातः, अनिसृष्टस्तद्विपरीतः । अथवा निसृष्टाः–आक्रान्तिकाः स्तेनाः, अनिसृष्टाः अनाक्रान्तिकाः । एते धान्यग्रहणं कुर्वन्तो वारणीयाः ॥ ३३७७ ॥ कथम् ? इत्याह—

**गेण्हंतेसु य दोसु वि, वयणमिणं तत्थ बिंति गीयत्था ।**
**बहुगं च णेसि धण्णं, किं पगतं होहिती कल्लं ॥ ३३७८ ॥**

स्त्री-पुरुषादिरूपयोर्द्वयोरपि धान्यं गृह्णानयोर्गीतार्था इदं वचनं ब्रुवते—भो भद्र ! बह्विदं धान्यमद्य नयसि किं कल्ये 'प्रकृतं' प्रकरणं भविष्यति ? ॥ ३३७८ ॥

**नीसट्ठेसु उवेहं, सत्थेण व तासिता उ तुंण्हिक्का ।**
**बहुसो भणाति महिलं, जह तं वयणं सुणति अण्णो ॥ ३३७९ ॥**

निसृष्टाः–आक्रान्तिकस्तेनाः ये बलादपि हरन्ति तेषु समागतेषु उपेक्षां कुर्वन्ति–तूष्णीकास्तिष्ठन्ति । अथवा खड्गादिना शस्त्रेण त्रासिताः सन्त इतरेष्वप्यनाक्रान्तिकेषु तूष्णीका भवन्ति । अथ महिला काचित् तत्र धान्यं नयति ततस्तां महिलां तथा भणन्ति यथा तद् वचनमन्यः शृणोति ॥ ३३७९ ॥ इदमेव व्यक्तीकरोति—

**साहूणं वसहीए, रत्तिं महिला ण कप्पती एंती ।**
**बहुगं च णेसि धण्णं, किं पाहुणगा विकालो य ॥ ३३८० ॥**

साधूनां वसतौ रात्रौ 'महिला' स्त्री न कल्पते "एंती" आगच्छन्ती, त्वं च बह्विदं धान्यं गृह्णासि किं प्राघुणकाः समायाताः ?, विकालश्च सम्प्रति वर्त्तते ततो नेदानीं ते ग्रहीतुमवसर इति ॥ ३३८० ॥

**तेणेसु णिसट्ठेसुं, पुव्वा-ऽवररत्तिमल्लियंतेसु ।**
**तेणवियरक्खणट्ठा, वयणमिणं बेंति गीतत्था ॥ ३३८१ ॥**

'निसृष्टेषु' आक्रान्तिकेषु स्तेनेषु पूर्वरात्रमपररात्रं वा तत्राऽऽलीयमानेषु स्तेनेभ्यः सकाशाद् बीजानां रक्षणार्थं गीतार्था उच्चशब्देनेदं वचनं ब्रुवते ॥ ३३८१ ॥ किं तत् ? इत्याह—

**जागरह नरा ! णिच्चं, जागरमाणस्स वड्ढते बुद्धी ।**
**जो सुवति ण सो धण्णो, जो जग्गति सो सया धण्णो ॥ ३३८२ ॥**

भो नराः ! नित्यं 'जागृत' जाग्रतस्तिष्ठत, यतो जाग्रतो बुद्धिः सूत्रा-ऽर्थानुप्रेक्षादिना वर्द्धते, अत एव यः स्वपिति नासौ 'धन्यः' ज्ञानादिधनार्हः, यस्तु जागर्त्ति स सदा धन्यः ॥ ३३८२ ॥

**सीतंति सुवंताणं, अत्था पुरिसाण लोगसारत्था ।**
**तम्हा जागरमाणा, विधुणध पोराणयं कम्मं ॥ ३३८३ ॥**

स्वपतां पुरुषाणाम् 'अर्थाः' ज्ञानादयः 'लोकसारार्थाः' त्रैलोक्यप्रधानप्रयोजनभूताः 'सीदन्ति' हानिमुपगच्छन्ति । यत एवं तस्माद् जाग्रतः सन्तः पुरातनं कर्म विधूनयत ॥ ३३८३ ॥

**सुवति सुवंतस्स सुतं, संकित खलियं भवे पमत्तस्स ।**

१ तुसिणीया ता० ॥

**जागरमाणस्स सुतं, थिर-परिचितमप्पमत्तस्स ॥ ३३८४ ॥**

'स्वपतः' निद्रायमाणस्य 'श्रुतम्' आचारादिकं 'स्वपिति' विस्मरति । 'प्रमत्तस्य' विकथादिप्रमादनिमग्नस्य 'शङ्कितं' 'किमत्र प्रदेशे इदमालापकपदमर्थपदं वा भवति ? उत न ?' इति संशयकोडीकृतम्; स्खलितं वा भवति, न परावर्त्तयतः शीघ्रमागच्छति किन्तु संस्मरणेनेति भावः । 'जाग्रतस्तु' विकथादिप्रमादेनाप्रमत्तस्य श्रुतं स्थिर-परिचितं भवति । स्थिरं नाम—निःशङ्कितम् अविस्मरणधर्मकं वा, परिचितं नाम—परावर्त्यमानं क्रमेणोत्क्रमेण वा समागच्छति द्रुतं वा समाप्तिं याति ॥ ३३८४ ॥[3]

**नालस्सेण समं सुक्खं, न विज्जा सह निद्दया ।**
**न वेरग्गं ममत्तेणं, नारंभेण दयालुया ॥ ३३८५ ॥**

नालस्येन समं सौख्यं, न विद्या सह निद्रया ।
न वैराग्यं ममत्वेन, नारम्भेण दयालुता ॥ इति ॥ ३३८५ ॥ अपि च—

**जागरिया धम्मीणं, आहम्मीणं च सुत्तया सेया ।**
**वच्छाहिवभगिणीए, अकहिंसु जिणो जयंतीए ॥ ३३८६ ॥**

धार्मिकाणां जागरिका श्रेयसी, अधार्मिकाणां तु सुप्तता श्रेयसी, एवं वच्छाधिपस्य—शतानीकनृपतेर्भगिन्याः जयन्तीनामिकायाः 'जिनः' वर्द्धमानस्वामी कथितवान् ।

अत्र कथानकम्—

वच्छाजणवए कोसंबी नयरी । सयाणिओ राया । तस्स जयंती नाम भगिणी परमसाविया । अन्नया तत्थ भगवं वद्धमाणसामी समोसढो । जयंती हट्ठ-तुट्ठा निग्गया भगवन्तं वंदित्ता पुच्छइ—सुत्तया भंते ! सेया ? जागरिया सेया ? । भगवया वागरियं—जयंती ! धम्मियाणं जागरिया सेया न सुत्तया, अधम्मियाणं सुत्तया सेया न जागरिया । एवं एक्कतीए आलावगा भाणियव्वा ( शतक १२ उद्देश २ ) ॥  ॥ ३३८६ ॥ किञ्च—

**सुवइ य अयगरभूओ सुयं च से नासई अमयभूयं ।**
**होहिइ गोणब्भूओ, नट्ठम्मि सुए अमयभूए ॥ ३३८७ ॥**

यः खलु अजगरभूतः स निश्चिन्तः निर्भरं स्वपिति नान्यः । तस्य च एवंस्वपतः श्रुतमपि 'अमृतभूतं' माधुर्यादिगुणैः सुधासहोदरं नश्यति । नष्टे च श्रुतेऽमृतभूते 'गोभूतः' बलीवर्द-कल्पोऽसौ भविष्यति ॥ ३३८७ ॥

एवमादीनि वाक्यानि गीतार्थास्तत्र महता शब्देनोद्घोषयन्ति । यद्येवमुपरताः स्तेनास्ततो लष्टम्, अथ नोपरतास्ततः किं कर्त्तव्यम् ? इत्याह—

---

१-२ परिजितं त० विना ॥

३ एतदनन्तरं भा० प्रतौ "सुवइ य अय०" ३३८७ गाथा सटीका, तदनन्तरं "जागरिया०" ३३८६ गाथा सटीका जयन्तीकथानकं च, तदनन्तरं पुनः "नालस्सेण०" ३३८५ गाथा वर्त्तते, सटीका चेत्थंरूपा— एतान्यालस्यादीनि कुर्वतः सौख्यादीनि न भवन्तीति भावः ॥ ३३८५ ॥ एतदनन्तरं च "सुवइ य०" ३३८७ गाथाटीकानन्तरवर्त्ति-एवमादीनि०-इत्यवतरणमुपलभ्यते अपि ॥

**तासेऊण अवहिए[1], अचेइय हिए व गोसि साहंति ।**
**जाणंता वि य तेणं, साहंति न वन्न-रूवेहिं ॥ ३३८८ ॥**

यद्याक्रान्तिकस्तेनैः साधून् खड्गादिशस्त्रेण त्रासयित्वा धान्यमपहृतम्, अनाक्रान्तिकस्तेना वा समागच्छन्तः संयतैः न चेतिताः—न ज्ञाताः एवं तैरप्यपहृते 'गोसे' प्रभाते शय्यातरस्य कथयन्ति, यथा—स्तेनैर्धान्यमपहृतम् । अथासौ भूयः प्रश्नयेत्—के पुनः स्तेनाः ? । ततो यद्यपि तान् वर्ण-रूपादिभिर्जानन्ति तथापि न कथयन्ति, मा भूवन् ग्रहणा-ऽऽकर्षणादयस्तेषामुपद्रवाः । अथ वर्णादिभिरकथितेषु तेषु साधवः स्तैन्यार्थकारितया शङ्क्यन्ते ततो यतनया कथयितव्याः ॥ ३३८८ ॥ इदमेव भावयति—

**सुण सावग ! जं वत्तं, तेणाणं संजयाण इह अज्ज ।**
**तेणेहिं पविट्ठेहिं, जाहे नीएक्कसिं धन्नं ॥ ३३८९ ॥**
**ताहे उवगरणाणिं, भिन्नाणि हियाणि चेव अन्नाणि ।**
**हरिओवही वि जाहे, तेणा न लभंति ते पसरं ॥ ३३९० ॥**
**गहियाऽऽउह-प्पहरणा, जाधे वधाए समुट्ठिया अम्हं ।**
**नत्थि अकम्मं ति ततो, एतेसि ठिता मु तुण्हिक्का ॥ ३३९१ ॥**

हे श्रावक ! शृणु स्तेनानां संयतानां च इह अद्य यद् वृत्तम्—यदा किल स्तेनैः प्रविष्टैरेकशो धान्यं 'नीतं' बहिर्निष्काशितं तत उपकरणान्यप्यस्मत्सम्बन्धीनि तैः कानिचिद् भिन्नानि, अन्यानि पुनरपहृतानि । ततो हृतोपधयोऽपि ते स्तेना यदा द्वितीयं वारं धान्य हर्तुकामा अप्यस्माकं पार्श्वतः प्रसरं न लभन्ते तदा गृहीतायुध-प्रहरणा अस्माकं वधाय ते समुत्थिताः । अभिहितं च तैः—श्रमणाः ! तूष्णीम्भावमास्थायापसरत यूयम्, अन्यथा सर्वानपद्रावयिष्याम इति । ततश्चिन्तितमस्माभिः—नास्त्यमीषां पापकर्मकारिणामकर्मेति । ततो वयमेतेषु तूष्णीकाः स्थिताः ॥ ३३८९ ॥ ३३९० ॥ ३३९१ ॥ एवमाचार्येणोक्ते सति शय्यातरः किमुक्तवान् ? इत्याह—

**सेज्जायरो य भणती, अण्णं धण्णं पुणो वि होहिति णे ।**
**एसो अणुग्गहो मे, जं साधु ण दुक्खविओ को वि ॥ ३३९२ ॥**

शय्यातरः सूरीन् भणति—भगवन् ! अस्माकमन्यदपि धान्यं पुनरपि भविष्यति, परमेष महाननुग्रहो मे संवृत्तः, यत् कोऽपि युष्मदीयः साधुः स्तेनैर्न दुःखापित इति ॥ ३३९२ ॥

सूत्रम्—

**अह पुण एवं जाणिज्जा नो रासिकडाइं नो पुंजकडाइं नो भित्तिकडाइं नो कुलियकडाइं कोट्ठाउत्ताणि वा पल्लाउत्ताणि वा मंचाउत्ताणि वा मालाउत्ताणि वा ओलित्ताणि वा लित्ताणि वा पिहियाणि वा**

---

१ **°ए, गोसे सागारियस्स साहंति** ताभा० भा० कां० विना ॥

**लंछियाणि वा मुद्दियाणि वा, कप्पइ निग्गंथाण वा निग्गंथीण वा वासावासं वत्थए ३ ॥**

◁ अथ पुनरेवं जानीयात्—नो राशीकृतानि नो पुञ्जीकृतानि नो भित्तिकृतानि नो कुलिकाकृतानि कोष्ठागुप्तानि वा पल्यागुप्तानि वा मञ्चागुप्तानि वा मालागुप्तानि वा अवलिप्तानि वा लिप्तानि वा पिहितानि वा लाञ्छितानि वा मुद्रितानि वा । तत्र ▷ कोष्ठे–कुशूले आगुप्तानि–प्रक्षिप्य रक्षितानि कोष्ठागुप्तानि । एवमुत्तरत्रापि भावनीयम् । नवरं पल्यं–वंशकटकादिकृतो धान्याधारविशेषः, मञ्चः–स्थूणानामुपरिस्थापितवंशकादिमयो लोकप्रसिद्धः, मालकः–गृहस्योपरितनो भागः, 'अवलिप्तानि नाम' द्वारदेशे पिधानेन सह गोमयादिना कृतोपलेपानि, 'लिप्तानि' मृत्तिकया सर्वतः खरण्टितानि, 'पिहितानि' स्थगितानि, 'लाञ्छितानि' रेखा-ऽक्षरादिभिः कृतलाञ्छनानि, 'मुद्रितानि' मृत्तिकादिमुद्रायुक्तानि । एवंविधेषु धान्येषु कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा वर्षावासं वस्तुमिति सूत्रार्थः ॥ अथ भाष्यम्—

**कोट्ठाउत्ता य जहिं, पल्ले माले तधेव मंचे य ।**
**ओलित्त पिहिय मुद्दिय, एरिमएँ ण कप्पती वासो ॥ ३३९३ ॥**

यत्रोपाश्रये कोष्ठागुप्तानि पल्यागुप्तानि मालागुप्तानि मञ्चागुप्तानि अवलिप्तानि पिहितानि मुद्रितानि, उपलक्षणत्वाद् लिप्तानि लाञ्छितानि वा धान्यानि सम्भवन्ति, ईदृशे न कल्पते वासः ॥ ३३९३ ॥ अथ सूत्रस्यैव विषमपदानि व्याचष्टे—

**छगणादी ओलित्ता, लित्ता मट्टियकता उ ते चेव ।**
**कोट्टियमादी पिहिता, लित्ता वा पल्ल-कडपल्ला ॥ ३३९४ ॥**
**ओलिंपिऊण जहि अक्खरा कया लंछियं तयं बिंति ।**
**जहियं मुद्दा पडिया, होति तगं मुद्दियं धण्णं ॥ ३३९५ ॥**

द्वारदेशे यानि छगणादिना लिप्तानि तान्यवलिप्तानि । यानि तु मृत्तिकया कृतानि–खरण्टितानि तानि लिप्तानि । कोष्ठिकादीनि यानि द्वारदेशे स्थगितानि तानि पिहितानि । पल्यकटपल्यानि तु लिप्तानि भवन्ति । इह पल्यात् कटपल्यमुच्चतरं भवतीति विशेषः ॥ ३३९४ ॥

अवलिप्य 'यत्र' धान्येऽक्षराणि कृतानि तद् लाञ्छितमिति ब्रुवते । यत्र तु धान्ये मुद्रा पतिता तद् मुद्रितं भवति ॥ ३३९५ ॥

**उडुबद्धम्मि अतीए, वासावासे उवट्ठिते संते ।**
**ठायंतगाण लहुगा, कास अगीयत्थ सुत्तं तु ॥ ३३९६ ॥**

ऋतुबद्धे कालेऽतीते वर्षावासे उपस्थिते सति यदि कोष्ठागुप्तादिधान्ययुक्ते प्रतिश्रये तिष्ठन्ति तदा चतुर्लघवः । कस्य पुनरेतत् प्रायश्चित्तम् ? । सूरिराह—अगीतार्थस्य । 'सूत्रं तु' ◁ "कल्पते कोष्ठागुप्तादिधान्येषु वर्षावासे वस्तुम्" इतिलक्षणं ▷ गीतार्थविषयं मन्तव्यमिति वाक्यशेषः ॥ ३३९६ ॥ इत ऊर्ध्वम्—

---

१ ◁ ▷ एतन्मध्यगतः पाठः भा० नास्ति ॥    २ °कानि । शेषं प्राग्वदिति सूत्रार्थः भा० ॥

"नत्थि अगीयत्थो वा, गीतो वा कोऽपि वण्णिओ सुत्ते ।" ( गा० ३३१३ )

इत्यादिका गाथाः पूर्वोक्ता एव तावदध्येतव्याः यावत्—

ते तत्थ सन्निविट्ठा, गहिता संथारगा जहिच्छाए ।
णाणादेसी साधू, कासइ इच्छा समुप्पण्णा ॥ ( गा० ३३४१ )

कीदृशी पुनरिच्छा तस्य समुद्भूता ? इत्युच्यते—

**अणुभूता धण्णरसा, नवरं मुत्तूण गंधसालीणं ।**
**काहामि कोउहल्लं, थेरीएँ परंधणं भणियं ॥ ३३९७ ॥**

अनुभूतास्तावत् सर्वेषामपि धान्यानां रसाः, नवरं गन्धशालीनां रसं मुक्त्वा, तेऽद्यापि नास्वादिता इति भावः । अतः 'करिष्यामि' पूरयिष्यामि कौतूहलमिति विचिन्त्य तेन कोष्ठ-पल्यादेः शालीनाकृष्य स्थविराया अग्रे 'प्ररन्धनं' 'पाकं कुरुष्व' इति वचो भणितम् ॥३३९७॥

इदमेव स्पष्टयति—

**इहरा कहासु सुणिमो, इमे हु ते कलमसालिणो सुरभी ।**
**थोवे वि णत्थि तित्ती, को य रसो अण्णमण्णाणं ॥ ३३९८ ॥**

'इतरथा' अद्यदिनात् पूर्वं वयं गन्धशालीन् 'कथासु' वार्त्तान्तरेषु शृणुमः, इमे तु प्रत्यक्ष-मुपलभ्यमानाः 'ते' कथान्तरश्रुताः कलमशालयः सुरभयः, तथा स्तोकेऽप्यत्र कलमशालौ नास्ति तृप्तिः, कश्च 'रसः' आस्वादोऽन्योऽन्यमिश्रितानाममीषाम् ? । इत्थं विचिन्त्य पल्यात् तान् शालीनाकृष्य स्थविरायाः समर्पयति । साऽप्युपस्कृत्य तस्य संयतस्य दत्त्वा शेषमात्मना भुङ्क्ते । ततोऽसौ लब्धास्वादो दिवसे दिवसे एवमेव विदधाति ॥३३९८॥ ततः किमभूद् ? इत्याह—

**निग्घोलियं च पल्लं, कज्जे सागारियस्स अतिगमणं ।**
**सागारिओ विसन्नो, भीतो पुण पासए कूरं ॥ ३३९९ ॥**

तेन संयतेनैवं शालीनपहरता तत् पल्यं 'निर्घोलितं' रिक्तीकृतम् । ततः कश्चिदात्मीयकार्ये सागारिकस्य तत्र 'अतिगमनं' प्रवेशोऽभवत् । ततः सागारिकः पल्यं रिक्तीकृतं दृष्ट्वा 'विषण्णः' विषादमुपगतवान् । भीतश्च 'मा स्तेनादयोऽत्र प्रविष्टा भवेयुः' इति शङ्कया तत्र परिभ्रमन् शालिकूरमानीतं पश्यति ॥ ३३९९ ॥

**सो भणइ कओ लद्धो, एसो अम्हं खु लद्धिसंपन्नो ।**
**ओभावणं व कुज्जा, धिरत्थु ते एरिसो लाभो ॥ ३४०० ॥**

'सः' सागारिको भणति—कुत एष शालिकूरो लब्धः ? । ततः साधवस्तदीयं वृत्तान्तमजा-नाना ब्रुवते—एष साधुरस्माकं लब्धिसम्पन्नोऽतः प्रतिदिनमीदृशं शालिकूरमानयति । ततः सागारिकस्तं साध्वाभासं ब्रूते—धिगस्तु मुण्ड ! तवेदृशं लाभं येन प्रतिदिवसं शालीनपहृत्या-स्माकं पल्यं रिक्तीकृतमिति । अपभ्राजनां वाऽसौ लोकमध्ये कुर्यात्, यथा—स्तेनका अमी । अत्र च भद्रक-प्रान्तकृता दोषा भवन्ति ॥ ३४०० ॥ भद्रकस्तावदिदमभिदध्यात्—

**इहरह वि ताव अम्हं, भिक्खं व बलिं व गिण्हह न किंचि ।**

---

१ परिसे लाभे भा० ॥ २ तत आचार्यस्तदीयवृत्तान्तमजानानो ब्रूते भा० ॥

**इण्हिं खु तारिओ मिं, ठवेमि अन्ने वि जा घन्ने ॥ ३४०१ ॥**

**उक्तार्था** ( गा० ३३४७ ) ॥ ३४०१ ॥

यस्तु प्रान्तो भवति स ब्रूयात्—अहो ! धर्मकञ्चुकप्रविष्टा अमी लोकं मुष्णन्तीत्यादि । **अत्र**—

"लहुगा अणुग्गहम्मी, अप्पत्तिय धम्मकंचुए गुरुगा ।" ( गा० ३३४८ )

इत्यारभ्य

"सेज्जायरो पभणई, अन्नं धन्नं पुणो वि होहिइ णे ।

एसो अणुग्गहो मे, जा साहु न दुक्खविओ कोइ ॥ ( गा० ३३९२ )

इतिपर्यन्ता गाथास्तदवस्था एवात्र द्रष्टव्याः ॥

## विकटसूत्रम् ४

सूत्रम्—

**उवस्सयस्स अंतोवगडाए सुरावियडकुंभे वा सोवीरकवियडकुंभे वा उवनिक्खित्ते सिया, नो कप्पइ निग्गंथाण वा निग्गंथीण वा अहालंदमवि वत्थए । हुरत्था य उवस्सयं पडिलेहमाणे नो लभेज्जा, एवं से कप्पइ एगरायं वा दुरायं वा वत्थए । जे तत्थ एगरायाओ वा दुरायाओ वा परं वसइ से संतरा छेए वा परिहारे वा ४ ॥**

एवमुदकादिसूत्राण्यप्युच्चारणीयानि । अथामीषां कः सम्बन्धः ? इत्याह—

**पगयं उवस्सएहिं, वाघाया तेसि होंति अन्नोन्ना ।**
**साहारण-पत्तेगा, जा पिंडो एस संबंधो ॥ ३४०२ ॥**

इहोपाश्रयैः 'प्रकृतम्' अधिकारो वर्त्तते । 'तेषां च' उपाश्रयाणां 'व्याघाताः' दोषाः 'अन्योऽन्ये' अपरापरे ◁ बीजे-विकटोदकप्रतिबद्धतादयो भवन्ति । तेषु च यत्राल्पतरा दोषा▷ भवन्ति ◁ तत्र स्थातव्यम् ▷ इति ज्ञापनार्थं साधारणसूत्र-प्रत्येकसूत्राणामारम्भः क्रियते—"जा पिंडो" त्ति "उवस्सयस्स अंतोवगडाए पिंडए वा लोयए वा०" ( उ० २ सू० ८ ) इत्यादिकं वक्ष्यमाणं **पिण्डसूत्रं** यावद् ◁ एष सम्बन्धो मन्तव्यः ▷ । साधारणसूत्राणि नाम—यत्रैकसूत्रे

---

१ **घाघातो तेसि होति अन्नोन्ने** ताभा० ॥ २-३-४ ◁ ▷ एतन्मध्यगतः पाठः भा० नास्ति । "पगतं० गाधा । तेसिं उवस्सगाणं जत्थ दोसो णत्थि । तस्स अलंभे जत्थ जत्थ अप्पतरा दोसा तत्थ तत्थ ठाइयव्वं । 'साधारण' त्ति एकसूत्रे यानि बहूनि सूत्रपदानि गृहीतानि । 'पत्तेय' त्ति एकसूत्रे यदेकपदं गृहीतम्, **प्रदीप-ज्योतिःसूत्रे इत्यर्थः** । जाव "उवस्सगस्स अंतो० पिंडए०" **एषां सर्वेषामेव एष** सम्बन्धो पदिष्टो भवति ॥ **इमो पत्तेयसुत्तसंबंधो—साहुच्छू०** गाधा **वण्ण्या** ॥ इति **चूर्णौ विशेषचूर्णौ च** ॥

व्यादिप्रभृतीनि बहूनि पदानि भवन्ति । प्रत्येकसूत्राणि तु—यत्रैकसूत्रे एकमेव पदम् । ततश्चात्र **विकटसूत्रमुदकसूत्रं पिण्डसूत्रमित्येतानि** त्रीणि साधारणसूत्राणि, **प्रदीपसूत्रं ज्योतिःसूत्रं च** प्रत्येकसूत्रे ॥ ३४०२ ॥

एष पञ्चानामपि सूत्राणां सम्बन्धः सामान्यत उक्तः । अथ विशेषतः सम्बन्धमाह—

**सालुंच्छूहि व कीरति, विगडं भुत्त तिसितोदयं पिबति ।**
**आहारिमम्मि दोसा, जह तह पिज्जे वि जोगोऽयं ॥ ३४०३ ॥**

शालिभिरिक्षुभिर्वा विकटं क्रियते, अतो **धान्यसूत्रानन्तरमिदं विकटसूत्रमारभ्यते** । शालि-कूरादिकमाहारं भुक्त्वा तृषितो भवेत्, तृषितश्चोदकं पिबतीति **उदकसूत्रं** निरूपणीयम् । यद्वा 'आहारिमे' तिलादौ भुक्ते सति यथा दोषा भवन्ति तथा 'पेयेऽपि' मद्यादौ पीयमाने दोषा भवन्त्येवेति तत्प्रतिबद्धे प्रतिश्रयेऽपि न स्थातव्यमिति ॥ ३४०३ ॥

अनेन सम्बन्धेनायातस्यास्य व्याख्या—सुराविकटं पिष्टनिष्पन्नम्, सौवीरकविकटं तु पिष्टवर्जैर्गुडादिद्रव्यैर्निष्पन्नम् । ततः सुराविकटकुम्भो वा सौवीरकविकटकुम्भो वा यत्रोपाश्रयस्यान्तर्वगडायामुपनिक्षिप्तः स्यात् तत्र नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा यथालन्दमपि कालं वस्तुम् । "हुरत्था य" त्ति देशीपदं बहिरर्थाभिधायकम्, चशब्दो वाक्यभेदद्योतकः, ततोऽयमर्थः—अथ बहिरन्योपाश्रयं प्रत्युपेक्षमाणोऽपि नो लभेत तत एवं "से" तस्य साधोः कल्पते एकरात्रं वा द्विरात्रं वा तत्र वस्तुम् । यस्तत्रैकरात्राद्वा द्विरात्राद्वा 'परम्' ऊर्ध्वं वसति "से" तस्य संयतस्य 'स्वान्तरात्' स्वस्वकृतं यदन्तरं—त्रिरात्र-चतूरात्रादिकालावस्थानरूपं तस्मात् 'छेदो वा' पञ्चरात्रिन्दिवादिः 'परिहारो वा' मासलघुकादिस्तपोविशेषो भवतीति सूत्रार्थः ॥

अथ विस्तरार्थं भाष्यकृद् बिभाणिषुराह—

**देसीभासाइ कयं, जा बहिया सा भवे हुरत्था उ ।**
**बंधऽणुलोमेण कयं, परिहारो होइ पुव्वं तु ॥ ३४०४ ॥**

"हुरत्था" इति यत् पदं तद् देशीभाषया 'कृतं' निबद्धं बहिरर्थाभिधायकम् । ततो या विवक्षितोपाश्रयाद् बहिर्वर्तिनी वगडा सा "हुरत्था" इति शब्देनोच्यते । अथ परः प्राह—परिहारस्तावत् तपोविशेष उच्यते, छेदस्तु पर्यायच्छेदरूपः, ततः सूत्रे "से संतरा परिहारे वा छेए वा" इति पठितुमुचितम्, किमर्थं व्यत्यासेन पाठः ? इत्याशङ्क्याह—बन्धानुलोम्येन सूत्रे परिहारपदात् पूर्वं छेदपदं कृतम् । किमुक्तं भवति ?—एवंविधो हि पाठः सुललितपदविन्यासतया सुश्लिष्टो भवतीति कृत्वा सूत्रकृता प्रथमं छेदपदमुपन्यस्तम् ॥ ३४०४ ॥

**अहवण वारिज्जंतो, निक्कारणओ व तिण्ह व परेणं ।**
**छेयं चिय आवज्जे, छेयमओ पुव्वमाहंसु ॥ ३४०५ ॥**

अथवा यदि तत्र विकटयुक्तोपाश्रये गुर्वादिना वार्यमाणः 'निष्कारणतो वा' दर्पतस्तिष्ठति, त्रयाणां वाऽहोरात्राणां परतस्तिष्ठति, तदा छेदाख्यमेव प्रायश्चित्तमसावापद्यते, अतश्छेदपदं 'पूर्वं' प्रथममुक्तवन्तो भगवन्तो **भद्रबाहुस्वामिनः** ॥ ३४०५ ॥

---

१ °लुच्छूहि भा० ॥ २ अतस्तदनन्तर° भा० ॥

अथ सुरा-सौवीरकपदे व्याचष्टे—

**पिट्ठेण सुरा होती, सोवीरं पिट्ठवज्जियं जाणे ।**
**ठायंतगाण लहुगा, कास अगीयत्थ सुत्तं तु ॥ ३४०६ ॥**

व्रीह्यादिसम्बन्धिना पिष्टेन यद् विकटं भवति सा सुरा । यत्तु पिष्टवर्जितं[1] द्राक्षा-खर्जूरादिभिर्द्रव्यैर्निष्पाद्यते तद् मद्यं सौवीरकविकटं जानीयात् । एतद् द्विविधमपि यत्रोपनिक्षिप्तं भवति तत्रोपाश्रये तिष्ठतां चतुर्लघुकाः । कस्य पुनरेतत् प्रायश्चित्तम् ? इत्याह—अगीतार्थस्य । 'सूत्रं तु' "कप्पइ एगरायं वा दुरायं वा वत्थए" इत्यादिलक्षणं गीतार्थविषयं मन्तव्यम् ॥ ३४०६ ॥

इत ऊर्ध्वं "नत्थि अगीयत्थो वा०" ( ३३१३ ) इत्यादिकाः "कासइ इच्छा समुप्पन्ना" ( गा० ३३४१ ) इतिपर्यन्ता गाथास्तदवस्था एवात्र द्रष्टव्याः । अथ कीदृशी तस्येच्छा समुत्पन्ना ? इत्याह—

**अणुभूआ मज्जरसा, णवरिं मुत्तूणिमेसि मज्जाणं ।**
**काहामि कोउहल्लं, पासुत्तेसुं समारद्धो ॥ ३४०७ ॥**

अनुभूता मया बहवो मद्यरसाः, परममीषां मद्यानां रसान् मुक्त्वा, अतः 'करिष्यामि' पूरयिष्यामि कौतूहलमिति विचिन्त्य प्रसुप्तेषु शेषसाधुषु समारब्धोऽसौ तद्भाजनमुद्घाट्य विकटपानं कर्तुम् ॥ ३४०७ ॥ ततश्च—

**इहरा कहासु सुणिमो, इमं खु तं काविसायणं मज्जं ।**
**पीते वि जायति मती, तज्जुसिताणं किमु अपीते ॥ ३४०८ ॥**

'इतरथा' अद्यदिनात् पूर्वं कथास्वेव शृणुमः, परमिदं 'तत्' कथान्तरश्रुतं कापिशायनं नाम मद्यम् । एवं तद्-मद्यं जुषितं-सेवितं यैस्ते तज्जुषिताः,[3] गृहवासे विकटपायिन इत्यर्थः, तेषां पीतेऽपि विकटे स्मृतिरुपजायते, किं पुनरपीते ? ॥ ३४०८ ॥

**विगयम्मि कोउहल्ले, छड्डवयविराहण त्ति पडिगमणं ।**
**वेहाणस ओहाणे, गिलाणसेहेण वा दिट्ठो ॥ ३४०९ ॥**

गतार्था ( गा० ३३४३ ) ॥ ३४०९ ॥

**उड्डाहं व करिज्जा, विप्परिणामो व हुज्ज सेहस्स ।**
**गिण्हंतेण व तेणं, खंडिय विद्धे व भिन्ने वा ॥ ३४१० ॥**

शैक्षस्तं संयतं विकटपानं कुर्वाणं दृष्ट्वा लोकस्य पुरत उड्डाहं कुर्यात्, विपरिणामो वा शैक्षस्य भवेत्, विपरिणतश्च सम्यग्दर्शनं चारित्रं लिङ्गं वा परित्यजेत् । तथा 'तेन' संयतेन विकटभाजनं गृह्णता वाशब्दाद् मुञ्चता वा तद् भाजनं 'खण्डितम्' एकदेशभग्नं 'विद्धं वा' पातितच्छिद्रं 'भिन्नं वा' द्विधाकृतं भवेत् ॥ ३४१० ॥ इत ऊर्ध्वं "फेडिय मुद्दा तेणं" ( गा० ३३४६ ) इत्यारभ्य "अम्हे ठिएल्लग च्चिय, अहापवत्तं वहह तुब्भे" ( गा० ३३६६ ) इतिपर्यन्तं गाथाकदम्बकं तथैवाध्येतव्यम् । नवरं मद्याभिलापः कर्त्तव्यः । ततश्च—

---

१ "एस सुत्तत्थो णिज्जुत्तीए वित्थारेति—पिट्ठेण० गाथा ।" इति चूर्णौ विशेषचूर्णौ च ॥
२ °तं तालफल-द्राक्षा° भा० ॥　　३ जुषितं-सेवितं शीलं येषां ते तज्जु° भा० ॥

आमं ति अब्भुवगए, भिक्ख-वियाराइनिग्गयमिएसु ।
भणइ गुरू सागारिय, कहिं मज्जं जाणणट्ठाए ॥ ३४११ ॥

यदि शय्यातरेण 'आमम्' इत्यभ्युपगतं 'यूयं निश्चिन्तास्तिष्ठथ, वयं यथाप्रवृत्तं व्यापारं चिन्तयिष्यामः' इति, ततः 'गुरुः' आचार्यो भिक्षाचर्या-विचारभूम्यादिनिर्गतेषु मृगेषु—अगीतार्थसाधुषु सागारिकं भणति 'कुत्र मद्यमस्ति ?' इत्येवं परिज्ञानार्थम् ॥ ३४११ ॥

किं भणति ? इत्याह—

गोडीणं पिट्ठीणं, वंसीणं चेव फलसुराणं च ।
दिट्ठा मए सन्निचया, अन्ने देसे कुडुंबीणं ॥ ३४१२ ॥

'गौडीनां' गुडनिष्पन्नानां 'पैष्टीनां' व्रीह्यादिधान्यक्षोदनिष्पन्नानां 'वांशीनां' वंशकरीलक-निष्पन्नानां 'फलसुराणां च' तालफल द्राक्षा-खर्जूरादिनिष्पन्नानाम् एवंविधानां सुराणां सन्निचया अन्यस्मिन् देशे मया कुटुम्बिनां गृहेषु दृष्टाः ॥ ३४१२ ॥

"एवं च भणियमित्तम्मि कारणे सो भणाइ आयरियं ।
अत्थि महं सन्निचया, पिच्छह नाणाविहे मज्जे ॥" ( गा० ३३६९ )

इत्यादिकाः "दारं न होइ इत्तो०" ( गा० ३३७१ ) इतिपर्यन्ता गाथाः प्राग्वदत्र सव्याख्याना द्रष्टव्याः । अथात्रैव या विशेषतो यतना कर्त्तव्या तामभिधित्सुराह—

गहियम्मि वि जा जयणा, गेलन्ने अथव तेण गंधेणं ।
सागारियादिगहणं, णेयव्वं लिंगभेयाई ॥ ३४१३ ॥

शैक्षकेण विकटे 'गृहीते' पीते सति या यतना कर्त्तव्या सा वक्तव्या । ग्लानत्वे वा वैद्योपदेशेन विकटं ग्रहीतव्यम्, अथवा 'तेन' विकटसम्बन्धिना गन्धेन कस्यापि गृहवासे विकटभावितस्याभ्युपपातो भवेत्, ततः सागारिकः—शय्यातरः स आदिशब्दात् श्रावको वा यो मातापितृसमानस्ततो विकटस्य ग्रहणं कर्त्तव्यम् । यदि स्वलिङ्गेन न प्राप्यते उड्डाहो वा भवति ततो लिङ्गभेदादिकमपि 'नेतव्यं' कर्त्तव्यमिति यावत् । एष निर्युक्तिगाथासमासार्थः ॥ ३४१३ ॥

अथैनामेव विवरीषुराह—

पीयं जया होजऽविगोविएणं, तत्थाऽऽणइत्ताण रसं छुभंति ।
भिन्ने उ गोणादिपए करेंति, तेसिं पवेसस्स उ संभवम्मि ॥ ३४१४ ॥

यदा किल 'अविकोविदेन' शैक्षकेण शेषसाधुषु प्रसुप्तेषु तद् विकटं पीतं भवेत् तदा गीतार्थाः 'तत्र' विकटभाजने 'रसम्' इक्षुरसादिकमानीय प्रक्षिपन्ति । अथ कथमपि तद् भाजनं गृह्यमाणं मुच्यमानं वा भिन्नं ततो भिन्ने सति तस्मिन् गवादीनां पदानि प्रतिश्रयप्राङ्गणे प्रविशन्ति निर्गच्छन्ति च 'कुर्वन्ति' आलिखन्तीत्यर्थः, येन सागारिको जानीते, यथा—गवादिना प्रविश्य भग्नमिदं भाजनमिति । परं यदि 'तेषां' गवादीनां तत्र प्रवेशः सम्भवति; अन्यथा हि सागारिकः प्रद्वेषं यायात्—एकं तावदमी इत्थं स्तेनकर्मकारिणः अपरं च तदपह्नवनायेत्थं

१ °त्सुः सङ्ग्रहगाथामाह भा० ॥ २ "गहियम्मि य० गाहा पुरातनगा" इति विशेषचूर्णौ ॥
३ °ष सङ्ग्रहगा° भा० ॥

प्रपञ्चमुपरचयन्ति, धिगमीषां पाषण्डिनां धर्ममिति ॥ ३४१४ ॥

बंधित्तु पीए जयणा ठवेंति, मुद्दा जहा चिट्ठइ अक्खुया से ।
ऊणम्मि दिट्ठम्मि भणंति पुट्ठा, नूणं परिस्संदति भायणेयं ॥ ३४१५ ॥

विकटे पीते तद् भाजनं द्वारदेशे वस्त्रादिना बद्धा 'जतुना' लाक्षया स्थगयन्ति, यथा "से" तस्य भाजनस्य मुद्रा अक्षता तिष्ठति । अथ सागारिकः तद् भाजनमूनं दृष्ट्वा पृच्छति—किमर्थमिदं न्यूनमवलोक्यते ? । एवं पृष्टाः सन्तो भणन्ति—नूनं भाजनमिदं परिस्यन्दति ॥३४१५॥

सव्वम्मि पीए अहवा बहुम्मि, संजोगपाढी व ठवंति अन्नं ।
अन्नं व मग्गित्तु छुहंति तत्था, कीयंकडं वा गिहिलिंगमाई ॥ ३४१६ ॥

सर्वस्मिन् अथवा बहुके विकटे पीते सति ये 'संयोगपाठिनः' विकटनिष्पत्तियोग्यद्रव्यसंयोगवेदिनस्ते तथाविधानि द्रव्याणि संयोज्य अन्यद् विकटं स्थापयन्ति । अथ न सन्ति संयोगपाठिनस्ततोऽन्यद् विकटं मार्गयित्वा तत्र प्रक्षिपन्ति । तच्च प्रथमतः शुद्धम्, तदभावे पञ्चकपरिहाण्या चतुर्लघुकं प्राप्तेन क्रीतकृतमपि ग्रहीतव्यम् । यदि स्वलिङ्गेन गृह्णतामुड्डाहो भवति, न वा तेन प्राप्यते ततो गृहिलिङ्गम् आदिशब्दादन्यतीर्थिकलिङ्गं वा कर्त्तव्यम् ॥ ३४१६ ॥

◁ अथ "गेलन्ने अहव तेण गंधेणं" ( गा० ३४१३ ) इत्यादिपदानि व्याख्याति—▷[1]

तब्भाविथट्ठा व गिलाणए वा, पुराण सागारिय सावए वा ।
वीसंभणीआण कुलाणऽभावा, गिण्हंति रूवस्स विवज्जएणं ॥ ३४१७ ॥

तेन—विकटेन पूर्वं भावितस्तद्भावितः स तत्र विकटेनाध्युपपन्नो भवति; ग्लानो वा कश्चित् तेनैवोपयुक्तेन प्रगुणीभवति नान्यथा; ततस्तदर्थं 'पुराणस्य' पश्चात्कृतस्य सकाशात्, तदभावे माता-पितृसमानो यः सागारिकस्तस्य हस्तात्, तदभावे प्रतिपन्नाणुव्रतस्य माता-पितृसमानस्य श्रावकस्य पार्श्वाद् ग्रहीतव्यम् । अमीषामभावे यथाभद्रकाण्यपि यानि विश्रम्भणीयानि कुलानि, नोड्डाहकारीणीत्यर्थः, तेषु ग्रहीतव्यम् । तेषामभावे यदि स्वलिङ्गेन गृह्यते ततः प्रवचनोपघातो भवेत् ततो रूपस्य विपर्ययेण गृह्णन्ति, लिङ्गविवेकं कृत्वा विकटमुत्पादयन्तीति भावः ॥३४१७॥

अच्चाउरं वा वि समिक्खिऊणं, खिप्पं तओ घेत्तु दलित्तु तस्स ।
अन्नं रसं वा वि तहिं छुभंती, संगं च से तं हवयंति तत्तो ॥ ३४१८ ॥

अत्यातुरं वा तं ग्लानं समीक्ष्य 'क्षिप्रं' शीघ्रं 'ततः' प्रतिश्रयवर्तिनो विकटभाजनाद् गृहीत्वा 'तस्य' ग्लानस्य दत्त्वा गीतार्थास्तत्रान्यं वा रसं प्रक्षिपन्ति[2] । ततश्च "से" तस्य ग्लानस्य 'तं' विकटविषयं सङ्गं हापयन्ति, कार्ये निष्ठिते सति विकटप्रसङ्गं निवारयन्तीति भावः ॥ ३४१८ ॥[3]

गता स्वपक्षयतना । अथ परपक्षयतनामाह—

"परपक्खम्मि वि दारं, पिहंति जयणाएँ दो वि वारिंति ।
तह वि य अठायमाणे, उवेह पुट्ठा व साहंति ॥" ( गा० ३३७६ )

इत्यादिका मद्याभिलापविशेषिता गाथाः सर्वा अपि तथैवात्र वक्तव्याः ॥

---

१ ◁ ▷ एतदन्तर्गतसन्दर्भः भा० नास्ति ॥   २ °कटमन्वेषयन्ति° भा० कां० ॥
३ °न्ति । यश्च "से" तस्य ग्लानस्य विकटविषयः सङ्गः तं हाप° भा० ॥

## उदकसूत्रम् ५

सूत्रम्—

**उवस्सयस्स अंतो वगडाए सीओदगवियडकुंभे वा उसिणोदगवियडकुंभे वा उवनिक्खित्ते सिया, नो कप्पइ निग्गंथाण वा निग्गंथीण वा अहालंदमवि वत्थए। हुरत्था य उवस्सयं पडिलेहमाणे नो लभेज्जा, एवं से कप्पइ एगरायं वा दुरायं वा वत्थए। जे तत्थ परं एगरायाओ वा दुरायाओ वा वसइ से संतरा छेए वा परिहारे वा ५ ॥**

अथास्य सम्बन्धमाह—

**छोढूण दवं पिज्जइ, गालिंति दवं व छोढुणं तं तु।**
**पातुं मुहं व धोवइ, तेणऽहिकारो सजीवं वा ॥ ३४१९ ॥**

यतः 'द्रवं' पानीयं प्रक्षिप्य विकटं पीयते, अतो **विकटसूत्रानन्तरमुदकसूत्रम्** । यद्वा द्रवं प्रक्षिप्य 'तद्' विकटं गालयन्ति, अथवा विकटं पीत्वा तज्जनितदौर्गन्ध्यव्यपगमार्थमुदकेन मुखं धावति तेन कारणेन विकटानन्तरमुदकाधिकारः प्रारभ्यते । यद्वा तद् विकटं निर्जीवम् इदं तु सजीवं निर्जीवं वा भवेदिति ॥ ३४१९ ॥

अनेकैः सम्बन्धैरायातस्यास्य व्याख्या प्राग्वत् । नवरं विकृतं–शीतोष्णादिशस्त्रेण[1] विकारं प्रापितम्, प्राशुकीकृतमित्यर्थः, शीतोदकं च तद् विकृतं च शीतोदकविकृतं तस्य कुम्भः–घटः । एवमुष्णोदकविकृतकुम्भोऽपि ॥ अथ भाष्यम्—

**सीतोदे उसिणोदे, फासुगमप्फासुगे य चउभंगो।**
**ठायंतगाण लहुगा, कास अगीतत्थ सुत्तं तु ॥ ३४२० ॥**

शीतोदकोष्णोदक-प्राशुका-ऽप्राशुकपदैश्चतुर्भङ्गी भवति । गाथायां प्राकृतत्वात् पुंस्त्वनिर्देशः । तद्यथा—शीतोदकं प्राशुकं १ शीतोदकमप्राशुकम् २ उष्णोदकं प्राशुकम् ३ उष्णोदकमप्राशुकम् ४ । तत्र प्रथमभङ्गे उष्णोदकमेव शीतीभूतं तन्दुलधावनादिकं वा, द्वितीयभङ्गे शीतोदकमेव स्वभावस्थम्, तृतीयभङ्गे उष्णोदकमुद्वृत्तत्रिदण्डम्, चतुर्थभङ्गे तापोदकादिकं मन्तव्यम् । एवंविधोदकप्रतिबद्धे प्रतिश्रये तिष्ठतां चतुर्लघुकाः । एवमविशेषेणोक्तावप्ययं विशेषः—प्रथमतृतीयभङ्गयोर्मासलघु । द्वितीयचतुर्थभङ्गयोश्चतुर्लघवः ।

आह च **निशीथचूर्णिकृत्**—

पढमतइयभंगे ठायंतस्स मासलहुं । बीयचउत्थेसु चउलहुं ।

---

१ **°कृतं-वह्नयादिशस्त्रेण** भा० ॥

आह कस्य पुनरेतत् प्रायश्चित्तम्? गुरुराह—अगीतार्थस्य । सूत्रं पुनरनुज्ञाविषयं गीतार्थमधिकृत्य प्रवृत्तमित्युपस्कारः ॥ ३४२० ॥

इत ऊर्ध्वम् "नत्थि अगीयत्थो वा०" ( गा० ३३१३ ) इत्यारभ्य "कासइ इच्छा समुप्पन्ना" ( गा० ३३४१ ) इतिपर्यन्तं भाष्यमुदकाभिलापविशेषितं वक्तव्यम् ॥

कीदृशी पुनरिच्छा तस्य समुत्पन्ना? उच्यते—

**अणुभूया उदगरसा, नवरं मोत्तुं इमेसि उदगाणं ।**
**काहामि कोउहल्लं, पासुत्तेसुं समारद्धो ॥ ३४२१ ॥**

'अनुभूता मया उदकानां रसाः, नवरं मुक्त्वा अमीषामुदकानां रसान्, अतः करिष्याम्यहमेतद्विषयं कुतूहलं सफलम्' इति विचिन्त्य प्रसुप्तेषु शेषसाधुषु समारब्ध उदकपानं कर्तुम् ॥ ३४२१ ॥ कानि पुनस्तान्युदकानि? इत्याह—

**धारोदए महासलिलजले संभारिते व्व दव्वेहिं ।**
**तण्हातियस्स व सती, दिया व राओ व उप्पज्जे ॥ ३४२२ ॥**

'धारोदकं नाम' गिरिनिर्झरजलम्, यथा उज्जयन्तादौ[1], आन्तरिक्षं ◁ वा धारोदकम् । तथा ▷[2] महासलिलाः—गङ्गा-सिन्धुप्रभृतयो महानद्यः तासां जलं महासलिलाजलम् । 'द्रव्यैः' कर्पूर-पाटलादिभिः 'सम्भारितं' वासितं द्रव्यसम्भारितम् । एषु पानीयेषु तृष्णायितस्याभिलाषो भवति । पूर्वानुभूतेषु तु दिवा वा रात्रौ वा 'स्मृतिः' संस्मरणमुत्पद्यते ॥ ३४२२ ॥

ततश्चोदकमापिबन्नात्मनो हृदयस्य प्रत्यक्षमिदमाह—

**इहरा कहासु सुणिमो, इमं खु तं विमलसीतलं तोयं ।**
**विगयस्स वि णत्थि रसो, इति सेवे धारतोयादी ॥ ३४२३ ॥**

इतरथा कथान्तरेषु शृणुमः, परमिदमद्य विमलशीतलं 'तत्' कथान्तरश्रुतं तोयमास्वादितम् । यच्चोष्णोदकादिकं विकृतं—व्यपगतजीवमुदकमापिबामः तस्यापि शस्त्रोपहतत्वेनान्यथाभूतस्य रसो नास्तीति मत्वा धारातोयादिकं जलं सेवते ॥ ३४२३ ॥

**विगयम्मि कोउयम्मी, छट्ठवयविराहण त्ति पडिगमणं ।**
**वेहाणस ओहाणे, गिलाणसेहेण वा दिट्ठो ॥ ३४२४ ॥**

विगते उदकपानकौतुके स संयतः 'षष्ठव्रतविराधना मया कृता' इति मत्वा प्रतिगमनं वा वैहायसं वा मरणं संविग्नविहाराद्वा अवधावनं कुर्वीत । ग्लानेन वा शैक्षेण वा स दृष्टो भवेत् ॥ ३४२४ ॥ ततश्च—

**तण्हाइओ गिलाणो, तं दट्ठु पिएज्ज जा विराहणया ।**
**एमेव सेहमादी, पियंति अप्पच्चओ वा सिं ॥ ३४२५ ॥**

ग्लानस्तृष्णायितः 'तं' संयतमुदकमापिबन्तं दृष्ट्वा पानीयं पिबेत् । तेन चापथ्येन या तस्यानागाढपरितापनादिका विराधना तन्निष्पन्नं प्रायश्चित्तम् । एवमेव च शैक्षादयोऽप्यपरिणतास्त-

१ °यन्त-सप्तधारादिषु । महा° भा० ॥ २ ◁ ▷ एतदन्तर्गतः पाठः कां० एव वर्तते । "धारोदयं जधा उज्जिंतातो पडति, अधवा अंतरिक्खतं धारोदयं ।" इति चूर्णौ ॥

दुदकमाविशन्ति, अमत्ययो वा अमीषां भवेत्—यथैतद् मृषा तथाऽन्यदपि सर्वममीषामुन्मत्त-प्रलपितमिति ॥ ३४२५ ॥

"उड्डाहं व करिज्जा, विप्परिणामो व हुज्ज सेहस्स ।
गिण्हंतेण व तेणं, खंडिय विद्धे व भिन्ने वा ॥" ( गा० ३३४५ )

इत्यारभ्य

"आसन्नो य छणूसवो, कज्जं पि य तारिसेण उदगेण ।
तेणाण य आगमणं, अच्छइ तुण्हिक्कया तेणा ॥" ( गा० ३३५५ )

इतिपर्यन्ता गाथा गतार्थाः ॥ अथ यैः कारणैः स्तेना उदकमपहरन्ति तानि दर्शयति—

ऊसव-छणेसु संभारियं दगं तिसिय-रोगियट्ठाए ।
दोहल कुतूहलेण व, हरंति पडिवेसयाईया ॥ ३४२६ ॥

उत्सवाः क्षणाश्च पूर्वोक्ताः, तेषु प्रत्यासन्नेषु स्तेना उदकमपहरेयुः । यद्वा तृषिताः सन्तः स्वयं पानार्थं 'सम्भारितं' कर्पूर-पाटलादिवासितं चतुर्मूलं पञ्चमूलकृतं वा तद् उदकमपहरन्ति । यद्वा रोगी कश्चित् तेषामस्ति तस्य तत् पानीयं पथ्यं तदर्थम्, अथवा गुर्विण्यास्तादृशमुदक-मापातुं दोहदः समुत्पन्नः, यदि वा कुतूहलं तेषामुदपादि 'कीदृशोऽस्य पानीयस्य रसः ?' । एवमेभिः कारणैः प्रतिवेश्मिकादयः स्तेना अपहरेयुः ॥ ३४२६ ॥

गहियं च तेहिँ उदगं, घित्तूण गया जहिं सि गंतव्वं ।
सागारिओ व भणई, सउणी वि य रक्खई निड्डं ॥ ३४२७ ॥

उक्तार्था ( गा० ३३५६ ) ॥ ३४२७ ॥

दगभाणूणे दट्ठुं, सजलं व हियं दगं व परिसडियं ।
केण इमं तेणेहिं, असिट्ठे भद्दपंत इमे उ ॥ ३४२८ ॥

सागारिको दकभाजनानि न्यूनानि सजलं वा भाजनमपहृतं दकं वा परिशटितं दृष्ट्वा पृच्छति—केनेदं जलमपहृतम् ? । साधवो ब्रुवते—स्तेनैः । ततोऽसौ भूयः प्रश्नयति—के पुनः स्तेनाः ? । ततो यदि नाम्ना वर्णेन वा तान् कथयन्ति ततस्तेषां बन्धनादयो दोषाः । अथ न कथयन्ति ततः 'अशिष्टे' अकथिते भद्रक-प्रान्तकृता इमे दोषाः ॥ ३४२८ ॥

"लहुगा अणुग्गहम्मी, गुरुगा अप्पत्तियम्मि कायव्वा ।
कडुग-फरुसं भणंते, छम्मासा करभरे छेओ ॥" ( गा० ३३५८ )

इत ऊर्ध्वम्—

"आमं ति अब्भुवगए, भिक्ख-वियाराइ निग्गयमिएसुं ।
भणइ गुरू सागरियं, कत्थ दगं जाणणट्ठाए ॥" ( गा० ३३६७ )

इतिपर्यन्तं गाथाकदम्बकं प्राग्वत् ॥ कथं पुनः सूरयः सागारिकं प्रश्नयन्ति ? इत्याह—

चउमूल पंचमूलं, तालोदाणं च तावसोयाणं ।
दिट्ठ मए सन्निचया, अन्ने देसे कुडुंबीणं ॥ ३४२९ ॥[1]

---

१ एतदनन्तरं ग्रन्थाग्रम्—१०० ताटी० मो० ले० ॥

'चतुर्मूलं नाम' चतुर्भिः सुरभिमूलैर्भावितम् । एवं यत् पञ्चभिः सुरभिमूलैर्भावितं तत् पञ्चमूलम् । तालोदकानि यथा तोसलिविषये । तापतोयानि राजगृहादौ । एवंविधानामुदकानां सन्निचया मथाऽन्यस्मिन् देशे कुटुम्बिनां गेहेषु दृष्टाः ॥ ३४२९ ॥

> "एवं च भणियमेत्तम्मि कारणे सो भणाइ आयरिए ।
> अत्थि महं सन्निचया, पेच्छह नाणाविहे उदए ॥" ( गा० ३३६९ )

इत आरभ्य

> "जाणंता वि य तेणं, न वन्न-रूवेण साहंति ॥" ( गा० ३३८८ )

इतिपर्यन्तं भाष्यं तथैवात्र वक्तव्यम् । नवरमुदकाभिलापः कर्तव्यः ॥

## ज्योतिःसूत्रम् ६

सूत्रम्—

**उवस्सयस्स अंतो वगडाए सव्वराईए जोई झियाएज्जा, नो कप्पइ निग्गंथाण वा निग्गंथीण वा अहालंदमवि वत्थए । हुरत्था य उवस्सयं पडिलेहमाणे नो लभेज्जा, एवं से कप्पइ एगरायं वा दुरायं वा वत्थए । जे तत्थ एगरायाओ वा दुरायाओ वा परं वसइ से संतरा छेए वा परिहारे वा ६ ॥**

एवं प्रदीपसूत्रमप्युच्चारणीयम् । अथास्य सूत्रद्वयस्य कः सम्बन्धः ? इत्याह—

> उदगाणंतरमग्गी, सो उ पईवो व होज्ज जोई वा ।
> पडिवक्खेणं व गयं, समागमो एस सुत्ताणं ॥ ३४३० ॥

प्रवचने ऽप्कायप्ररूपणानन्तरमग्निकायः प्ररूप्यते, अतोऽत्राप्युदकसूत्रानन्तरमग्निसूत्रमारभ्यते । 'स च' अग्निः प्रदीपो वा स्याद् ज्योतिर्वा । "पडिवक्खेणं व गयं" ति भावप्रधानत्वान्निर्देशस्य प्रतिपक्षतया वा इदं सूत्रमागतम् । किमुक्तं भवति ?—अप्कायस्याग्निकायः शस्त्रम्, अग्निकायस्याप्यप्कायः, अत एतौ परस्परं प्रतिपक्षौ, प्रतिपक्षत्वेन चाप्कायानन्तरं साम्प्रतमग्निकायः प्ररूपणीयः । एषः 'समागमः' सम्बन्धो द्वयोरपि सूत्रयोर्मन्तव्य इति ॥ ३४३० ॥

अनेन सम्बन्धेनायातस्यास्य प्रथमसूत्रस्य तावद् व्याख्या—सा च प्राग्वत् । नवरं सार्वरात्रिकं 'ज्योतिः' अग्निर्यत्रोपाश्रये 'ध्यायेत्' धातूनामनेकार्थत्वात् प्रज्वलेत् तत्र साधु-साध्वीनां वस्तुं न कल्पते ॥ अथ भाष्यविस्तरः—

> देसीभासाएँ कयं, जा बहिया सा भवे हुरत्था उ ।
> बंधऽणुलोमेण कयं, छेए परिहार पुव्वं तु ॥ ३४३१ ॥

---

१ °दकं यथा भा० ॥ २ °धानां तोयानां सन्नि° भा० ॥

**अहवण वारिज्जंतो, निक्कारणओ व तिण्ह व परेणं ।**
**छेयं चिय आवज्जे, छेयमओ पुव्वमाहंसु ॥ ३४३२ ॥**

गाथाद्वयमपि गतार्थम् ( गा० ३४०४-५ ) ॥ ३४३१ ॥ ३४३२ ॥

ज्योतिःस्वरूपं निरूपयति—

**दुविहो य होइ जोई, असव्वराई य सव्वराई य ।**
**ठायंतगाण लहुगा, कास अगीयत्थ सुत्तं तु ॥ ३४३३ ॥**

'ज्योतिः' अग्निकायोद्दीप्तं तद् द्विविधं भवति—'असार्वरात्रिकं' कियतीमपि रात्रिं यत् प्रज्वलति, तद्विपरीतं सार्वरात्रिकम् । उभयोरपि तिष्ठतां चतुर्लघुकाः । आह कस्य पुनरेतत् प्रायश्चित्तम् ? उच्यते—अगीतार्थस्य । सूत्रं तु गीतार्थमधिकृत्य प्रवृत्तम् ॥ ३४३३ ॥

इत ऊर्द्ध्वम्—"नत्थि अगीयत्थो वा०" ( गा० ३३१३ ) इत्यारभ्य "रमणिज्जभिक्ख गामो, ठायंतऽह जोइसालाए" ( गा० ३३३४ ) इतिपर्यन्तं भाष्यं तथैवात्र वक्तव्यम् ॥

अथ तत्र स्थितानां दोषानुपदर्शयति—

**उवगरणे पडिलेहा, पमज्जणाऽऽवास पोरिसि मणे य ।**
**निक्खमणे य पवेसे, आवडणे चेव पडणे य ॥ ३४३४ ॥**

सज्योतिषि वसतौ स्थितानामुपकरणप्रत्युपेक्षणे, वसतेः प्रमार्जने, आवश्यकस्य सूत्रार्थपौरुष्योर्वा करणे, "मणे य" त्ति मनसा राग-द्वेषगमने, निष्क्रमणे च प्रवेशे च क्रमेण नैषेधिक्यावश्यक्योः करणे, '[1]आपतने च' गच्छतामुल्मुकादिषु प्रस्खलने, 'पतने च' प्रतीते, एतेषु या तेजःकायस्य आत्मनो वा विराधना तन्निष्पन्नं प्रायश्चित्तम् । अथैतद्दोषभयात् प्रतिलेखना-प्रमार्जनादि न करोति ततोऽपि प्रायश्चित्तम् ॥ ३४३४ ॥ किं पुनस्तद् ? इत्यत आह—

**पणगं लहुओ लहुया, [2]चउरो लहुगा य चउसु ठाणेसु ।**
**लहुगा गुरुगा य मणे, सेसेसु वि होंति चउलहुगा ॥ ३४३५ ॥**

यदि ज्योतिःशालायां स्थिताः 'अग्निसङ्घट्टो मा भूत्' इति कृत्वा वस्त्राद्युपकरणं न प्रत्युपेक्षन्ते ततो जघन्ये पञ्चकं मध्यमे मासलघु उत्कृष्टे चत्वारो लघवः । वसतिं न प्रमार्जयन्ति यद्वा निर्गच्छन्तः प्रविशन्तो वाऽग्निविराधनाभयान्न प्रमार्जयन्ति उभयत्रापि मासलघु । आवश्यकं न कुर्वन्ति चतुर्लघु । सूत्रपौरुषीं न कुर्वन्ति ◁ [3]मासलघु । अर्थपौरुषीं न कुर्वन्ति ▷ मासगुरु । अथैतद्दोषभयादुपकरणप्रत्युपेक्षणां वसतिप्रमार्जनामावश्यकं सूत्रार्थपौरुष्यौ च कुर्वन्ति तत एतेषु चतुर्ष्वपि स्थानेषु प्रत्येकं चत्वारो मासा लघवः । यस्तु 'शोभनं समजनि यदेवं सप्रकाशे स्थाने स्थिताः' इत्येवं रागं करोति, यस्य वा सप्रकाशे निद्रा नागच्छति स यदि तत्र द्वेषं करोति, तत एवं मनसा राग-द्वेषकरणे यथाक्रमं चतुर्गुरवश्चतुर्लघवश्च । 'शेषेष्वपि' आव-

१ आपतनं नाम–गच्छतामुल्मुकादिषु प्रस्खलनम्, पतनं–प्रतीतम्, तयोर्या तेजःकायविराधना या चानागाढपरितापादिका आत्मविराधना तन्निष्पन्नं प्रायश्चित्तम् ॥ ३४३४ ॥ अथैनामेव गाथां भाष्यकारो विवृणोति—पणगं भा० ॥

२ चउरो मासा य चउसु तामा० विना ॥ ३ ◁ ▷ एतदन्तर्गतः पाठः कां० मो० ले० नास्ति ॥

श्यकी-नैषेधिकीकरणादिषु स्थानेषु प्रत्येकमग्निविराधनानिष्पन्नं चतुर्लघु ॥ ३४३५ ॥

अमुमेवार्थं स्फुटतरमाह—

**पेह पमज्जण वासग अग्गी, ताणि अकुव्वओ जा परिहाणी ।**
**पोरिसिभंगे अभंगि सजोई, होति मणे उ रती वऽरई वा ॥ ३४३६ ॥**

उपकरणप्रत्युपेक्षां वसतिप्रमार्जनां "वासय" त्ति आकारलोपादावासकं च यदि करोति तदाऽग्निविराधनानिष्पन्नं चतुर्लघु । अथैतद्दोषभयादेतानि न करोति ततो या संयमपरिहाणिस्तन्निष्पन्नम्[1] । सूत्रपौरुषीभङ्गे मासलघु, अर्थपौरुषीभङ्गे मासगुरु । "अभंगि" त्ति तयोः करणेऽग्निविराधना ! अथ 'सज्योतिरुपाश्रयः' इति मनसि रतिर्भवति तदा चतुर्गुरु, अरतिर्भवति चतुर्लघु ॥ ३४३६ ॥

**जइ उस्सग्गे न कुणइ, तइ मासा सव्व अकरणे लहुगा ।**
**वंदण-थुईअकरणे, मासो संडासकाईसुं ॥ ३४३७ ॥**

आवश्यके 'यति' यावतः कायोत्सर्गान् न करोति 'तति' तावन्तो लघुमासाः । अथ सर्वमप्यावश्यकं न करोति ततश्चतुर्लघु[2] । अथ वन्दनकं न ददाति स्तुतिमङ्गलं वा न करोति ततो यावन्ति वन्दनकानि यावतीः स्तुतीर्वा न प्रयच्छति तावन्ति मासलघूनि । अथ ददाति त[3]तश्चतुर्लघु । उपविशन् सन्दशकं न प्रमार्जयति मासलघु, अथ प्रमार्जयति ततश्चतुर्लघु[4] ॥ ३४३७ ॥ अथ निष्क्रमणादिपदेषु प्रायश्चित्तमाह—

**आवस्सिगा-निसीहिग-पमज्ज-आसज्जअकरणे इमं तु ।**
**पणगं पणगं लहु लहु, आवडणे लहुग जं चऽन्नं ॥ ३४३८ ॥**

निष्क्रामन्तो यद्यावश्यिकीं न कुर्वन्ति पञ्चकम् । प्रविशन्तो नैषेधिकीं न कुर्वन्ति पञ्चकम् । निर्गम-प्रवेशौ कुर्वाणा न प्रमार्जयन्ति मासलघु । आसज्जशब्दस्याकरणे मासलघु । आपतनं नाम—यद् भूमिमसम्प्राप्तस्य प्राप्तस्य वा जानु-कूर्पराभ्यां प्रस्खलनम्, पतनं—सर्वगात्रेण भूमौ प्रपातः, द्वयोरपि चत्वारो लघुमासाः । यच्चापतितः पतितो वा आत्मविराधनादिकमापद्यते तन्निष्पन्नम् । अथवा यच्चान्यदग्नौ प्रतापनादि करोति तदत्र द्रष्टव्यम् ॥ ३४३८ ॥

तदेव दर्शयति—

**सेहस्स विसीयणया, ओसक्के[5]ऽतिसक्क अन्नहिं नयणं ।**
**विज्झविऊण तुअट्टण, अहवा वि भवे पलीवणया ॥ ३४३९ ॥**

शैक्षस्य शीतार्त्तस्य विशीतना स्यात्, अग्नौ प्रताप्य स विगतशीतमात्मानं कुर्यादिति भावः । अत्र च यावतो वारान् हस्तौ पादौ वा प्रतापयन् परावर्त्तयति तावन्ति चतुर्लघूनि । तथा

---

१ °स्तमापद्यते । सूत्र° भा० ॥
२ °घु । अथ कुर्वन्ति तत एकैकस्मिन् कायोत्सर्गे प्रत्येकं चतुर्लघु । अथ वन्द° कां० ॥
३ तथापि मासलघु । उप° भा० ॥
४ °यतः छेदनकैरग्निर्विराध्यते ततश्चतुर्लघु ॥ ३४३७ ॥ आवस्सि° भा० ॥
५ °कऽधिस° भा० कां० । एतदनुसारेण भा० कां० टीका । दृश्यतां पत्रं ९६२ टिप्पणी १ ॥

'अवष्वष्कणं' शीघ्रविध्यापनार्थं ज्वलतामुल्मुकानामपकर्षणम् । 'अतिष्वष्कणं तु' तेषामेव प्रज्वालनार्थमुदीरणम् । 'अन्यत्र नयनं नाम' शयनस्थानभावादग्नेः स्थानान्तरसङ्क्रमणम् । तथा प्रदीपनकभयादग्निं क्षारेण धूल्या वा विध्याप्य त्वग्वर्त्तनम् । एतेषु प्रत्येकं चतुर्लघुकम् ॥३४३९॥

अथवा प्रतापयतः प्रमादतः प्रदीपनकं भवेत् तत्रेदं प्रायश्चित्तम्—

**गाउअ दुगुणादुगुणं, बत्तीसं जोयणाइँ चरिमपदं ।**
**चत्तारि छ च लहु गुरु, छेओ मूलं तह दुगं च ॥ ३४४० ॥**

गव्यूतादारभ्य द्विगुणाद्विगुणवृद्ध्या द्वात्रिंशद्योजनलक्षणं चरमपदं यावदिदं प्रायश्चित्तम्—प्रत्येकं गव्यूतं दह्यते ततश्चत्वारो लघुमासाः, अर्द्धयोजनं दह्यते चत्वारो गुरुमासाः, योजनं दह्यते षण्मासा लघवः, योजनद्वये षण्मासा गुरवः, चतुर्षु योजनेषु च्छेदः, अष्टसु मूलम्, षोडशसु अनवस्थाप्यम्, द्वात्रिंशद्योजनेषु दग्धेषु पाराञ्चिकम् ॥ ३४४० ॥ तथा—

**गोणे य साणमाई, वारणे लहुगा य जं च अहिगरणं ।**
**लहुगा अवारणम्मि, खंभ-तणाई पलीवेज्जा ॥ ३४४१ ॥**

तत्र प्रविशतो गो-श्वानादीन् यदि वारयति तदा चतुर्लघुकाः, यच्च ते वारिताः सन्तो हरितकायादिविराधनारूपमधिकरणं कुर्वन्ति तन्निष्पन्नम् । अथ न वारयति ततोऽपि चतुर्लघवः । प्रविष्टाश्च प्रज्वलदिन्धनचालनेन स्तम्भ-तृणादीनि प्रदीपयेयुः तत्रापि गव्यूतादारभ्य द्विगुणद्विगुणवृद्ध्या द्वात्रिंशद्योजनेषु पाराञ्चिकम् । यत एते दोषा अतो न ज्योतिःशालायां स्थातव्यम् । भवेत् कारणं येन तत्रापि तिष्ठेयुः ॥ ३४४१ ॥ किं पुनस्तत् ? इति चेद् उच्यते—

**अद्धाणनिग्गयाई, तिक्खुत्तो मग्गिऊण असतीए ।**
**गीयत्था जयणाए, वसंति तो अगणिसालाए ॥ ३४४२ ॥**

अध्वा—महदरण्यं ततो निर्गता आदिशब्दादशिवा-ऽवमौदर्यादिषु वर्त्तमाना विकालवेलायां तं ग्रामं प्राप्ताः 'त्रिकृत्वः' त्रीन् वारान् शुद्धां वसतिं मार्गयन्ति । यदि न प्राप्यते ततो गीतार्था यतनया अग्निशालायां वसन्ति ॥ ३४४२ ॥ एतदेव स्पष्टयति—

**अद्धाणनिग्गयाई, तिण्हं असईएँ फरुससालाए ।**
**गीयत्था जयणाए, वसंति तो पयणसालाए ॥ ३४४३ ॥**

अध्वनिर्गतादयः 'तिसृणां' पणितशाला-भाण्डशाला-कर्मशालानामन्यतरस्याः[3] 'परुषशालायाः' कुम्भकारशालाया अभावे ततो गीतार्था यतनया 'पचनशालायां' भाजनपाकशालायां वसन्ति । इह शालात्रयग्रहणादन्या अपि कुम्भकारशालाः सूचिताः ॥ ३४४३ ॥

तासां स्वरूपमुपदर्शयितुमाह—

**पणिए य भंडसाला, कम्मे पयणे य वग्घरणसाला ।**
**इंधणसाला गुरुगा, सेसासु वि होंति चउलहुगा ॥ ३४४४ ॥**

---

१ 'अभिष्व° भा० कां० । "'ओसक्कइ' त्ति उम्मुगं ओसारेति, 'अभिसक्कइ' त्ति उत्तुअति उम्मुगं" इति चूर्णौ । "'ओसक्कइ' उम्मुगं ओसारेइ, 'अहसक्कइ' उम्मुयं उत्तुयइ" इति विशेषचूर्णौ ॥
२ °गुणाद्वि° मो० ले० ॥ ३ °स्याः परुषः-कुम्भकारः तस्य शालाया अभावे भा० ॥

पणितशाला भाण्डशाला कर्मशाला पचनशाला व्याघरणशाला इन्धनशाला चेति । अत्र निष्कारणे इन्धनशालायां तिष्ठतां चतुर्गुरुकाः । 'शेषासु' पणितशालाप्रभृतिषु चतुर्लघुकाः ॥ ३४४४ ॥ अथैतासामेव व्याख्यानमाह—

**कोलालियावणो खलु, पणिसाला भंडसाल जहिँ भंडं ।**
**कुंभारकुडी कम्मे, पयणे वासासु आवाओ ॥ ३४४५ ॥**
**तोसलिए वग्घरणा, अग्गीकुंडं तहिँ जलति निच्चं ।**
**तत्थ सयंवरहेउं, चेडा चेडी य छुब्भंति ॥ ३४४६ ॥**

कौलालिकाः—कुलालक्रय-विक्रयिणस्तेषामापणः पणितशाला मन्तव्या । किमुक्तं भवति ?— यत्र कुम्भकारा भाजनानि विक्रीणते, वणिजो वा कुम्भकारहस्ताद् भाजनानि क्रीत्वा यत्रापणे विक्रीणन्ति सा पणितशाला । भाण्डशाला यत्र घट-करकादिभाण्डजातं सङ्गोपितमास्ते । कर्मशाला कुम्भकारकुटी, यत्र कुम्भकारो घटादिभाजनानि करोतीत्यर्थः । पचनशाला नाम यत्रापाकस्थाने वर्षासु भाजनानि पच्यन्ते । इन्धनशाला तु यत्र तृण-करीष-कचवरास्तिष्ठन्ति ॥ ३४४५ ॥

व्याघरणशाला नाम तोसलिविषये ग्राममध्ये शाला क्रियते, तत्राग्निकुण्डं स्वयंवरहेतोर्नित्यमेव प्रज्वलति, तत्र च बहवश्चेटकाः एका च स्वयंवरा चेटिका 'प्रक्षिप्यन्ते' प्रवेश्यन्ते इत्यर्थः । यस्तेषां मध्ये तस्यै प्रतिभाति तमसौ वृणीते, एषा व्याघरणशाला । एतासु तिष्ठतां चत्वारो लघुकाः ॥ ३४४६ ॥ नवरम्—

**इंधणसाला गुरुगा, आदित्ते तत्थ नासिउं दुक्खं ।**
**दुविह विराहण झुसिरे, सेसा अगणी य सागरिए ॥ ३४४७ ॥**

इन्धनशालायां तिष्ठतां चत्वारो गुरुकाः । कुतः ? इत्याह—तत्र तृण-करीषादौ 'आदीप्ते' प्रदीप्ते सति नंष्टुं 'दुःखं' दुष्करम् । शुषिरं च तत् तृणादि भवति, ततस्तत्र 'द्विविधा विराधना' संयमा-ऽऽत्मविषया । 'शेषासु' पणितशालादिषु भाजनविक्रयिक-क्रयिकादिना जनेन सागारिकम् । पचनशालायां पुनरग्निदोषो भवति ॥३४४७॥ एतासु द्वितीयपदे तिष्ठतां विधिमाह—

**पढमं तु भंडसाला, तहि सागरि नत्थि उभयकालं पि ।**
**कुम्माऽऽपणि निसि नत्थी, सेस कमेणेंधणी जाव ॥ ३४४८ ॥**

शुद्धोपाश्रयालाभे प्रथमं भाण्डशालायां तिष्ठन्ति, यतस्तत्र 'उभयकालेऽपि' दिवा रात्रौ च सागारिकं नास्ति । तदभावे कर्मशालायाम् । तदप्राप्तौ आपणशालायामपि, यतस्तत्र 'निशि' रात्रौ सागारिकं नास्ति । तदभावे 'शेषासु' पचनशालादिषु क्रमेण स्थातव्यं यावदिन्धनशाला । तद्यथा—प्रथमं पचनशालायाम्, ततो व्याघरणशालायाम्, तत इन्धनशालायामपि ॥३४४८॥

तत्र स्थितानां यतनामाह—

**ते तत्थ सन्निविट्ठा, गहिया संथारगा विहीपुव्वं ।**
**जागरमाण वसंती, सपक्खजयणाएँ गीतत्था ॥ ३४४९ ॥**

---

१ °काः-कुम्भकारास्तेषा° भा० ॥ २ °कालम्मि ताभा० ॥ ३ कम्म पणिय निसि ताभा० । एतदनुसारेण भा० टीका । दृश्यतां टिप्पणी ४ ॥ ४ °प्राप्तौ पणितशा° भा० ॥

'ते' साधवः 'तत्र' उपाश्रये सन्निविष्टाः सन्तः स्वाध्यायं कुर्वन्ति । 'विधिपूर्वं' यथारत्नाधिकं संस्तारकास्तैस्तत्र गृहीताः । ततश्च गीतार्थाः स्वपक्षयतनां कुर्वाणा जाग्रतः सन्तः 'वसन्ति' तिष्ठन्तीत्यर्थः ॥ ३४४९ ॥ कथम्? इत्याह—

पासे तणाण सोहण, अहिसक्कोसक्क अन्नहिं नयणं ।
संवरणा लिंपणया, छुक्कारण वारणाऽऽगड्ढी ॥ ३४५० ॥

अग्नेः पार्श्वे यदि तृणानि भवन्ति ततस्तेषां शोधना कर्त्तव्या । श्वापदभयेऽनाक्रान्तिकस्तेनसम्भवे वा अग्नेरभिष्वष्कणं कुर्वन्ति । यदि तत्र आक्रान्तिकस्तेनानां सम्भवस्तदा तमग्निमवष्वष्कयन्ति, स्वप्नुकामा वा तमन्यत्र नयन्ति, बहिः सङ्क्रामयन्तीत्यर्थः । कृते कार्ये क्षारेण मल्लकेन वा तस्याग्नेः 'संवरणम्' आच्छादनं कर्त्तव्यम् । ततो यथाऽऽयुष्कमनुपाल्य स्वयमेव विध्यायति । प्रदीपनकभयात् तत्र स्तम्भस्य च्छगणादिना लेपनं कर्त्तव्यम् । श्वानो वा गौर्वा यदि तत्र प्रविशति[3] स्तेनो वा ढौकते तदा "छुक्कारण" त्ति छिछिक्कारः कर्त्तव्यः । अथ तथापि न तिष्ठन्ति ततो निवारणा तेषां कर्त्तव्या । सहसा च प्रदीपनके लग्ने कटादेराकर्षणं कर्त्तव्यम् । यद्वा तत् प्रदीपनकं धूल्यादिना विध्यापयितव्यम् ॥ ३४५० ॥

अथोपकरणप्रत्युपेक्षणादिषु द्वारेषु यतनामाह—

कडओ व चिलिमिणी वा, असती सभए व बाहि जं अंतं ।
ठाणाऽसति य भयम्मि व, विज्झायऽगणिम्मि पेहिंति ॥ ३४५१ ॥

अग्नेरन्तरे—वंशमयः कटो वस्त्रमयी वा चिलिमिलिका दातव्या । ततः प्रत्युपेक्षणा-प्रमार्जनादीनि सर्वाण्यपि पदानि कुर्वन्ति । कटक-चिलिमिलिकयोरभावे प्रतिश्रयाद् बहिरुपकरणं प्रत्युपेक्षणीयम् । अथ बहिः 'सभयं' स्तेनभययुक्तं ततो यदन्त्यं परिजीर्णमुपकरणं तद् बहिः प्रत्युपेक्षन्ते, सारोपकरणं तु विध्याते ज्योतिषि प्रत्युपेक्षितव्यम् । अथ बहिः स्थानं नास्ति यद्वाऽन्त्योपकरणस्यापि तत्रापहरणभयं ततः सर्वमप्युपधिं विध्यातेऽग्नौ प्रत्युपेक्षन्ते ॥३४५१॥

निंता न पमज्जंती, मूगाऽऽवासं तु वंदणगहीणं ।
पोरिसि बाहि मणेण व, सेहाण य दिंति अणुसट्ठिं ॥ ३४५२ ॥

निर्गच्छन्तः प्रविशन्तो वा तत्र भुवं न प्रमार्जयन्ति, वसतिमपि न प्रमार्जयन्ति, आवश्यकमपि 'मूकं' वाग्योगविरहितं वन्दनकहीनं च कुर्वन्ति, सूत्रार्थपौरुष्यौ बहिर्विदधति, बहिः स्थानाभावे मनसैव सूत्रमर्थं वाऽनुप्रेक्षन्ते, ये च शैक्षाः ज्योतिःप्रकाशे रागमुपगच्छन्ति तेषां गीतार्था अनुशिष्टिं प्रयच्छन्ति ॥ ३४५२ ॥ कथम्? इत्याह—

नाणुज्जोया साहू, दव्वुज्जोवम्मि मा हु सज्जित्था ।
जस्स वि न एइ निद्दा, स पाउय निमीलिओ गिम्हे ॥ ३४५३ ॥

'ज्ञानोद्योताः' सकलजीवादिपदार्थसार्थप्रकाशकज्ञानलक्षणभावोद्योतकलिताः साधवो भवन्ति, अतः 'द्रव्योद्योते' कतिपयपदार्थप्रकाशके ज्योतिःप्रभृतिके 'मा सजत' मा रागमुपगच्छत ।

१ "पासे तणाण० गाहा पुरातना" इति विशेषचूर्णौ ॥ २ °रणोगड्ढी ताभा० ॥
३ भा० कां० विनाऽन्यत्र—°ति ततो वा ढौ° ताटी० मो० के० ॥ ४ °पकरणं विध्या° कां० ॥

यस्य वा साधोः सप्रकाशे निद्रा नागच्छति स कल्पेन प्रावृतः स्वपिति । अथ ग्रीष्मकाले प्रावृतस्य घर्मो भवति ततो निमीलितलोचनः स्वपिति ॥ ३४५३ ॥

अथ "मूकावश्यकं वन्दनकहीनम्" ( गा० ३४५२ ) इति पदं व्याचष्टे—

**आवास बाहि असई, ठिय वंदण विगड जयण थुइहीणं ।**
**सुत्तत्थ बाहि अंतो, चिलिमिणि काऊण वे झरंति ॥ ३४५४ ॥**

आवश्यकं बहिः कुर्वन्ति । अथ बहिः स्थानं नास्ति ततो यो यत्र स्थितः स तत्रैव स्थितो मनसैव करोति । द्वादशावर्त्तवन्दनकं न प्रयच्छन्ति । 'विकटनाम्' आलोचनां यतनया वर्षाकल्पमावृता निश्चेष्टा एव कुर्वन्ति । 'स्तुतिहीनं नाम' स्तुतिमङ्गलं मनसैव कुर्वन्ति । अथ "पोरिसि बाहि" ( गा० ३४५२ ) त्ति पदं व्याख्यायते—सूत्रार्थपौरुष्यौ बहिः कुर्वन्ति । अथ बहिः स्थानं नास्ति ततः प्रतिश्रयस्याभ्यन्तरेऽपि चिलिमिलिकां कृत्वा 'झरन्ति' स्वाध्यायं कुर्वन्ति । वा विकल्पोपदर्शने, चिलिमिलिकाया अभावे मनसैव सूत्रमर्थं वाऽनुप्रेक्षन्ते इत्यर्थः ॥ ३४५४ ॥

**मूगा विसंति निंति व, उम्मुगमाई कओ वि अछिवंता ।**
**सेहा य जोइ दूरे, जग्गंति य जा धरइ जोई ॥ ३४५५ ॥**

'मूकाः' तूष्णीकाः प्रविशन्ति निर्गच्छन्ति वा, नैषेधिकीमावश्यिकीं च मनसैव कुर्वन्तीत्यर्थः । 'उल्मुकम्' अलातम् आदिशब्दादग्निशकटिकां वा कचिदप्यस्पृशन्तः तथा निर्गच्छन्ति वा प्रविशन्ति वा यथाऽऽपतन-प्रपतने न भवतः । ये च शैक्षा अगीतार्थाश्च निर्धर्माणस्ते ज्योतिषो दूरे स्थापयितव्याः । गीतार्थवृषभाश्च तावद् जाग्रति यावद् 'ज्योतिः' अग्निर्ध्रियते, न विध्यायतीति भावः, मा शैक्षादयः प्रतापयेयुरिति कृत्वा ॥ ३४५५ ॥

**अद्धाणाई अइनिद्दपिल्लिओ गीओसकिउं सुवइ ।**
**सावयभय उस्सके, तेणभए होइ भयणा उ ॥ ३४५६ ॥**

अध्वादिपरिश्रान्तोऽतिनिद्राप्रेरितो वा गीतार्थस्तमग्निमपसर्प्य स्वपिति । सिंह-व्याघ्रादिश्वापदभये यतनया तान्युल्मुकान्युत्सर्पयति । स्तेनभये तु भजना भवति—यद्याक्रान्तिकस्तेनास्ततः 'मा ज्योतिः प्रज्वलदवलोक्यागमनं कार्षुः' इति कृत्वा तमग्निमपसर्पयति, अथानाक्रान्तिकास्ततो ज्वलन्तमग्निं दृष्ट्वा 'जाग्रत्यमी' इति बुद्ध्या ते नाभिद्रवन्ति अतस्तेषु तमग्निमुत्सर्पयतीति ॥ ३४५६ ॥

**अद्धाणविवित्ता वा, परकड असती सयं तु जालेंति ।**
**सूलाई व तवेउं, कयकज्जा छार अक्कमणं ॥ ३४५७ ॥**

अध्वनि विविक्ताः—मुषिताः 'परकृतम्' अन्यप्रज्वालितमग्निं सेवन्ते । अथ परकृतो वह्निर्न प्राप्यते ततः 'स्वयम्' आत्मनैव ज्वालयन्ति, शीतार्तास्तत्रेन्धनं प्रक्षिपन्तीत्युक्तं भवति । शूलम् आदिशब्दाद् विसूचिकां वा तापयितुं परकृताभावे स्वयं ज्वालयन्ति, 'कृतकार्याः' निष्ठिते कार्ये क्षारेणाक्रमणं कुर्वन्ति, मा प्रदीपनकं भविष्यतीति कृत्वा ॥ ३४५७ ॥

---

१ च सरं° ताभा० ॥ २ च न कुर्व° भा० ॥

सावयभय आणिंति व, सोउमणा वा वि बाहि नीणिंति ।
बाहिं पलीवणभया, छारे तस्सऽसति निव्वावे ॥ ३४५८ ॥

श्वापदभयेऽन्यतः स्थानादग्निमानयन्ति । सुमनसो वा तस्मात् स्थानाद् बहिर्नयन्ति । अथ बहिः प्रदीपनकभयान्न नयन्ति । ततस्तत्र स्थितमेव क्षारेण छादयन्ति । 'तस्य' क्षारस्याभावे 'निर्वापयन्ति' विध्यापयन्तीत्यर्थः ॥ ३४५८ ॥

## प्रदीपसूत्रम् ७

सूत्रम्—

**उवस्सयस्स अंतो वगडाए सव्वराईए पईवे दिप्पेज्जा, नो कप्पइ निग्गंथाण वा निग्गंथीण वा अहालंदमवि वत्थए । हुरच्छा य उवस्सयं पडिलेहमाणे नो लभेज्जा, एवं से कप्पइ एगरायं वा दुरायं वा वत्थए । जे तत्थ परं एगरायाओ वा दुरायाओ वा वसइ से संतरा छेए वा परिहारे वा ७ ॥**

अस्य व्याख्यानं ज्योतिःसूत्रवद् मन्तव्यम् ॥ अथ भाष्यम्—

देसीभासाय कयं, जा बहिया सा भवे हुरच्छा उ ।
बंधऽणुलोमेण कयं, छेया परिहार पुव्वं तु ॥ ३४५९ ॥
अहवण वारिज्जंतो, निक्कारणओ व तिण्ह व परेणं ।
छेयं चिय आवज्जे, छेयमओ पुव्वमाहंसु ॥ ३४६० ॥

गाथाद्वयमपि गतार्थम् ( गा० ३४०४—५ ) ॥ ३४५९ ॥ ३४६० ॥

दुविहो य होइ दीवो, असव्वराई य सव्वराई य ।
ठायंते लहु लहुगा, कास अगीयत्थ सुत्तं तु ॥ ३४६१ ॥

द्विविधश्च भवति दीपः, तद्यथा—असार्वरात्रिकश्च सार्वरात्रिकश्च । तत्रासार्वरात्रिकप्रदीपयुक्तायां वसतौ तिष्ठतां मासलघु, सार्वरात्रिकप्रदीपयुक्तायां तु चत्वारो लघवः । कस्य पुनरेतत् प्रायश्चित्तम् ? । सूरिराह—अगीतार्थस्य ॥ ३४६१ ॥

इत ऊर्द्धम्—"नत्थि अगीयत्थो वा०" ( गा० ३३१३ ) इत्यारभ्य "ठायंति पईवसालाए" ( गा० ३३३४ ) इतिपर्यन्तं भाष्यं प्राग्वदत्र वक्तव्यम् ॥

अथ तत्र स्थितानां दोषानाह—

उवगरणे पडिलेहा, पमज्जणाऽऽवास पोरिसि मणे य ।
निक्खमणे य पवेसे, आवडणे चेव पडणे य ॥ ३४६२ ॥

पणगं लहुओ लहुगा, चउरो लहुगा य चउसु ठाणेसु ।
लहुगा गुरुगा य मणे, सेसेसु वि होंति चउलहुगा ॥ ३४६३ ॥

द्वे अपि प्राग् (गा० ३४३४–३५) व्याख्याते ॥३४६२॥३४६३॥ मनोद्वारे विशेषमाह—

गुरुगा य पगासम्मि उ, लहुगा ते चेव अप्पगासम्मि ।
सायम्मि होंति गुरुगा, अस्साए होंति चउलहुगा ॥ ३४६४ ॥

प्रदीपस्य प्रकाशेऽभिरोच्यमाने चत्वारो गुरुकाः । अप्रकाशे चत्वारो लघुकाः । एतदेवोत्तरार्द्धेन व्याचष्टे—सातं सुखं रतिरित्येकोऽर्थः, यदि प्रकाशे रतिं मन्यते तदा चत्वारो गुरवः । अथ असातम्–अरतिं मन्यते ततश्चत्वारो लघुकाः ॥ ३४६४ ॥ तथा—

पडिमाएँ झामियाए, उड्डाहो तणाणि वा भवे हेट्ठा ।
साणाइ चालणा लाल, मूसए खंभ तणाई पलीवेज्जा ॥ ३४६५ ॥

देवकुलादौ प्रदीपशालायां या स्कन्द-मुकुन्दादिप्रतिमा तस्यां प्रदीपेन 'ध्यामितायां' दग्धायामुड्डाहो भवेत्—अमीभिः श्रमणकैः प्रत्यनीकतया स्कन्दादिप्रतिमा दग्धेति । 'अधस्ताद्वा' संस्तारकादौ तृणानि भवेयुः तानि दह्येरन् । श्वानादिना वा प्रदीपस्य चालना भवेत्, मूषको वा 'लालां' वर्त्तिमपहरेत् ततः स्तम्भः प्रदीप्येत तृणानि वा प्रदीप्येरन् ॥ ३४६५ ॥

ततश्च—

गाउय दुगुणादुगुणं, बत्तीसं जोयणाइँ चरिमपदं ।
चत्तारि छ च लहु गुरु, छेदो मूलं तह दुगं च ॥ ३४६६ ॥

उक्तार्था (गा० ३४४०) ॥ ३४६६ ॥ द्वितीयपदे प्रदीपशालायामपि वसेयुः । कथम्? इत्याह—

अद्धाणनिग्गयाई, तिक्खुत्तो मग्गिऊण असईए ।
गीयत्था जयणाए, वसंति तो दीवसालाए ॥ ३४६७ ॥

(ग्रन्थाग्रम्–२३९२०) अध्वनिर्गतादयस्त्रिकृत्वः शुद्धां वसतिं मार्गयन्ति । यदि न प्राप्यते ततो गीतार्था यतनया प्रदीपशालायां वसन्ति ॥ ३४६७ ॥

कथं पुनर्यतना कर्त्तव्या? इत्याह—

◁ [2]ते तत्थ सन्निविट्ठा, गहिया संथारगा विहीपुव्वं ।
जागरमाण वसंती, सपक्खजयणाएँ गीतत्था ॥ ३४६८ ॥

प्राग्वत् (गा० ३४४९) ॥ ३४६८ ॥ विशेषयतनामाह— ▷

पडिमाझामण ओरुभण, लिंपणा दीवगस्स ओरुभणं ।
ओसक्कण उस्सक्कण, छुक्कारण वारणोकड्ढी ॥ ३४६९ ॥

यत्र प्रतिमाध्यापनभयं तत्र तस्मादवकाशात् प्रतिमायाः 'अवरोहणम्' अन्यत्र सङ्क्रामणं कर्त्तव्यम् । अथ प्रतिमा सङ्क्रामयितुं न शक्यते ततः स्तम्भ-कुड्यादीनां लिम्पनं प्रदीपस्य च

---

१ ग्रन्थाग्रम् ८००० मो० डे० । ग्रं० १०० ताटी० ॥ २ ◁ ▷ एतन्मध्यगतः पाठः भा० नास्ति । नास्तीयं गाथा चूर्णिकृता विशेषचूर्णिकृता वाऽऽदृता ॥

ततः स्थानाद् 'अवरोहणं' सङ्क्रामणं विधेयम् । अथ शृङ्खलादीपोऽसौ न ततः स्थानादवतारयितुं शक्यते ततो शलाकाया अवसर्पणमुत्सर्पणं वा कुर्यात् । श्वान-गवादीनां च 'छुक्कारणं' छिछि-रिति प्रतिषेधकरणेन, वारणं वा दण्डादिदर्शनेन, अपकर्षणं वा वर्तेः कर्त्तव्यम् ॥ ३४६९ ॥

अथोत्सर्पणमवसर्पणं च व्याख्यानयति—

संकलदीवे वत्तिं, उव्वत्ते पीलए व मा डज्झे ।
रूएण व तं नेहं, घेत्तूण दिवा विगिंचिंति ॥ ३४७० ॥

'शृङ्खलादीपे' स्थानान्तरं सङ्क्रामयितुमशक्ये वर्त्तिमुद्वर्तयेद्वा निष्पीडयेद्वा, 'मा दह्यतां' मा प्रदीप्यतामिति कृत्वा । रूतेन वा 'तं' प्रदीपवर्त्तिनं 'स्नेहं' तैलं गृहीत्वा ततो दिवा "विगिंचंते" परिष्ठापयन्ति ॥ ३४७० ॥

हेट्ठा तणाण सोहण, ओसक्कऽभिसक्क अन्नहिं नयणं ।
आगाढे कारणम्मि, ओसक्कऽहिसक्कणं कुज्जा ॥ ३४७१ ॥

प्रदीपस्याधस्तात् तृणानां शोधनं कर्त्तव्यम् । यद्वा तं प्रदीपमवसर्पयति वा अभिसर्पयति वा अन्यत्र वा नयति सङ्क्रामयतीत्यर्थः । एतच्चावसर्पणमभिसर्पणं वा आगाढे कारणे समुत्पन्ने गीतार्थः कुर्यात्, नानागाढे ॥ ३४७१ ॥

मज्झे व देउलाई, बाहिं व ठियाण होइ अतिगमणं ।
जे तत्थ सेहदोसा, ते इह आगाढे जयणाए ॥ ३४७२ ॥

◁ ते साधवो विकाले सम्प्राप्ताः सन्तः सप्रदीपे देवकुले स्थिता भवेयुः । ▷ यद्वा ग्रामादेर्मध्ये देवकुलम्, आदिशब्दात् प्रपा-सभादिकं वा, तच्च दिवा सागारिकाकुलं तत्र प्रभातेऽपि समागता दिवा बहिः स्थित्वा सन्ध्यायां तत्र प्रविशन्ति । यद्वा बहिःस्थितानां 'स्तेन-श्वापदादिभयमत्र रात्रौ भवति' इति श्रुत्वा ग्राममध्ये 'अतिगमनं' प्रवेशो भवति, तत्र च सप्रदीपायां वसतौ स्थितैर्ये पूर्वं शैक्षविषयाः प्रतापनादयो दोषा उक्ताः ते इहागाढे कारणे यतनया परिहर्त्तव्याः ॥३४७२॥ यदि प्रमादतः प्रदीपनकं भवेत् ततः को विधिः? इत्याह—

अन्नाए तुसिणीया, नाए दट्ठूण करण सविउलं ।
बाहिं देउल सद्दो, समागयाणं खरंटो य ॥ ३४७३ ॥

यदि केनापि न ज्ञातम् यथा—'अत्र संयताः स्थिताः सन्ति' ततस्तूष्णीका भूत्वा पलायन्ते । अथ ज्ञातम्—'संयता अत्र स्थिताः सन्ति' इति ततः प्रदीप्तं दृष्ट्वा महता शब्देन 'सविउलं' बोलं कुर्वन्ति यावद् भूयान् जनो मिलितः । ततो बहुजनस्य पुरतो भणन्ति—पश्यत पश्यत केनापि पापेन प्रदीपनकं कृतमिति । यद्वा देवकुलाद् बहिर्निर्गत्य तथैव 'शब्दः' बोलः क्रियते, समागतानां लोकानां खरण्टना कर्त्तव्या—नूनं युष्माभिरेवैतत् प्रदीपितं येनैते श्रमणा दह्यन्ते, अस्माकं चोपकरणं सर्वमप्यत्र दग्धम् । एवं खरण्टिताः सन्तो न किञ्चिदुल्लपन्ति ॥ ३४७३ ॥

१ °र्त्तयति वा निष्पीडयति वा 'मा भा० ॥ २ °कऽतिस° ताभा० ॥
३ °कऽहस° ताभा० विना ॥ ४ ◁ ▷ एतच्चिह्नान्तर्गतः पाठः भा० नास्ति ॥
५ ग्रामान्तः 'अति° भा० ॥ ६ शैक्षादयो दोषाः भा० ॥

पिण्डादिसूत्राणि ८-१०

सूत्रम्—

**उवस्सगस्स अंतो वगडाए पिंडए वा लोयए वा खीरे वा दहिं वा नवणीए वा सप्पिं वा तेल्ले वा फाणिए वा पूवे वा सक्कुली वा सिहरिणी वा उक्खित्ताणि वा विक्खित्ताणि वा विइकिण्णाणि वा विप्पइण्णाणि वा, नो कप्पइ निग्गंथाण वा निग्गंथीण वा अहालंदमवि वत्थए ८ ॥**

अथास्य सूत्रस्य कः सम्बन्धः? इत्याह—

**देहोवहीण डाहो, तदसंघट्टणाय जोतिम्मि ।**
**संगाल चरणडाहो, एसो पिंडस्सुवग्घाओ ॥ ३४७४ ॥**

तेन—शैक्षेण अन्येन वा—श्वान-गवादिना ज्योतिषः सङ्घट्टने कृते देहस्य वा उपधेर्वा दाहो भवति इति पूर्वसूत्रे उक्तम् । अत्रापि पिण्डादियुक्तोपाश्रये स्थितस्य 'साङ्गारं' सरागं ◁ "रागेण सइंगालं" ( पिण्डनि० गा० ६५९ ) ति वचनात् ▷ पिण्डादिकं समुद्दिशतश्चरणस्य दाहो भवतीति । एष पिण्डसूत्रस्य पूर्वसूत्रेण सह 'उपोद्घातः' सम्बन्धः ॥ ३४७४ ॥

अनेन सम्बन्धेनायातस्यास्य व्याख्या—उपाश्रयस्यान्तर्वगडायां पिण्डको वा लोचकं वा क्षीरं वा दधि वा नवनीतं वा सर्पिर्वा तैलं वा फाणितं वा पूपो वा शष्कुलिका वा शिखरिणी वा, एतान्युत्क्षिप्तानि वा विक्षिप्तानि वा व्यतिकीर्णानि वा विप्रकीर्णानि वा भवेयुः, नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा यथालन्दमपि वस्तुमिति सूत्रार्थः ॥　　अथ भाष्यम्—

**पिंडो जं संपन्नं, पिंडगेज्झं व पिंडविगई वा ।**
**जं तु सभावा लुत्तं, तं जाणसु लोयगं नाम ॥ ३४७५ ॥**

पिण्डो नाम—यदशनादिकं 'सम्पन्नं' विशिष्टाहारगुणयुक्तं षड्रसोपेतमिति यावत्, यद्वा यत् 'पिण्डग्राह्यं' पिण्डरूपतया हस्ते ग्रहीतुं शक्यते, 'पिण्डविकृतिर्वा' गुडादिघनविकृतिरूपा पिण्डोऽभिधीयते । 'यत्तु' यत् पुनरशनादि स्वभावादेव 'लुप्तम्' आहारगुणैरनुपेतं तद् लोचकं नाम जानीहि क्षीर-दधि-नवनीत-सर्पिः-तैलादीनि सुप्रसिद्धानीति ॥ ३४७५ ॥

**पूवो उ उल्लखज्जं, छुड्डुगुलो फाणियं तु दविओ वा ।**
**सक्कुलिगाई सुक्कं, तु खज्जगं सूयिअं सव्वं ॥ ३४७६ ॥**

---

१ दधी वा तामू० ॥ २-३ °क्खित्ताणि वा तामू० ताटी० भा० कां० ॥ ४ ◁ ▷ एतदन्तर्गतः पाठः भा० कां० नास्ति ॥ ५ °ख्या प्राग्वत् ॥ पिण्डादिपदानि तु भाष्येणैव व्याख्यायन्ते—पिंडो भा० ॥ ६ अत्र कां० ॥ ७ °लानि सु° भा० ॥ ८ चूर्णिकृदभिमतः "छड्डगुलो" त्ति पाठः । "छड्डगुलो' त्ति फाणितं, 'द्रवितो व' त्ति पिंडगुलो वा पाणिएण समं द्रवितो छड्डगुलो त्ति भण्णइ" इति चूर्णौ ॥

'पूपः' आर्द्रखाद्यकविशेषः, तद्ग्रहणेन लपनश्रीप्रभृतिकं सर्वमप्यार्द्रखाद्यकं गृहीतम्। "छुट्टगुलो" त्ति आर्द्रो गुडः, 'द्रविकः' पिण्डगुड एव पानीयेन द्रावितः, एतदुभयमपि फाणितमुच्यते। शष्कुलिकाग्रहणेन शष्कुलिका-मोदकादिकं सर्वमपि शुष्कखाद्यकं सूचितम्॥३४७६॥

**जा दहिसरम्मि गालियगुलेण चउजायसुगयसंभारा।**
**कूरम्मि छुब्भमाणी, बंधति सिहरं सिहरिणी उ॥ ३४७७॥**

दध्नः शरे गालितेन गुडेन या निष्पन्ना, अपरं च 'चतुर्जातकसुकृतसम्भारा' एला-त्वक्-तमालपत्र-नागकेसराख्यैश्चतुर्भिर्गन्धद्रव्यैराधिक्येनोपजनितवासा, कूरमध्ये प्रक्षिप्यमाणा शिखरं बध्नाति सा शिखरिणीत्युच्यते। ◁ उत्क्षिप्त-विक्षिप्तादिपदव्याख्या प्राग्वत् ▷ ॥ ३४७७॥

अथैतेषु तिष्ठतां प्रायश्चित्तमाह—

**पिंडाईआइन्ने, निग्गंथाणं न कप्पई वासो।**
**चउरो य अणुग्घाया, तत्थ वि आणाइणो दोसा॥ ३४७८॥**

पिण्डादिभिः शिखरिणीपर्यन्तैराकीर्णे प्रतिश्रये निर्ग्रन्थानाम् ◁ उपलक्षणत्वाद् निर्ग्रन्थीनां च ▷ न कल्पते वासः। अथ तिष्ठन्ति ततश्चत्वारोऽनुद्धाता मासाः। तत्राप्याज्ञादयो दोषा मन्तव्याः॥ ३४७८॥

**चउरो विसेसिया वा, दोण्ह वि वग्गाण ठायमाणाणं।**
**अहवा चउगुरुगाई, नायव्वा छेयपज्जंता॥ ३४७९॥**

अथवा 'द्वयोरपि' निर्ग्रन्थ-निर्ग्रन्थीवर्गयोस्तत्र तिष्ठतोश्चतुर्गुरुकास्तपः-कालविशेषिताः। तद्यथा—भिक्षोश्चतुर्गुरुकं तपसा कालेन च लघु, वृषभस्य कालगुरु, उपाध्यायस्य तपोगुरु, आचार्यस्य तपसा कालेन च गुरुकम्। एवं भिक्षुणीप्रभृतीनामपि मन्तव्यम्। अथवा चतुर्गुरुकमादौ कृत्वा छेदपर्यन्ता चतुर्णामपि यथाक्रमं शोधिर्ज्ञातव्या॥ ३४७९॥

सूत्रम्—

**अह पुण एवं जाणेज्जा—नो उक्खित्ताइं नो विक्खित्ताइं नो विइकिण्णाइं नो विप्पकिण्णाइं रासिकडाणि वा पुंजकडाणि वा कुलियाकडाणि वा ◁ भित्तिकडाणि वा ▷ लंछियाणि वा मुद्दियाणि वा ◁ पिहियाणि वा ▷ कप्पइ निग्गंथाण वा निग्गंथीण वा हेमंत-गिम्हासु वत्थए ९॥**

१ छुप्पमा° ताटी० त० डे०॥ २-३ ◁ ▷ एतदन्तर्गतः पाठः भा० नास्ति॥ ४ °धिर्मन्तव्या भा०॥ ५-६ त० डे० विनाऽन्यत्र—°क्खित्ताइं नो तामू० ताटी० मो० ले० कां०। °क्खित्ताणि वा नो भा०॥ ७ °ण्णाणि वा नो भा०॥ ८ °ण्णाणि वा रा° भा०॥ ९ ◁ ▷ एतन्मध्यगतः पाठः तामू० नास्ति॥ १० ◁ ▷ एतदन्तर्गतः पाठः तामू० एव वर्त्तते॥

◁ अस्य व्याख्या प्राग्वत् । नवरं यत्र पिण्डादीनि राशीकृतादिरूपाणि तत्र गीतार्थानां कल्पते ऋतुबद्धे वस्तुमिति सूत्रहृदयम् ॥ ▷ अत्रे—

"पुंजो उ होइ वट्टो, सो चेव य ईसि आयओ रासी ।"( गा० ३३११ )

इत्यादिर्भाष्यगाथाः पिण्डाद्यभिलापेन प्राग्वद् मन्तव्याः यावत् "कासय इच्छा समुप्पन्ना" ( गा० ३३४१ ) इति ॥ कीदृशी पुनरिच्छा समुत्पन्ना ? इत्युच्यते—

**अणुभूया पिंडरसा, नवरं मुंत्तूणिमेसि पिंडाणं ।**
**काहामो कोउहल्लं, तहेव सेसा वि भणियव्वा ॥ ३४८० ॥**

अनुभूतास्तावदन्येषां पिण्डानां रसाः परममीषां पिण्डानां रसान् मुक्त्वा, अतः 'करिष्यामः' पूरयिष्यामः कौतूहलमिति विचिन्त्य प्रसुप्तेषु शेषसाधुषु तानि भोज्यानि भुङ्क्ते । 'शेषाण्यपि' क्षीरादीनि "अणुभूया खीररसा" इत्याद्यभिलापेन तथैव भणितव्यानि यावद् द्वितीयपदे तत्रापि प्रतिश्रये स्थिता अगीतार्थसाधुषु भिक्षाचर्यादिनिर्गतेषु सूरयः सागारिकमित्थं ब्रुवते ॥३४८०॥

**तेल्ल-गुड-खंड-मच्छंडियाण महु-पाण-सक्कराईणं ।**
**दिट्ठ मए सन्निचया, अन्ने देसे कुडुंबीणं ॥ ३४८१ ॥**

तैल-गुड-खण्ड-मत्स्यण्डिकानां मधु-पान-शर्करादीनां च सन्निचया मयाऽन्यस्मिन् देशे कुटुम्बिनां गृहेषु दृष्टाः । शेषं सर्वमपि पिण्डाभिलापेन प्राग्वदवसातव्यम् ॥ ३४८१ ॥

सूत्रम्—

**अह पुण एवं जाणिज्जा—नो रासिकडाइं जाव नो भित्तिकडाइं कोट्ठाउत्ताणि वा पल्लाउत्ताणि वा मंचाउत्ताणि वा मालाउत्ताणि वा कुंभिउत्ताणि वा करभिउत्ताणि वा ओलित्ताणि वा विलित्ताणि वा लंछियाणि वा मुद्दियाणि वा पिहियाणि वा कप्पइ निग्गंथाण वा निग्गंथीण वा वासावासं वत्थए १० ॥**

अस्य व्याख्या प्राग्वत् । नवरं कुंम्भी—मुखाकारा कोष्ठिका, करभी—घटसंस्थानसंस्थिता, तयोरागुप्तानि—प्रक्षिप्य रक्षितानि कुम्भ्यागुप्तानि करभ्यागुप्तानि वा ॥ अत्र भाष्यम्—

**कुंभी करहीएँ तहा, पल्ले माले तहेव मंचे य ।**
**ओलित्त पिहिय मुद्दिय, एरिसएँ ण कप्पती वासो ॥ ३४८२ ॥**

---

१ ◁ ▷ एतच्चिह्नान्तर्गतः पाठः भा० नास्ति ॥ २ °त्र भाष्यम्—"पुंजो भा० ॥ ३ °दि प्राग्वद् मन्तव्यं याव° भा० ॥ ४ °त्तूणमेसि भा० विना ॥ ५ °हामो कोहल्लं ता०भा० ॥ ६ °ममीषां सुस्वादुतराणां पिण्डा° कां० ॥ ७ °डाणि वा जा° भा० ॥ ८ °डाणि वा को° भा० ॥ ९ "कुम्मी उट्टिया, करवी दुक्कणादि" इति चूर्णौ विशेषचूर्णौ च ॥ १० अस्य त० डे० ॥

यत्रोपाश्रये कुम्भ्यां वा करभ्यां वा पल्ये वा माले वा मञ्चे वा चशब्दात् कोष्ठे वा प्रक्षिप्तानि पिण्डप्रभृतीनि भवन्ति, तानि चावलिप्तानि पिहितानि मुद्रितानि वा भवेयुः, ईदृशे न कल्पते वस्तुम् ॥ ३४८२ ॥ तथा चाह—

**उडुबद्धम्मि अईते, वासावासे उवट्ठिए संते ।**
**ठायंतगाण गुरुया, कास अगीतत्थ सुत्तं तु ॥ ३४८३ ॥**

ऋतुबद्धे काले व्यतीते वर्षावासे चोपस्थिते ◁ यद्यपि सूत्रेण तत्रोपाश्रये स्थातुमनुज्ञातं तथापि न कल्पते, ▷ यदि तिष्ठन्ति ततश्चतुर्गुरुकाः । शिष्यः पृच्छति—कस्य पुनरेतत् प्रायश्चित्तम् ? । सूरिराह—अगीतार्थस्य । सूत्रं पुनर्गीतार्थमधिकृत्य प्रवृत्तम् । शेषं पिण्डाभिलापेन तथैव वक्तव्यम् ॥ ३४८३ ॥

## आगमनगृहादिसूत्राणि ११-१२

सूत्रम्—

**नो कप्पइ निग्गंथीणं अहे आगमणगिहंसि वा वियडगिहंसि वा वंसीमूलंसि वा रुक्खमूलंसि वा अब्भावगासियंसि वा वत्थए ११ ॥**

◁ इह निर्ग्रन्थ-निर्ग्रन्थीनां सामान्यतः सदोषा उपाश्रया उक्ताः, अथ केवलानामेव निर्ग्रन्थीनामभिधीयन्त इत्यनेन सम्बन्धेनायातस्य ▷ अस्य व्याख्या—अधःशब्द इह अवशब्दार्थे । पथिकादीनामागमनेनोपेतं तदर्थं वा गृहमागमनगृहम् । विवृतम्—अनावृतं गृहं विवृतगृहम् । वंसीमूलं नाम—गृहाद् बहिःस्थितमलन्दकादिकम् । वृक्षमूलं तु वृक्षस्य—सहकारादेः मूलम्—अधोभागः । अभ्रावकाशमाकाशमुच्यते । एतेषु प्रतिश्रयेषु निर्ग्रन्थीनां वस्तुं न कल्पते इति सूत्रसङ्क्षेपार्थः ॥ अत्र भाष्यविस्तरः—

**आगमणे वियडगिहे, वंसीमूले य रुक्खमब्भासे ।**
**ठायंतिकाण गुरुगा, तत्थ वि आणादिणो दोसा ॥ ३४८४ ॥**

आगमनगृहे विवृतगृहे वंसीमूले वृक्षमूलेऽभ्रावकाशे च तिष्ठन्तीनां निर्ग्रन्थीनां चत्वारो गुरुकाः । तत्राप्याज्ञादयो दोषा मन्तव्याः ॥ ३४८४ ॥ अथवा—

**आगमगिहादिएसुं, भिक्खुणिमादीण ठायमाणीणं ।**
**गुरुगादी जा छेदो, विसेसितं चउगुरू वा सिं ॥ ३४८५ ॥**

आगमनगृहादिषु भिक्षुण्यादीनां तिष्ठन्तीनां चतुर्गुरुकमादौ कृत्वा छेदं यावत् प्रायश्चित्तम् । तद्यथा—भिक्षुण्याश्चतुर्गुरुकम्, अभिषेकायाः षड्लघुकम्, गणावच्छेदिन्याः षड्गुरुकम्, प्रवर्तिन्याश्छेदः । यद्वा "सिं" आसां चतसृणामपि तपः-कालविशेषितं चतुर्गुरुकं भवति । तत्र भिक्षुण्यास्तपसा कालेन च लघुकम्, अभिषेकायाः कालेन गुरुकम्, गणावच्छेदिन्यास्तपसा गुरुकम्, प्रवर्तिन्यास्तपसा कालेन च गुरुकम् ॥ ३४८५ ॥ अथागमनगृहं व्याचष्टे—

---

१-२ ◁ ▷ एतच्चिह्नान्तर्गतः पाठः भा० नास्ति ॥ ३ °ह अधश° भा० । °ह वाश° त० ॥

**आगंतुगारत्थिजणो जहिं तु, संठाति जं चाऽऽगमणम्मि तेसिं ।**
**तं आगमोगं तु विऊ वदंति, सभा पवा देउलमादियं वा ॥ ३४८६ ॥**

आगन्तुकः—पथिकादिरगारस्थजनो यत्रागत्य सन्तिष्ठते, यच्च 'तेषां' पथिकादीनामागमने वर्त्तते, तद् 'आगमौकः' आगमनगृहं 'विद्वांसः' श्रुतधरा वदन्ति । तच्च सभा वा प्रपा वा देवकुलादिकं वा मन्तव्यम् ॥ ३४८६ ॥ तत्र तिष्ठन्तीनां दोषानाह—

**आगमणगिहे अज्जा, जणेण परिवारिया अणज्जेण ।**
**दट्ठुं कुलप्पसूता, संजमकामा विरज्जंति ॥ ३४८७ ॥**

आगमनगृहे स्थिता आर्या अनार्येन जनेन परिवारिता दृष्ट्वा कुलप्रसूताः स्त्रियः 'संयमकामाः' प्रव्रज्यां ग्रहीतुमनसो विरज्यन्ते ॥ ३४८७ ॥ कथम्? इत्याह—

**उवस्सए एरिसए ठियाणं, ण सीलभारा सगला भवंति ।**
**को दाणि हंसेण किणेज्ज काकं, एवं नियत्तंति कुलप्पसूया ॥ ३४८८ ॥**

ईदृशे उपाश्रये स्थितानामार्यिकाणां शीलं—ब्रह्मचर्यं तत्प्रधाना भाराः—संयमयोगधुरालक्षणाः 'सकलाः' सम्पूर्णा न भवन्ति, किन्तु खण्डित-विराधिताः; अस्माकं च सुसंवृतगृहमध्यमध्यावसन्तीनां प्रत्यपायाभावाद् निष्कलङ्कं शीलमनुपालयन्तीनां हंसकल्पो गृहवासः, एवंविधे तु तरुणादिप्रत्यपायबहुले प्रतिश्रये तिष्ठन्तीनां या प्रव्रज्या सा बहुदोषमलीमसतया काककल्पा, अतः क इदानीं हंसेन काकं क्रीणीयात्? । एवं विचिन्त्य कुलप्रसूताः स्त्रियः प्रव्रज्याग्रहणाद् निवर्त्तन्ते ॥ ३४८८ ॥ अथात्रैव विशेषदोषानभिधित्सुराह[1]—

**काइय पडिलेह सज्झाए, भुंजणे वीयारमेव गेलण्णे ।**
**साणादी उवगरणे, तरुणाई जे भणिय दोसा ॥ ३४८९ ॥**

कायिक्यां प्रत्युपेक्षणायां स्वाध्याये भोजने विचारे ग्लानत्वे च दोषा भवन्ति । श्वानादिना चोपकरणमपह्रियते । तरुणादयश्च दोषा ये प्रथमोद्देशके भणितास्तेऽत्र मन्तव्या इति[2] **निर्युक्तिगाथा**समासार्थः ॥ ३४८९ ॥ अथ व्यासार्थं प्रतिद्वारं बिभणिषुराह—

**मोयस्स वायस्स य सण्णिरोहे, गेलण्ण णीसट्ठमसण्णिरोहे ।**
**पलोट्टणा घाण ससद्द मत्ते, आतोभया तत्थ भवंति कीवे ॥ ३४९० ॥**

यद्यागमनगृहे स्थिताः सागारिकमिति कृत्वा मोकस्य वातस्य वा सन्निरोधं कुर्वन्ति ततो 'ग्लान्यं' ग्लानत्वं भवति । अथ तयोः सन्निरोधं न कुर्वते ततो 'निसृष्टाः' निर्लज्जा भवेयुः । अथ मात्रके कायिकीं व्युत्सृजन्ति ततो मात्रकस्य प्रलोटनायां दुरभिगन्धघ्राणिः समुच्छलति । मात्रके च सशब्दं प्रश्रवणमागच्छति, तं च श्रुत्वा सागारिका उड्डाहं कुर्वन्ति । आत्म-परोभयसमुत्थाश्च तत्र दोषा भवन्ति । तत्रात्मसमुत्थदोषा नाम—सा संयती स्वयं क्षुभ्येत । परसमुत्थस्तु "कीवे" त्ति शब्दक्लीबः संयत्याः कायिकीशब्दं श्रुत्वा क्षुभ्येत । उभयसमुत्थस्तु द्वावपि क्षुभ्येताम् ॥ ३४९० ॥

**पेहिंति उड्डाह पवंच तेणा, अपेहणे सोहि तिहोवहिस्सा ।**
**कीरंतऽकीरंत सुते य दोसा, ण णिंति भिक्खस्स निरुद्धमग्गा ॥ ३४९१ ॥**

---

१ °त्सुर्द्वारगाथामाह भा० ॥ २ °ति द्वारगा° भा० ॥

यदि संयत्यः सागारिके पश्यति स्वकीयमुपकरणं प्रत्युपेक्षन्ते तत उड्डाहो भवति, प्रपञ्चं वा स सागारिकः कुर्वीत, तथैव स्वकीयं वस्त्रं प्रत्युपेक्षेत इत्यर्थः । स्तेना वा तं सारोपधिं प्रत्युपेक्ष्यमाणं दृष्ट्वा हरेयुः । अथैतद्दोषभयाद् न प्रत्युपेक्षन्ते ततस्त्रिविधोपधेः 'शोधिः' प्रायश्चित्तम् । तद्यथा—जघन्ये पञ्चकम्, मध्यमे मासलघु, उत्कृष्टे चतुर्लघु । 'श्रुते' स्वाध्याये क्रियमाणे सागारिका आलापकान् आगमय्य तथैव उद्घट्टयेयुः । अथ स्वाध्यायो न क्रियते ततः सूत्रार्थनाशादयो दोषाः । तथा सागारिकैर्निष्क्रमण-प्रवेशस्थानोपविष्टैर्निरुद्धमार्गाः सत्यो न भैक्षाय 'निर्गच्छन्ति' निर्गन्तुं शक्नुवन्तीति भावः ॥ ३४९१ ॥

**दुक्खं च भुंजंति सति ट्ठितेसु, तक्किंति देंते य अदेंति दोसा ।**
**भुंजंति गुत्ता अधिकारिया उ, कुलुग्गया किं पुण जा अतोया ॥ ३४९२ ॥**

सागारिकेषु तत्र 'सदा' नित्यमेव स्थितेषु संयत्यो दुःखं भुञ्जते । अथ तेषां मध्यात् कश्चिद् द्रमकप्रायः 'तर्कयति' आहारयाच्ञां करोति ततो यदि दीयते तदा असंयतपोषणादधिकरणम्; अथ न दीयते ततोऽसौ प्रद्वेषं गच्छेत्, प्रद्विष्टश्च प्रान्तापनम् उड्डाहम् अभ्याख्यानप्रदानं वा कुर्यात्; एवमुभयथाऽपि दोषाः । किञ्च कुलोद्गताः स्त्रियः 'गुप्ताः' एकान्ते स्थिता अधिकारिण्यश्च भुञ्जते, किं पुनर्याः 'अतोयाः' शीतोदकविरहिताः संयत्यः काञ्जिकेनाचमनकारिण्य इत्यर्थः ? ताभिः सुतरामेकान्ते भूत्वा भोक्तव्यमिति ॥ ३४९२ ॥

**वीयारभोमे बहि दोसजालं, णिसट्ठ-बीभच्छकया य अंतो ।**
**कीरंत किच्चे य गिलाण दोसा, कालाइवत्ती य तहोसहस्स ॥ ३४९३ ॥**

यदि सागारिकमिति मत्वा विचारभूमौ बहिर्गच्छन्ति ततः 'दोषजालं' **मासकल्पप्रकृता**भिहितं दूषणनिकुरुम्बं ढौकते । अथैतद्दोषभयादन्तः संज्ञां व्युत्सृजेयुः ततः सागारिकालोके व्युत्सृजन्त्यो निसृष्टाः—निर्लज्जा बीभत्साश्च गण्यन्ते, तत्कृताश्चोड्डाहादयो दोषाः । ग्लानायाश्च संयत्याः 'कृत्ये' अकल्प्यपथ्यौषधप्रदानादौ क्रियमाणे सागारिका वदेयुः—एतदमूषामकल्पनीयं परमेतदपि प्रतिसेवन्ते, नूनं सर्वमप्यलीकममूषामित्यादयो दोषाः । अथ सागारिकमिति मत्वा न क्रियते तत औषधस्य कालातिपत्तिः स्यात्, कालातिक्रमेण चौषधे दीयमाने ग्लाना परितापमश्नुयात् ॥ ३४९३ ॥

**हरंति भाणाइ सुणादिया य, सयंति भीया व वसंति णिच्चं ।**
**णिच्चाउले तत्थ णिरुद्धचारे, णेगग्गया होति कओ सि झाओ ॥ ३४९४ ॥**

तत्रागमनगृहे शुनकादयः प्रविश्य भाजनादिकं हरन्ति । ततः 'नित्यम्' अहोरात्रमपि तत्र श्वानादिभयभीताः शेरते वा वसन्ति वा । 'नित्याकुले च' सदैव सागारिकैराकीर्णेऽत एव 'निरुद्धचारे' गमा-ऽऽगमरहिते तत्रैकाग्रता न भवति, कुतः स्वाध्यायः "सिं" अमूषां भविष्यति ? ॥ ३४९४ ॥

**तरुणा-वेसित्थि-विवाह-रायमादीसु होति सतिकरणं ।**

---

१ °क्खं ति भुं° ताभा० भा० विना ॥ २ °लातिपत्ती ताभा० ॥ ३ °चारे नैकाग्रता भवति । कुतः पुनः स्वाध्यायः "से" तस्य भविष्यति ? इति ॥ भा० ॥

**इच्छमणिच्छे तरुणा, तेणा ताओ व उवहिं वा ॥ ३४९५ ॥**

तत्रागमनगृहे बहवस्तरुणा वेश्यास्त्रियो वा कामुकवृन्दपरिवृताः, विवाहो वा महता विच्छर्देन विधीयमानः, राजादयो वा निर्गच्छन्तः प्रविशन्तो विलोक्यन्ते ततः स्मृतिकरण-कौतुके भुक्ता-ऽभुक्तानां जायेते । तथा यदि तरुणान् अवभाषमाणान् इच्छति ततो व्रतविराधना, अथ नेच्छति ततस्ते उड्डाहं कुर्युः । स्तेना वा ताः संयतीरपहरेयुः 'उपधिं वा' वस्त्रादिकं वा हरेयुः ॥ ३४९५ ॥ तदेवं व्याख्याता "काइय पडिलेह" इत्यादिका ( ३४८३ ) **निर्युक्तिगाथा ।** अथागमनगृह एव दोषान्तराण्याह—

**ओभावणा कुलघरे, ठाणं वेसित्थि-खंडरक्खाणं ।**
**उड्डमणा पवयणे, चरित्तभासुंडणा सज्जो ॥ ३४९६ ॥**

धूर्त्तैः परिवारितासु तासु कुलगृहस्यापभ्राजना स्यात्, अन्यच्च तद् आगमनगृहं वेश्यास्त्रीणां 'खण्डरक्षाणां च' हिण्डिकानां स्थानं वर्त्तते, तत्र स्थितानाम् 'उड्डर्षणा' प्रवचनविषया हीला चारित्रस्य च भ्रंशना 'सद्यः' शीघ्रं भवति । तथा तरुणादीन् दृष्ट्वा कस्याश्चिद् दश कामवेगा भवेयुः ॥ ३४९६ ॥ ते च सप्रायश्चित्ता अमी—

**चिंताइ दट्ठुमिच्छइ, दीहं णीससति तह जरे डाहे ।**
**भत्तारोयग मुच्छा, उम्मत्तो ण याणती मरणं ॥ ३४९७ ॥**
**मासो लहुओ गुरुओ, चउरो लहुगा य होंति गुरुगा य ।**
**छम्मासा लहु-गुरुगा, छेदो मूलं तह दुगं च ॥ ३४९८ ॥**

द्वे अपि प्राग् व्याख्याते ( गा० २२५८-६२ ) ॥ ३४९७ ॥ ३४९८ ॥ ◁ उक्ता आगमनगृहे दोषाः, अथ विवृतगृह-वंशीमूलयोर्दोषानाह— ▷

**एए चेव य दोसा, सविसेसतरा हवंति विगडगिहे ।**
**वंसीमूलट्ठाणे, पडिबद्धे जे भणिय दोसा ॥ ३४९९ ॥**

'एत एव' आगमनगृहोक्ता दोषाः सविशेषतरा विवृतगृहे तिष्ठन्तीनां भवन्ति । वंसीमूलस्थाने तु ते दोषा द्रष्टव्याः ये द्रव्यतो भावतश्च प्रतिबद्धे प्रतिश्रयेऽप्कायप्रयोजनादय आत्मपरोभयसमुत्थाश्च दोषाः प्रथमोद्देशके भणिताः ॥३४९९॥ अथैनामेव गाथां व्याख्यानयति—

**अवाउडं जं तु चउदिसिं पि, तीसुं दुसुं वा वि तहेक्कतो वा ।**
**अहे भवे तं वियडं गिहं तु, उड्ढं अमालं च अछन्नगं वा ॥ ३५०० ॥**

विवृतगृहं द्विधा—अधोविवृतम् ऊर्द्धविवृतं च । यत् पार्श्वतश्चतसृषु तिसृषु वा दिक्षु द्वयोर्वा दिशोरेकस्यां वा दिशि 'अपावृतं' कुड्यरहितं परमुपरि च्छन्नं तदधोविवृतगृहं भवेत् । यत् पुनः 'अमालं' मालरहितम् अच्छन्नं वा छादरहितं परं पार्श्वतः कुड्ययुक्तं तदूर्द्धविवृतं भवति ॥३५००॥

---

१ °कम् ॥ ३४९५॥ **किञ्च—ओभा°** भा० ॥ २ **च' आरक्षिणां स्था°** भा० ॥
३ ◁ ▷ नास्त्येतदन्तर्गतमवतरणं भा० कां० ॥ ४ **तत्र विवृतगृहं व्याख्या°** भा० ॥
५ **पि, दिसामओ तिन्नि दुवे व्थ चेक्कं । अहे** ताभा० ॥ ६ **°छत्तगं** ताभा० ॥
७ **वा' पार्श्वतः कुड्ययुक्तम् उपर्यनाच्छादितमित्यर्थः तदू°** भा० ॥

**अजंतिया तेण-सुणा उवेंति, गोणादि णिस्संकमभिद्दवंति ।**
**तेणादिया तत्थ चिलीय दोसा, कडादिकम्मं तु सजीवघातं ॥ ३५०१ ॥**

'तत्र' विवृतगृहे 'अयन्त्रिताः' कुड्याद्यभावादनिरुद्धप्रचाराः स्तेन-शुनका उपायान्ति, ततश्चोपकरणहरणादयो दोषाः । गवादयश्च शृङ्गाद्यभिघातेन निःशङ्कमभिद्रवन्ति । अथ तत्र पार्श्वतश्चिलिमिलिका दीयते ततः "चिलीए" त्ति "सूचनात् सूत्रम्" इति कृत्वा चिलिमिलिकायाः स्तेनादयो दोषाः, ते तामपहृत्य गच्छेयुरिति भावः । "कडाइ" त्ति अथ कटं किलिञ्चं वा कारयित्वा तत्र स्थापयन्ति तत आधाकर्मदोषनिष्पन्नं प्रायश्चित्तं 'सजीवघातम्' इति कटादौ निष्पाद्यमाने येषां जीवानामुपघातो भवति तन्निष्पन्नं पृथक् प्रायश्चित्तम् ॥ ३५०१ ॥

अथ वंशीमूलं व्याचष्टे—

**जाओ(जो आ)वणे वी य बहिं घरस्स, अलिंदओ वा अवसारिगा वा ।**
**गेहस्स पासे पुर पिट्ठओ वा, तं वंसिमूलं कुसला वदंति ॥ ३५०२ ॥**

यो गृहाद् बहिर्द्वाराग्रवर्त्तिस्थण्डिकारूप अलिन्दकः, या वा 'अपसारिका' पटालिका, कुत्र ? इत्याह—गेहस्य पार्श्वे वा पुरतो वा पृष्ठतो वा तद् वंशीमूलं नाम गृहं 'कुशलाः' तीर्थकरादयो वदन्ति । अत्र तिष्ठन्तीनां प्रतिबद्धसूत्रोक्ता दोषाः ॥ ३५०२ ॥

अथ वृक्षमूला-ऽभ्रावकाशयोर्दोषानाह—

**अट्ठिं व दारुगादी, सउणगपरिहार पुप्फ-फलमादी ।**
**एवं तु रुक्खमूले, अब्भावासम्मि सिण्हाई ॥ ३५०३ ॥**

अस्थि वा दारुकं वा आदिशब्दाद् लेष्टुकादिकं वा वातेन चालितं सत् प्रपतेत्, शकुनाः—पक्षिणस्तेषां सम्बन्धी परिहारः—पुरीषमुपरि निपतेत्, पुष्पाणि वा फलानि वा आदिशब्दाद् पत्राणि वा पतेयुः, एषु यथायोगमात्म-संयमविराधना मन्तव्या । एवं वृक्षमूले ◁ वृक्षस्याधोवर्तिनि वा गृहे ▷ तिष्ठन्तीनां दोषाः । अभ्रावकाशे तु सिण्हा—अवश्यायो भवेत्, ◁ आदिशब्दात् ▷ सचित्तं रजः प्रपतेदित्यादिपरिग्रहः । अवश्यायेनार्द्रीभूतानां विसूचिकादिभिरात्मविराधना मन्तव्या । यत एते दोषा अतो न आगमनगृहादिषु स्थातव्यम् । भवेत् कारणं येन तत्रापि स्थीयते ॥ ३५०३ ॥ किम् ? इत्याह—

**अद्धाणनिग्गयादी, तिक्खुत्तो मग्गिऊण असतीये ।**
**वाडगआगमणगिहे, इयरम्मि य णिग्गहसमत्थे ॥ ३५०४ ॥**

अध्वनिर्गतादयस्त्रिकृत्वो निर्दोषां वसतिं मार्गयित्वा यदि न प्राप्नुवन्ति ततो वाटकस्य मध्यवर्ति यद् आगमनगृहं—देवकुलादिकं तत्र वसन्ति । कथम् ? इत्याह—इतरः—शय्यातरः स यदि निग्रहसमर्थः—जितेन्द्रियः प्रत्यनीकनिवारणक्षमश्च भवति ततस्तत्र वस्तव्यम्, नान्यथा ॥ ३५०४ ॥ अथेदमेव स्फुटतरमाह—

**जं देउलादी उ णिवेसणस्सा, मज्झम्मि गुत्तं सुपुरोहडं च ।**

---

१ 'वर्तिन्याश्चतुष्किकायाः पर्यन्ते अलि° भा० ॥ २-३ ◁ ▷ एतदन्तर्गतः पाठः भा० नास्ति ॥ ४ वागड आग° कां० विशेषचूर्णौ च ॥ ५ वाकटस्य कां० ॥ ६ °त्तं च पु° ताभा० ॥

**अदुट्ठगम्मं ण य दुट्ठमज्झे, अदूरगेहं तहियं वसंति ॥ ३५०५ ॥**

'निवेशनस्य' वाटकस्य मध्ये यद् देवकुलादि 'गुत्तं' वृत्या फलिहकेन वा आवृतम्, 'सुपुरोहडं' रमणीयसंयतीप्रायोग्यविचारभूमिकम्, अदुष्टानां–शिष्टजनानां गम्यम्–आश्रयः, न च दुष्टजनमध्ये तद् वर्त्तते, 'अदूरगेहं' प्रत्यासन्नप्रातिवेश्मिकगृहं तत्र प्रथमतो वसन्ति ॥३५०५॥

**जुवाणगा जे सविगारगा य, पुत्तादओ तुज्झ इहं वसंति ।**
**मा ते वि अम्हं इह [2]संवयंतु, इच्छंत सत्ते य वसंति तत्थ ॥ ३५०६ ॥**

तत्र यः सागारिकस्तं ब्रुवते—ये युवानः सविकाराः पुत्रादयस्त्वत्सम्बन्धिनः 'इह' अस्मिन् गृहे वसन्ति मा तेऽप्यस्माकं प्रतिश्रये सम्प्रति 'संव्रजन्तु' समायान्तु । एवमुक्ते यद्यसौ 'इच्छति' प्रतिशृणोति, यदि च स्वयं 'शक्तः' तन्निवारणक्षमः ततस्तत्र वसन्ति ॥ ३५०६ ॥

**भोइयकुले व गुत्ते, दुज्जणवज्जे वसंति उ पउत्थे ।**
**महतरगादिसुगुत्ते, वंसीमूलम्मि ठायंति ॥ ३५०७ ॥**

अथेदृशमागमनगृहं न प्राप्यते ततो भोजिकस्य–ग्रामस्वामिनः कुले–गृहे 'गुप्ते' वृत्या फलिहकेन वा सुसंवृते 'दुर्जनवर्जे' दुःशीलजनप्रवेशरहिते यदलिन्दकादि तत्र वसन्ति । स च भोजिको यदि प्रोषितस्तदा महत्तरकादिभिः–प्रधानपुरुषैस्तद् गृहं यदि सुगुप्तं–सुरक्षितं भवति तत एवंविधे वंशीमूलगृहे तिष्ठन्ति ॥ ३५०७ ॥

**तस्सऽसइ उड्ढवियडे, वसंति कडगादि छोढुणं उवरिं ।**
**तस्सऽसति पासवियडे, कडगादी पंतवत्थेहिं ॥ ३५०८ ॥**

'तस्य' यथोक्तगुणोपेतस्य वंशीमूलगृहस्याभावे ऊर्द्ध्वविवृतगृहे उपरि कटादिकं प्रक्षिप्य तिष्ठन्ति, आदिशब्दाद् वस्त्रचिलिमिलिकया वाऽऽच्छादनं कुर्वन्ति । तस्याभावे पार्श्वविवृतेऽपि तिष्ठन्ति, अधोविवृते इत्यर्थः । तत्र च कट-किलिञ्चादिभिश्चिलिमिलिकां कृत्वा पार्श्वतः प्रदद्यात् । अथ कटादयो न प्राप्यन्ते ततः 'प्रान्तवस्त्रैः' परिजीर्णचीवरैः पार्श्वानि च्छादयितव्यानि ॥३५०८॥

**विहं पवन्ना घणरुक्खहेट्ठे, वसंति उस्सा-ऽवणिरक्खणट्ठा ।**
**तस्साऽसती अब्भगवासिए वि, सुवंति चिट्ठंति व उण्णिछन्ना ॥ ३५०९ ॥**

अथ 'विहं' अध्वानं प्रपन्नास्ताः संयत्यस्तत्र चाधोविवृतमपि गृहं न प्राप्यते ततो घनः–बहलो निश्छिद्रो यो वृक्षः–वटादिस्तस्याधस्ताद् अवश्यायस्य–अन्तरिक्षसूक्ष्माप्कायस्य अवनेश्च सचित्तपृथिवीकायस्य रक्षणार्थं वसन्ति । तस्याप्यभावे 'अभ्रावकाशकेऽपि' आकाशे और्णिककल्पच्छन्नाः स्वपन्ति वा तिष्ठन्ति वा ॥ ३५०९ ॥

सूत्रम्—

**कप्पइ निग्गंथाणं अहे आगमणगिहंसि वा वियडगिहंसि वा वंसीमूलंसि वा रुक्खमूलंसि वा अब्भावगासंसि वा वत्थए १२ ॥**

---

१ वाकटस्य कां० ॥ २ संपयं° ताभा० विशेषचूर्णौ च ॥

अस्य व्याख्या प्राग्वत् ॥ अथ भाष्यम्—

**एसेव गमो नियमा, निग्गंथाणं पि णवरि चउलहुगा ।**
**णवरिं पुण णाणत्तं, अब्भावासम्मि वतिगादी ॥ ३५१० ॥**

'एष एव' निर्ग्रन्थीसूत्रोक्तो गमः आगमनगृहादिविषयो नियमाद् निर्ग्रन्थानामपि भवति, नवरं प्रायश्चित्तं चतुर्लघुकाः, शेषं तु सर्वमपि दोषजालं तथैव वक्तव्यम् । नवरं पुनरत्र द्वितीयपदे तिष्ठतां नानात्वम् । किम् ? इत्याह—व्रजिका—गोकुलं तस्यां ग्लानार्थं गताः सन्त आदिशब्दादध्वनि वा वर्त्तमाना अभ्रावकाशे वसेयुः । उत्सर्गतस्तु निर्ग्रन्थानामप्यागमनगृहादिषु स्थातुं न कल्पते ॥ ३५१० ॥ आह सूत्रेणानुज्ञातमवस्थानमतस्तेन सह विरोधः प्राप्नोति ? सूरिराह—

**सुत्तनिवाओ पोराण आगमे भोइए व रक्खंते ।**
**आराम अहेविगडे, वंसीमूले व णिद्दोसे ॥ ३५११ ॥**

पुराणं—चिरन्तनं यदागमनगृहं तत्र सागारिकः सम्प्रति कोऽपि नागच्छति, यद्वा यत्रागमनगृहे स्थितानां भोजिकः—ग्रामस्वामी जनमुपागच्छन्तं रक्षति, ईदृशे 'सूत्रनिपातः' सूत्रावतारो मन्तव्यः । तथा य आरामो नवमालिकागुल्मादिभिर्गुप्तस्तत्राधोविवृते सूत्रमवतरति । वंशीमूलमपि यद् निर्दोषं तत्र सूत्रावतारः ॥ ३५११ ॥ अथैनामेव **निर्युक्तिगाथां** भाष्यकारः स्पष्टयति—

**अभुज्जमाणी उ सभा पवा वा, गामेगपासम्मि ण याऽणुपंथे ।**
**पभू व वारेति जणं उवेंतं, ण कुप्पती सो य तहिं तु ठंति ॥ ३५१२ ॥**

सभा वा प्रपा वा या अपरिभुज्यमाना ग्रामस्यैकपार्श्वे भवति, 'न च' नैव 'अनुपथे' मार्गाभ्यर्णे यद्वा भुज्यमानायामपि यत्र स्थितानां 'प्रभुः' ग्रामस्वामी सम्यग्दृष्टिर्भद्रको वा जनमुपयान्तं निवारयति, 'स च' जनो वार्यमाणः साधूनां ग्रामस्वामिनो वा न कुप्यति 'तत्र' ईदृशे आगमनगृहेऽपि तिष्ठन्ति ॥ ३५१२ ॥

**गुम्मेहि आरामघरम्मि गुत्ते, वईय तुंगाय व एगदारे ।**
**अहे अगुत्ते छइतम्मि ठंती, ण जत्थ लोगो बहु मण्णिलेति ॥ ३५१३ ॥**

'गुल्मैः' नवमालिका-कोरिण्टकादिभिर्गुप्ते, वृत्या वा 'तुङ्गया' उच्चैस्तरया परिक्षिप्ते, एकद्वारे आरामगृहे अधोऽगुप्तेऽप्युपरि 'छादिते' स्थगिते तिष्ठन्ति, परं यत्र 'बहुः' भूयान् लोको न 'सन्निलीयते' न समायाति ॥ ३५१३ ॥

**जं वंसिमूलऽण्णमुहं च तेणं, [1]पिहदुवारं ण तओ उ छिंडी ।**
**सुणेंति सद्दं न परोप्परस्स, न काइयं णेव य दिट्ठिवातो ॥ ३५१४ ॥**

यद् 'वंशीमूलम्' अलिन्दकादि 'तेन' मूलगृहेण सहान्यतोमुखं पृथग्द्वारं च, अत एव 'ततः' तदभिमुखा छिण्डिका न भवति, यत्र च परस्परं संयता अविरतिकाश्च शब्दं न शृण्वन्ति, न चैकत्र कायिकीं कुर्वते, नैव च परस्परं दृष्टिपातः, केवलं मूलगृहेण सह द्रव्यतः प्रतिबद्धम्, न चाप्काययोजनादयो दोषाः, एवंविधे कल्पते वस्तुम् ॥ ३५१४ ॥

**असई य रुक्खमूले, जे दोसा तेहिँ वज्जिए ठंति ।**

---

१ **पिहं नु दारं न ततो य छिंडी** ताभा० ॥

**अद्धाणमब्भवासे, गेलण्णागाढ वइगादी ॥ ३५१५ ॥**

एतेषामागमनगृहादीनामभावे ये पूर्वमस्थि-दारुकादयो दोषा उक्तास्तैर्वर्जिते वृक्षमूले तिष्ठन्ति । तथा अध्वानं प्रतिपन्ना अपरप्रतिश्रयाभावे आगाढे वा ग्लानत्वे व्रजिकादौ सम्प्राप्ता अभ्रावकाशे वसन्ति ॥ ३५१५ ॥ अथ वृक्षमूले तिष्ठतां विशेषमुपदर्शयति—

**कडं कुणंतेऽसति मंडवस्सा, कडाऽसती पोत्तिमतेणगम्मि ।**
**सद्दोवओगो धणुतासणा य, सोट्टादि पार्डिति य पुव्वलग्गे ॥ ३५१६ ॥**

यत्र वृक्षमूलेऽधस्ताद् मण्डपो भवति तत्र प्रथमतः स्थातव्यम् । तदभावे कटं कुर्वन्ति, कटचिलिमिलिकां ददतीति भावः । अथ कटो न प्राप्यते ततः पोतं-वस्त्रं तैश्चिलिमिलिकाः कुर्वन्ति यदि 'अस्तेनकं' स्तेनभयं न स्यात् । अथ स्तेनभयं तत्र वर्त्तते सागारिका वा ब्रुवते 'श्रमणकाः पटमण्डपं कुर्वन्ति' ततः शब्दः कर्त्तव्यः, पक्षिणां 'छिछिका'इत्यादिना शब्देन निवारणं कार्यमिति भावः । उपयोगो[3] वा दातव्यः । धनुषा वा पाषाणैर्वा पक्षिणां त्रासनां कुर्वन्ति, भयमुपजनयन्तीत्यर्थः । सोट्टा[4] नाम—शुष्ककाष्ठानि तानि ◁ आदिशब्दाद् लेष्टुकादीनि च ▷[5] पूर्वलग्नानि पातयन्ति । एषा वृक्षमूले तिष्ठतां यतना भणिता । अथाभ्रावकाशे तिष्ठतां प्रतिपाद्यते—आगाढे ग्लानत्वे दुग्धादिना प्रयोजनं भवेत् तत्राभ्रावकाशे वसनं सम्भवेत् ॥ ३५१६ ॥

कथम् ? इत्याह—

**विसोहिकोर्डि हवइत्तु गामे, चिरं व कज्जं ति वयंति घोसं ।**
**अब्भासगामाऽसति तत्थ गंतुं, पडालि-रुक्खाऽसतिए अछण्णे ॥ ३५१७ ॥**

यदा स्वग्रामे शुद्धं दुग्धादि न प्राप्यते तदा स्वग्राम एव ये विशोधिकोटिदोषास्तान् पञ्चकादिप्रायश्चित्तक्रमेण हापयित्वा दुग्धादिकं गृह्णन्ति । अथ तथापि न लभ्यते 'चिरं वा' प्रभूतदिवसान् तेन ग्लानस्य कार्यमिति कृत्वा 'घोषं' गोकुलं व्रजन्ति । कथम् ? इत्याह—'अभ्यासे' गोकुलप्रत्यासन्ने ग्रामे स्थित्वा गोकुलाद् दुग्धादिकमानेतव्यम् । अथ नास्ति प्रत्यासन्नग्रामस्ततः 'तत्र' व्रजिकायां गत्वा पटालिकायां तिष्ठन्ति । तस्या अभावे वृक्षमूले । तस्याप्यभावेऽच्छन्नेऽभ्रावकाशेऽपि तिष्ठन्ति ॥ ३५१७ ॥

**॥ उपाश्रयप्रकृतं समाप्तम् ॥**

---

१ सोढादि भा० । "सोट्टा सुक्कट्ठा" इति विशेषचूर्णौ ॥
२ °स्त्रं तन्मयी चिलिमिलिका दातव्या यदि भा० ॥
३ °योगं वा प्रयच्छन्ति । धनु° भा० ॥
४ सोढा नाम भा० ॥
५ ◁ ▷ एतच्चिह्नान्तर्गतः पाठः भा० नास्ति ॥

## सा गा रि क पा रि हा रि क प्र कृ त म्

सूत्रम्—

**एगे सागारिए पारिहारिए, दो तिन्नि चत्तारि पंच सागारिया पारिहारिया, एगं तत्थ कप्पागं ठवइत्ता अवसेसे निव्विसेज्जा १३ ॥**

अथास्य सूत्रस्य कः सम्बन्धः ? इत्याह—

जहुत्तदोसेहिं विवज्जिया जे, उवस्सगा तेसु जती वसंता ।
एगं अणेगे व अणुण्णवित्ता, वसंति सामिं अह सुत्तजोगो ॥ ३५१८ ॥

यथोक्तैः—बीज-विकटादिभिरवकाशतापर्यन्तैर्दोषैर्विवर्जिताः ये उपाश्रयास्तेषु यतयो वसन्त एकं वा अनेकान् वा गृहस्वामिनोऽनुज्ञाप्य वसन्तीत्यनेन सूत्रेण प्रतिपाद्यते । 'अथ' अयं पूर्वसूत्रैः सहास्य सूत्रस्य योगः—सम्बन्धः ॥ ३५१८ ॥

अनेन सम्बन्धेनायातस्यास्य व्याख्या—एकः 'सागारिकः' वसतिस्वामी परिहारं—परित्याग-मर्हतीति व्युत्पत्त्या 'पारिहारिकः' भिक्षाग्रहणे परिहर्त्तव्य इत्यर्थः । यथा चैकः सागारिकः पारिहारिकः तथा द्वौ त्रयश्चत्वारः पञ्च सागारिकाः पारिहारिकाः, न तेषां बहूनामपि गृहेषु प्रवेष्टव्यमिति भावः । अथ सूत्रेणैव सूत्रमपवदति—"एगं तत्थ कप्पागं" इत्यादि[1] । बहुजनसाधारणे देवकुलादौ स्थिताः 'तत्र' तेषु बहुषु सागारिकेषु मध्ये येन सागारिकतया स्थापितेन शेषगृहेषु प्रवेष्टुं कल्पते तमेकं कल्पकं स्थापयित्वा शेषेषु[2] सागारिककुलेषु 'निर्विशेयुः' प्रविशेयुरिति सूत्रसङ्क्षेपार्थः ॥

विस्तरार्थं भाष्यकृद् बिभणिषुराह—

सागारिउ त्ति को पुण, काहे वा कतिविहो व से पिंडो ।
असिज्जायरो व काहे, परिहरियव्वो व सो कस्सा ॥ ३५१९ ॥
दोसा वा के तस्सा, कारणजाए व कप्पती कम्मि ।
जयणाए वा काए, एगमणेगेसु घेत्तव्वो ॥ ३५२० ॥

सागारिक इति पदमेकार्थिकनामभिः प्ररूपणीयम् । कः पुनः सागारिको भवति ? इति चिन्तनीयम् । कदा वा स शय्यातरो भवति ? । कतिविधो वा "से" तस्य पिण्डः ? । अशय्यातरो वा कदा भवति ? । कस्य वा संयतस्य सम्बन्धी 'सः' सागारिकः परिहर्त्तव्यः ? । के वा 'तस्य' सागारिकपिण्डस्य ग्रहणे दोषाः ? । कस्मिन् वा कारणजातेऽसौ कल्पते ? । कया वा यत-

---

१ °दि । 'तत्र' तेषु बहुषु सागारिकेष्वेकं कल्पकं स्थापयित्वा अवशेषाणि सागारिककुलानि 'निर्विशेत्' उपभुञ्जीत । किमुक्तं भवति ?—ग्लानादिकारणे येन सागा° भा० ॥

२ °षु सर्वेष्वपि कुलेषु प्रविशेदिति सूत्र स° भा० ॥

नया स पिण्ड एकस्मिन् वा सागारिके 'अनेकेषु वा' द्व्यादिषु सागारिकेषु ग्रहीतव्यः ? इति द्वारगाथाद्वयसमासार्थः ॥ ३५१९ ॥ ३५२० ॥ अथ व्यासार्थं प्रतिद्वारमभिधित्सुराह—

सागारियस्स णामा, एगट्ठा णाणवंजणा पंच ।
सागारिय सेज्जायर, दाता य तरे धरे चेव ॥ ३५२१ ॥

सागारिकस्य नामानि शक्रेन्द्र-पुरन्दरादिवदेकार्थानि 'नानाव्यञ्जनानि' पृथगक्षराणि पञ्च भवन्ति । तद्यथा—सागारिकः १ शय्याकरः २ शय्यादाता ३ शय्यातरः ४ शय्याधरः ५ चेति ॥ ३५२१ ॥ अथैतेषामेव व्याख्यानमाह—

अगमकरणादगारं, तस्सहजोगेण होइ सागारी ।
सेज्जाकरणे सेज्जाकरो उ दाता तु तद्दाणा ॥ ३५२२ ॥
गोवाइऊण वसहिं, तत्थ वि ते यावि रक्खिउं तरइ ।
तद्दाणेण भवोघं, च तरति सेज्जातरो तम्हा ॥ ३५२३ ॥
जम्हा धारइ सिज्जं, पडमाणिं छज्ज-लेपमाईहिं ।
जं वा तीएँ धरेती, नरगा आयं धरो तम्हा ॥ ३५२४ ॥

न गच्छन्तीत्यगमाः—वृक्षास्तैः कृतमगारम्, पृषोदरादित्वादिष्टरूपनिष्पत्तिः, तेन—अगारेण सह यस्य योगो विद्यते स सागारिकः, सर्वधनादेराकृतिगणत्वाद् मत्वर्थीय इकप्रत्ययः । यतश्चासौ शय्यां—प्रतिश्रयं करोति अतः शय्याकरः । तस्याः—शय्याया दानाच्च शय्यादाता भण्यते । यतश्चासौ वसतिं 'गोपायितुं' संरक्षितुं 'तरति' शक्नोति ततः शय्यातरः; यद्वा 'तत्र' तस्यां—शय्यायां स्थितान् साधून् स्तेनादिप्रत्यपायेभ्यो रक्षितुं तरति ततोऽसौ शय्यातरः; अथवा तस्याः—शय्याया दानेन 'भवौघं' संसारप्रवाहं तरति अतः शय्यातर उच्यते । यस्माच्च शय्यां पतन्तीं छादन-लेपनाभ्याम् आदिशब्दात् स्थूणादानादिभिश्च धारयति अतः शय्याधरः; यद्वा तया—शय्यया साधूनां वितीर्णया नरकादात्मानं धारयतीति शय्याधरः ॥ ३५२२ ॥ ३५२३ ॥ ३५२४ ॥ गतं सागारिकद्वारम् । अथ 'कः पुनः सागारिको भवति ?' इति प्रश्नस्य निर्वचनमाह—

सेज्जायरो पभू वा, पभुसंदिट्ठो व होइ कायव्वो ।
एगमणेगे व पभू, पभुसंदिट्ठे वि एमेव ॥ ३५२५ ॥

शय्यातरः प्रभुर्वा प्रभुसन्दिष्टो वा कर्त्तव्यो भवति । तत्र प्रभुः—उपाश्रयस्वामी । प्रभुसन्दिष्टस्तु तेनैव प्रभुणा यत् कृतप्रमाणतया निर्दिष्टः । यः प्रभुः स एको वा स्यादनेको वा, प्रभुसन्दिष्टोऽपि 'एवमेव' एकोऽनेको वा भवति ॥ ३५२५ ॥ अमुमेवार्थं विशेषत आह—

सागारिय संदिट्ठे, एगमणेगे चउक्कभयणा तु ।
एगमणेगा वज्जा, णेगेसु उ वज्जए एक्कं ॥ ३५२६ ॥

सागारिके सन्दिष्टे च एकानेकपदनिष्पन्ना चतुष्कभजना कर्त्तव्या । सा चेयम्—एकः प्रभुरेकं सन्दिशति एष प्रथमो भङ्गः १ एकः प्रभुरनेकान् सन्दिशति इति द्वितीयः २ अनेके प्रभव एकं सन्दिशन्ति इति तृतीयः ३ अनेके प्रभवोऽनेकान् सन्दिशन्ति इति चतुर्थः ४ ।

१ उ ठावते एगं ताभा० ॥

अत्र चैको वा अनेके वा शय्यातरा वर्ज्याः । अपवादपदे पुनरनेकेषु शय्यातरेष्वेकं सागारिकं स्थापयित्वा वर्जयेत्, शेषेषु तु प्रविशेत् । एतदुपरिष्टाद् व्यक्तीकरिष्यते ॥ ३५२६ ॥

अथ 'कदा सागारिको भवति ?' इति प्रश्नस्य प्रतिवचनमाह—

**अणुणविय उग्गहंगण, पायोग्गाणुण्ण अतिगते ठविते ।**
**सज्झाय भिक्ख भुत्ते, णिक्खित्ताऽऽवासए एक्को ॥ ३५२७ ॥**
**पढमे बितिए ततिए, चउत्थ जामे वे होज्ज वाघातो ।**
**निव्वाघाए भयणा, सो वा इतरो व उभयं वा ॥ ३५२८ ॥**

अत्र नैगमनयाश्रिता बहव आदेशाः । तत्रैक आचार्यदेशीयो ब्रूते—क्षेत्रे प्रत्युपेक्षिते सति यदा प्रतिश्रयोऽनुज्ञापितस्तदा सागारिको भवति १ । अपरो भणति—यदा सागारिकस्यावग्रहं प्रविष्टाः २ । अन्यो ब्रूते—यदा तस्य गृहस्याङ्गणं प्रविष्टाः ३ । अपरः प्राह—यदा तृण-डगलादिकं प्रायोग्यमनुज्ञापितम् ४ । अन्यो भणति—यदा वसतिम् 'अतिगताः' प्रविष्टाः ५ । अपरो ब्रूते—दण्डकाद्युपकरणे स्थापिते दानश्राद्धादिकुलानां वा स्थापने स्थापिते ६ । तदपरः प्राह—यदा स्वाध्यायः कर्त्तुमारब्धः ७ । अन्यो भणति—यदा गुरूणां पार्श्वे उपयोगं कृत्वा भिक्षां पर्यटितुं लग्नाः ८ । अपरो ब्रूते—यदा भोक्तुमारब्धाः ९ । अन्यो भणति—भाजनेषु निक्षिप्तेषु १० । एको ब्रूते—यदा दैवसिकमावश्यकं कृतम् ११ ॥ ३५२७ ॥

अपरो भणति—रात्रौ प्रथमे यामे गते सति शय्यातरो भवति १२ । तदपरः—द्वितीययामे गते १३ । अन्यः—तृतीययामे गते १४ । अपरोऽभिधत्ते—चतुर्थे यामे गते सति १५ । आचार्यः प्राह—एते सर्वेऽप्यनादेशाः । कुतः ? इत्याह—अनुज्ञापितावग्रहादिषु निक्षिप्तान्तेषु दिवसत एव व्याघातो भवेत्, व्याघाताच्चान्यां वसतिमन्यद्वा क्षेत्रं गताः ततः कस्यासौ शय्यातरो भवतु ? । आवश्यकादिषु च चतुर्थयामपर्यन्तेषु वसतिव्याघातेन बोधिकस्तेनादिभयेन वाऽन्यत्र सङ्क्रामतां कस्य शय्यातरो भवितुमर्हति ? । आदेशः पुनरयम्—'निर्व्याघाते' व्याघाताभावे यद्यन्यां वसतिं न गताः तत्रैव रात्रावुषितास्ततो भजना कर्त्तव्या । स वा शय्यातरो भवेत् 'इतरो वा' अन्य उभयं वा ॥ ३५२८ ॥ इदमेव भावयति—

**जइ जग्गंति सुविहिया, करेंति आवासगं च अण्णत्थ ।**
**सेज्जातरो ण होती, सुत्ते व कए व सो होती ॥ ३५२९ ॥**

'यदि' इत्यभ्युपगमे, रात्रेश्चतुरोऽपि प्रहरान् 'सुविहिताः' शोभनानुष्ठानाः साधवो यदि जाग्रति प्राभातिकं चावश्यकमन्यत्र गत्वा कुर्वन्ति तदा स मूलोपाश्रयस्वामी शय्यातरो न भवति, किन्तु 'सुप्ते वा' शयिते कृते सति कृते वा प्राभातिकावश्यके स शय्यातरो भवति । अथ शय्यातरगृहे रात्रौ सुप्त्वा प्राभातिकप्रतिक्रमणं तत्रैव कुर्वन्ति तदा परिस्फुटं स एव शय्यातर इति ॥ ३५२९ ॥

**अन्नत्थ व सेऊणं, आवासग चरममण्णहिं तु करे ।**
**दोण्णि वि तरा भवंती, सत्थादिसु इयरधा भयणा ॥ ३५३० ॥**

---

१ व होति वा° ताभा० ॥

अन्यत्र स्थाने सुप्त्वा 'चरमं' प्राभातिकमावश्यकमन्यत्र कुर्वन्ति तदा यस्यावग्रहे रात्रौ सुप्ता यदवग्रहे च प्राभातिकप्रतिक्रमणं कृतं तौ द्वावपि शय्यातरौ भवतः । इदं प्रायः सार्थादिषु सम्भवति, आदिशब्दात् चौरावस्कन्दभयादिपरिग्रहः । 'इतरथा तु' ग्रामादिषु वसतां 'भजना' विकल्पना ॥ ३५३० ॥ तामेवाह—

**असइ वसहीय वीसुं, वसमाणाणं तरा तु भयितव्वा ।**
**तत्थऽण्णत्थ व वासे, छत्तच्छायं तु वज्जेंति ॥ ३५३१ ॥**

यत्र सङ्कीर्णायां वसतौ सर्वेऽपि साधवो न मान्ति तत्र 'विष्वग्' अन्यस्यां वसतौ वसतां साधूनां शय्यातरा भक्तव्याः । तत्र हि यदि साधवः पृथग्वसतावुषित्वा द्वितीयदिने सूत्रपौरुषीं कृत्वा समागच्छन्ति ततो द्वावपि शय्यातरौ । अथ मूलवसतिमागम्य सूत्रपौरुषीं कुर्वन्ति तत एक एव मूलवसतिदाता शय्यातरः । **लाटाचार्या**भिप्रायः पुनरयम्—शेषाः साधवः 'तत्र वा' मूलवसतौ 'अन्यत्र वा' प्रतिवसतौ वमन्तु, न तेषां सम्बन्धिना सागारिकेणेहाधिकारः, किन्तु सकलगच्छस्य च्छत्रकल्पत्वात् छत्रः[1]—आचार्यस्तस्य च्छायां वर्जयन्ति, मौलशय्यातरगृहमित्यर्थः इति **विशेषचूर्णि-निशीथचूर्ण्यो**रभिप्रायः[2] ।

**मूलचूर्ण्य**भिप्रायः[3] पुनरयम्—विस्तीर्णाया वसतेरभावे विष्वग्वसतौ वसतां शय्यातरा भजनीयाः, यदि संस्तरति ततः सर्वेऽपि शय्यातराः परिह्रियन्ताम्, अथ न संस्तरति तत एकं शय्यातरकुलं निर्विशन्ति शेषाणि परिहरन्ति । तथाऽप्यसंस्तरणे द्विन्यादिक्रमेण तावद् वक्तव्यं यावद् यस्य वसतावाचार्यः स एको वर्जनीयः, शेषाः सर्वेऽपि निर्वेशनीयाः । तथा "तत्थऽन्नत्थ व वासे" इत्यादि । किलैकस्याचार्यस्य बहव आचार्याः श्रुतार्थमुपसम्पन्नाः, ते चैकस्यां वसतावमान्तः पृथक्पृथग्वसतिषु स्थिताः सन्तः 'तत्र' मूलाचार्यसमीपे 'अन्यत्र वा' आत्मीयासु वसतिषु वसन्तु सर्वेषामपि शय्यातराः परिहर्त्तव्याः । असंस्तरणे तु पूर्वोक्तक्रमेण तावद् वक्तव्यं यावत् छत्रच्छायां वर्जयन्ति, मौलाचार्यशय्यातरगृहमित्यर्थः ॥ ३५३१ ॥

---

१ **छत्रस्य-आचार्यस्य च्छा°** भा० कां० ॥

२ "असइ० गाहा । जइ संकुया वसही अद्धगा अन्नत्थ सोवगा जंति, तत्थ जे गया कल्लेगाणियं पोरिसिं तत्थेव करेंति दो वि सेज्जायरा । अह मूलवसही पडियागंता करेंति पोरिसिं मूलवसहिदाया सेजायरो । एसा भयणा । अहवा **लाडाचार्या**नामादेशेन—जत्थ आयरिओ वसति सो सेज्जाय····················छत्तो आयरिओ ॥ काहे त्ति गयं ।" इति **विशेषचूर्णिः** ॥

३ "असति० गाधा ॥ जति संकुडा वसधी, अद्धगा अण्णत्थ सोवगा जंति ताधे सेज्जातरा भयितव्वा । कधं ? जति संथरति सव्वे वज्जेंतु, अध ण संथरति तो एगं णिव्विसंति, दो तिण्णि जाव जस्स वसधीए आयरिओ जेसु सुवति सो वज्जेतव्वो । एस भयणा । 'तत्थऽण्णत्थ व वासे' त्ति जत्थ एगस्स आयरियस्स बहवे आयरिया सुओवसंपण्णगा एगाए वसधीए अमायंता पिधप्पिधासु वसधीसु ठिता ते पुण आयरिया 'तत्थ व' त्ति मूलायरियसगासे वा वसंतु 'अण्णत्थ व' त्ति अप्पऽप्पणिज्जियासु वसधीसु वसन्तु सव्वे सेज्जातरा वज्जेतव्वा । असंथरणे जाव जत्थ आयरिओ वसति सो वज्जेतव्वो । छत्तो–आयरिओ । छद अपवारणे । आचार्यवसत्याः सेज्जातरमित्यर्थः । एतं पसंगेण भणियं ॥ काधे त्ति गतं ॥" इति **चूर्णिः** ॥

गतं 'कदा सागारिकः ?' इति द्वारम्। अथ 'कतिविधः शय्यातरपिण्डः ?' इति द्वारमाह—

**दुविह चउव्विह छव्विह, अट्ठविहो होति बारसविहो य।**
**सेज्जातरस्स पिंडो, तव्विवरीओ अपिंडो उ ॥ ३५३२ ॥**

द्विविधो वा चतुर्विधो वा षड्विधो वा अष्टविधो वा द्वादशविधो वा शय्यातरस्य पिण्डो भवति। तद्विपरीतः पुनः 'अपिण्डः' शय्यातरपिण्डो न भवति ॥ ३५३२ ॥

अथैनामेव गाथां विवृणोति—

**आहारोवहि दुविहो, बिदु अण्णे पाण ओहुवग्गहिए।**
**असणादिचउर ओहे, उवग्गहे छव्विहो एस ॥ ३५३३ ॥**
**अण्णे पाणे वत्थे, पादे सूयादिया य चउरट्ठ।**
**असणादी वत्थादी, सूचादि चउक्कका तिन्नि ॥ ३५३४ ॥**

द्विविधः शय्यातरपिण्डो भवति, तद्यथा—आहार उपधिश्च। "बिदु" त्ति द्विगुणितौ द्वौ चत्वारो भवन्तीति कृत्वा चतुर्विधः शय्यातरपिण्डः पुनरयम्—अन्नं पानं औघिकोपकरणं औपग्रहिकोपकरणं चेति। तथा अशनादयश्चत्वार औघिकोपधिः औपग्रहिकोपधिश्चेति षड्विधः ॥ ३५३३ ॥

अन्नं पानं वस्त्रं पात्रं 'शूच्यादयः' शूची-पिप्पलक-नखरदनिका-कर्णशोधनरूपाश्चत्वार इत्यष्टविधः। तथाऽशनादीनि वस्त्रादीनि सूच्यादीनि चेति त्रीणि चतुष्कानि द्वादश भवन्ति। तद्यथा—अशनं १ पानं २ खादिमं ३ स्वादिमं ४ वस्त्रं ५ पात्रं ६ कम्बलं ७ पादप्रोञ्छनं ८ सूची ९ पिप्पलको १० नखच्छेदनकं ११ कर्णशोधनकं १२ चेति ॥ ३५३४ ॥

**तण-डगल-छार-मल्लग-सेज्जा-संथार-पीढ-लेवादी।**
**सेज्जातरपिंडो सो, ण होति सेहो य सोवहिओ ॥ ३५३५ ॥**

तृण-डगल-क्षार-मलक-शय्या-संस्तारक-पीठ-लेपा आदिशब्दात् कुटमुखादिकं च एष शय्यातरपिण्डो न भवति। यदि च शय्यातरस्य पुत्रादिः शैक्षो वस्त्र-पात्रसहितः प्रव्रजितुमुपतिष्ठते तदा स सागारिकपिण्डो न भवति, अतः कल्पते सोपधिरप्यसौ प्रव्राजयितुम् ॥ ३५३५ ॥

गतं 'कतिविधः सागारिकपिण्डः ?' इति द्वारम्। अथ ['अ]शय्यातरः कदा भवति ?' इति द्वारं निरूपयितुमाह—

**आपुच्छिउं उग्गाहिय, वसहीतो णिग्गतोग्गहे एगे।**
**पढमादि जाव दिवसं, वुत्थे वेंजेजऽहोरत्तं ॥ ३५३६ ॥**

अत्र नैगमनयाश्रितानि बहूनि मतान्तराणि। तत्रैको ब्रूते—सूरिभिः शय्यातरो यदा "उच्छू वोलिंति वई" (गा० १५३९) इत्यादिवचोभिरापृष्टस्तदाऽसावशय्यातरो भवति। अपरः

---

१ °ण्डः, यथा—आ° भा० ॥
२ "कतिविधे त्ति गतम्। इदानीमसेज्जातरो व काधे त्ति—आपुच्छि० गाथा ॥" इति चूर्णौ।
"कइविहे त्ति गयं। असेज्जायरो उ काहे त्ति—आपुच्छिय० गाहा" इति विशेषचूर्णौ ॥
३ °यमुग्गा° ताभा० ॥ ४ वज्जे अहो° तादी० भा० कां० ॥

प्राह—यदा निर्गन्तुकामैः पात्राद्युपकरणमुद्ग्राहितं तदा अशय्यातरः। अन्यो ब्रूते—यदा वसतेर्निर्गता भवन्ति। तदपरो भणति—यदा सागारिकस्यावग्रहाद् निर्गताः। एको ब्रूते—सूर्योद्गमे निर्गतानां प्रथमपौरुष्यामतीतायामशय्यातरः। अन्योऽभिधत्ते—द्वितीयस्यां पौरुष्यां गतायाम्। अपरो ब्रूते—तृतीयस्याम्। तदन्यः प्राह—'यावद् दिवसं' दिवसस्य चतस्रः पौरुष्यः तावतः कालादूर्द्धमशय्यातरः। एते सर्वेऽप्यनादेशाः। सिद्धान्तः पुनरयम्—"वुत्थे वंज्जेज्जऽहोरत्तं"[1] ति यस्यां वसतावुषितास्ततो यस्यां वेलायां निर्गताः तत ऊर्द्ध्वमहोरात्रं यावत् तद्गृहेऽशनादिकं वर्जयेयुः, ततः परं तु कल्पते। आपृष्टादिषु तु सागारिकावग्रहनिर्गतान्तेष्वादेशेषु यदि कथमपि गमनविघ्नमुत्पन्नं ततो भूयोऽपि तस्यामेव वसतौ स्थितेषु कथमशय्यातरो भवितुमर्हति? । ये पुनः प्रथमादिप्रहरविभागेनाशय्यातरमिच्छन्ति तेषां सूर्यास्तमननिर्गतानां रात्रौ प्रथमादिपौरुषीविभागेनाशय्यातरः प्राप्नोति तच्च न युज्यते ॥ ३५३६ ॥ कुतः? इति चेद् उच्यते—

अग्गहणं जेण णिसिं, अणंतरेगंतरं दुहिं च ततो ।
गहणं तु पोरिसीहिं, चोदग! एते अणादेसा ॥ ३५३७ ॥

'येन' हेतुना 'निशि' रजन्यामस्माकं भक्त-पानादेरग्रहणं ततो यत्किञ्चिदनन्तरमेकान्तरद्व्यन्तराभिर्वा पौरुषीभिः शय्यातरपिण्डस्य ग्रहणमिच्छन्ति, हे नोदक! त एते सर्वेऽप्यनादेशाः। आदेशः पुनरयम्—सन्ध्यायां दिवा निर्गतानां रजन्याश्चतुरो यामान् शय्यातरः, ततः परं सूर्योद्गमेऽशय्यातरः ॥ ३५३७ ॥ एवं जघन्यत उक्तम्। उत्कर्षतः पुनरित्थम्—

सूरत्थमणम्मि उ णिग्गयाण दोण्ह रयणीण अट्ठ भवे ।
देवसिय मज्झ चउ दिणणिग्गति वितियम्मि सा वेला ॥ ३५३८ ॥

'सूर्यास्तमनसमये' रात्रौ निर्गतानां तामेव रात्रिमपरं[2] चाहोरात्रं शय्यातरो भवति। ततो द्वयो रजन्योरष्टौ यामाः दैवसिकाश्च रजनीद्वयमध्यवर्तिनश्चत्वारो यामाः एवं द्वादशानां यामानामन्ते उत्कर्षतोऽशय्यातरो भवति, ◁ एष[3] एक आदेशः। द्वितीयः पुनरयम्—▷ "दिणनिग्गएँ बिइयम्मि सा वेल" त्ति सूर्योदये दिवा यदि निर्गतास्तदा द्वितीये दिने तस्यामेव वेलायामशय्यातरः, एवमहोरात्रं वर्जितं भवति ॥ ३५३८ ॥ गतम्[4] 'अशय्यातरो वा कदा?' इति द्वारम्। अथ 'शय्यातरः कस्य परिहर्त्तव्यः?' इति द्वारनिरूपणायाह—

लिंगत्थस्स उ वज्जो, तं परिहरतो व भुंजतो वा वि ।
जुत्तस्स अजुत्तस्स व, रसावणो तत्थ दिट्ठंतो ॥ ३५३९ ॥

'लिङ्गस्थस्य' साधुलिङ्गधारिणः 'तं' शय्यातरपिण्डं परिहरतो वा भुञ्जानस्य वा साधुगुणैर्युक्तस्य वा अयुक्तस्य वा शय्यातरः 'वर्ज्यः' वर्जनीयः। अत्र 'रसापणः' मद्यहट्टो दृष्टान्तः। यथा—महाराष्ट्रदेशे रसापणे मद्यं भवतु वा मा वा तथापि तत्परिज्ञानार्थं तत्र ध्वजो बध्यते, तं ध्वजं दृष्ट्वा सर्वे भिक्षाचरादयः परिहरन्ति। एवमस्माकमपि साधुगुणैर्युक्तोऽयुक्तो वा भवतु

१ वज्जे अहो° ताटी० भा० कां० ॥ २ भा० कां० विनाऽन्यत्र—°तानामेकरात्रि° मो० ले०। °तानामेव रात्रि° ताटी० त० डे० ॥ ३ ◁ ▷ एतदन्तर्गतः पाठः भा० नास्ति ॥ ४ °तम् 'शय्या° भा० कां० विना। "असेजायरे त्ति गयं" इति चूर्णौ ॥

परं रजोहरणध्वजो दृश्यते इति कृत्वा लिङ्गस्थस्यापि शय्यातरः परिह्रियते ॥ ३५३९ ॥

अथ 'के दोषाः ?' इति द्वारमाह—

**तित्थंकरपडिकुट्ठो, आणा अण्णाय उग्गमो ण सुज्झे ।**
**अविमुत्ति अलाघवता, दुल्लभ सेज्जा य वोच्छेदो ॥ ३५४० ॥**

तीर्थकरैः प्रतिकुष्टः—निषिद्धः शय्यातरपिण्डोऽतस्तं गृह्णता तेषामाज्ञा न कृता भवति । "अन्नाय" त्ति 'अज्ञातोञ्छम्' आसन्ननिवासवशाद् ज्ञातस्वरूपतया न शुध्यति । प्रत्यासन्नतया तत्रैव पुनः पुनः भैक्ष-पानादिनिमित्तं प्रविशत उद्गमोऽपि न शुध्यति । 'अविमुक्तिर्नाम' स्वाध्यायश्रवणादिना आवर्जितः शय्यातरो दुग्ध-दध्यादि प्रणीतद्रव्यं ददाति, तद्ग्रहणलोलुपतया तद्गृहं न विमुञ्चति । 'अलाघवता तु' विशिष्टाहारलाभेन उपचितगल-कपोलतया शरीरलाघवं प्रचुरवस्त्रादिलाभेन उपकरणलाघवं च न भवेत् । दुर्लभा च शय्या भवति, येन किल शय्या दत्ता तेनाहाराद्यपि देयमिति भयाद् भूयः शय्यामगारिणो न प्रयच्छन्तीति भावः । 'व्यवच्छेदश्च' विनाशः शय्यायाः क्रियेत, अथवा भक्त-पानादिप्रतिषेध इह व्यवच्छेदशब्देनोच्यते । एष[3] निर्युक्तिगाथासमासार्थः ॥ ३५४० ॥ अथैनामेव प्रतिपदं विवृणोति—

**पुर-पच्छिमवज्जेहिं, अवि कम्मं जिणवरेहिँ लेसेणं ।**
**भुत्तं विदेहएहि य, ण य सागरियस्स पिंडो उ ॥ ३५४१ ॥**

पूर्वस्तीर्थकरः—ऋषभस्वामी पश्चिमः—श्रीमन्महावीरः एतद्वर्जैरजितादिभिर्मध्यमजिनवरैर्विदेहजैश्च तीर्थकरैराधाकर्मापि 'लेशेन' सूत्रादेशतः 'भुक्तं' भोक्तुमनुज्ञातमिति भावः, 'न च' नैव सागारिकस्य पिण्डः । इयमत्र भावना—मध्यमतीर्थकृतां ◅ विदेहतीर्थकृतां ▻ च ये साधवस्तेषां यस्यैव योग्यमाधाकर्म कृतं तस्यैव न कल्पते शेषाणां तु कल्पते इति तैराधाकर्मभोजनमपि कथञ्चिदनुज्ञातम्, न पुनः शय्यातरपिण्डः,

सेज्जायरपिंडम्मी, चाउज्जामे य पुरिसजिट्ठे य ।
किइकम्मस्स य करणे, चत्तारि अवट्ठिया कप्पा ॥ ( पञ्चाश० १७–१० )

इति वचनात् ॥ ३५४१ ॥ ◅ अथाज्ञाद्वारमज्ञातोञ्छद्वारं चाह—▻

**सव्वेसि तेसि आणा, तप्परिहारीण गेण्हता ण कता ।**
**अण्णायं च न जुज्जति, जहिं ठितो गेण्हतो तत्थ ॥ ३५४२ ॥**

सर्वेषामपि 'तेषां' तीर्थकृतां 'तत्परिहारिणां' शय्यातरपिण्डप्रतिषेधकारिणामाज्ञा तत्पिण्डं गृह्णता न कृता भवति । तथा यत्रैव गृहे स्थितस्तत्रैव भिक्षां गृह्णतोऽज्ञातोञ्छं 'न युज्यते' न घटते, न शुध्यतीत्यर्थः, अज्ञातस्य—अविदितस्य यद् उञ्छं—भैक्षग्रहणं तदज्ञातोञ्छमिति व्युत्पत्तेः ॥ ३५४२ ॥ ◅ उद्गमाशुद्धिद्वारमाह—▻

**बाहुल्ला गच्छस्स उ, पढमालिय-पाणगादिकज्जेसु ।**

---

१ °ज्जा विउच्छेदो ताभा० ॥ २ °नकादि° भा० कां० ॥ ३ °ष सङ्ग्रहगा° भा० ॥
४ ◅ ▻ एतदन्तर्गतः पाठः भा० कां० एव वर्त्तते ॥ ५ ◅ ▻ एतदन्तर्गतमवतरणं भा० नास्ति ॥
६ अतः सर्वे° भा० ॥ ७ ◅ ▻ एतदन्तर्गतमवतरणं भा० नास्ति ॥

**सज्झायकरणआउट्टिता करे उग्गमेगतरे ॥ ३५४३ ॥**

गच्छस्य यद् बाहुल्यं—साधूनां प्राचुर्यं तस्माद्धेतोः प्रथमालिका-पानकौषधादिकार्येषु पुनः पुनः प्रविशतां तथा स्वाध्यायश्रवणेन करणेन च—यथोक्तक्रियाकलापानुष्ठानेन आवर्त्तिताः—आवर्जिता उद्गमदोषाणामेकतरान् कुर्युः ॥ ३५४३ ॥ ◁ अविमुक्तिद्वारमाह—▷

**दव्वे भावऽविमुत्ती, दव्वे वीरल्ल ण्हारुबंधणता ।**
**सउणग्गहणे कड्ढण, पइद्ध मुक्को वि आणेइ ॥ ३५४४ ॥**

अविमुक्तिर्द्विधा—द्रव्यतो भावतश्च । द्रव्याविमुक्तौ **'वीरल्लः' ओलायकः पक्षी** दृष्टान्तः । स स्नायुः—तन्त्री तद्बन्धनेन पादे बद्ध्वा यत्र तित्तिरिप्रभृतिकः पक्षी दृश्यते तत्र मुच्यते, ततस्तेन यदा तस्य शकुनकस्य ग्रहणं कृतं स्यात् तदा भूयोऽपि तयैव तन्त्र्या तस्य कर्षणं क्रियते, तत आगतस्य हस्ततले मांसं दीयते, ततो मांसे 'प्रगृद्धः' आसक्तः सन् मुक्तोऽपि स्नायुबन्धनमन्तरेणापि शकुनिमानयति, आनीय च तत्रैवावतिष्ठते ॥ ३५४४ ॥

एषा द्रव्याविमुक्तिः । अथ भावाविमुक्तिमाह—

**भावे उक्कोस-पणीयगेहितो तं कुलं ण छड्डेति ।**
**ण्हाणादी कज्जेसु व, गतो वि दूरं पुणो एति ॥ ३५४५ ॥**

'भावे' भावाविमुक्तिः पुनरियम्—उत्कृष्टद्रव्यं—शाल्योदनादि प्रणीतं—घृतादि तयोर्या गृद्धिः—लौल्यं ततः 'तत् कुलं' शय्यातरसम्बन्धि न परित्यजति । अथवा स्नान-रथयात्रादौ पर्वणि कार्येषु च—कुल-गण-सङ्घप्रयोजनेषु दूरमपि गतो भूयः तत् कुलमागच्छति ॥३५४५॥

अथालाघवतां व्याचष्टे—

**उवहि सरीरमलाघव, देहे णिद्धाइविंचियसरीरो ।**
**संघंसग-सासभया, ण विहरइ विहारकामो वि ॥ ३५४६ ॥**

'अलाघवं' गौरवं तच्च द्विधा—उपधौ शरीरे च । तत्र 'देहे' देहविषयमलाघवमिदम्—स्निग्धं—घृतादि तेन आदिशब्दाद् गुड-शर्करादिमधुरद्रव्यैः प्रतिदिनमभ्यवह्रियमाणैर्बृंहितशरीरः सन् मार्गे गच्छतां शरीरजाड्यसमुत्थो यो गात्रसङ्घर्षो यश्च श्वासः तद्भयाद् विहरणकामोऽपि न विहरति ॥ ३५४६ ॥ अथोपकरणालाघवमाह—

**सागारि-पुत्त-भाउग-णत्तुग दाण अतिखद्ध भारभया ।**
**ण विहरति ओम सावय, णियडाऽगणि भाण एज्ज त्ति ॥ ३५४७ ॥**

सागारिकेण—शय्यातरेण तदीयैश्च पुत्रैर्भ्रातृभिर्नप्तृभिश्च—पौत्रैः कस्यापि साधोरतिखद्धस्य—अतीवप्रभूतस्य कम्बलाद्युपकरणस्य दानमकारि, स च साधुस्तद्भारभयान्न विहरति । अन्यदा च तत्र 'अवमं' दुर्भिक्षं सञ्जातम्, स च तदापि न विहरति । "सावय" त्ति श्रावकेण चिन्तितम्—एष साधुः किमद्यापि न विहरति ? नूनं बहूपकरणप्रतिबद्धोऽयम् । ततस्तेन श्रावकेण तस्य संयतस्य भिक्षाद्यर्थं विनिर्गतस्य सर्वमप्युपकरणं निष्काश्यान्यत्र सङ्गोप्य 'निकृत्या' मायया

---

१ °शन्तः तथा भा० कां० विना ॥ २ ◁ ▷ एतदन्तर्गतमवतरणं भा० नास्ति ॥ ३ °हणाऽऽकड्ढ° भा० ताभा० ॥ ४ °स्य आक° भा० कां० ॥ ५ मांसप्रगृद्धः सन् भा० ॥

तदीय उपाश्रयः सर्वोऽपि "अगणि" त्ति अग्निना प्रदीपितः । ततः समायातः संयतः, दृष्टः प्रतिश्रयो दग्धः, कृतवान् 'हा कष्टम्! हा हा कष्टम्!! बहूपकरणं दग्धम्!!!' इति परिखेदम्। पृष्टश्च श्रावकः—किञ्चिदुपकरणं निष्काशितं न वा? इति। स प्राह—न शक्तं किमपि निष्काशयितुम् परं "भाण" त्ति भाजनद्वयं महता कष्टेन निष्काशितम्। ततः साधुना भणितम्—विहरामि सम्प्रति यस्यां दिशि सुभिक्षम्। श्रावकः प्राह—"एज्ज" त्ति सुभिक्षीभूते भूयोऽप्यागच्छेत्। ततः प्रतिपन्नं साधुना तद्वचनम्। समागतः कालान्तरेण पुनरपि तत्रैवासौ। निवेदितः श्रावकेण यथावस्थितो व्यतिकरः, क्षमयित्वा च दत्तं सर्वमपि तदीयमुपकरणम्। एवमादयो दोषा उपकरणालाघवे भवन्ति ॥ ३५४७ ॥ अथ दुर्लभशय्याद्वारमाह—

**भिक्खा पयरणगहणं, दोगच्चं अण्णआगमे ण देमो।**
**पयरण णत्थि ण कप्पति, असाहु तुच्छे य पण्णवणा ॥ ३५४८ ॥**

कस्यापि श्रेष्ठिनो गृहे पञ्चशतिको गच्छो वर्षासु स्थितः। स च शय्यातरो गृहमानुषाण्यादिशति—यदि साधवो गृहात् तुच्छैर्भाजनैर्निर्गच्छन्ति ततो महदमङ्गलं स्यात्, अतो दिने दिनेऽमीषां प्रथममेव भिक्षा दातव्या। ततस्ते साधवः सर्वेऽपि तस्मिन् गृहे प्रतिदिनं प्रथमतः प्रतरणभिक्षां[1] गृह्णन्ति। ततश्च शय्यातरस्य कालान्तरेण 'दौर्गत्य' दरिद्रता। अन्येषां च साधूनां तत्रागमनम्। ते च तं श्रेष्ठिनं वसतिं याचन्ते। स प्राह—विद्यते वसतिः परं न प्रयच्छामः। साधुभिरुक्तः[2]—किं कारणं न प्रयच्छसि? । स प्राह—'प्रतरणं'[3] प्रथमदातव्यभिक्षारूपं नास्ति। साधवो ब्रुवते—न कल्पतेऽस्माकं प्रतरणं ग्रहीतुम्। स प्रतिब्रूते—'असाधु' अमङ्गलमिदं यद् मम गृहात् तुच्छैर्भाजनैर्निर्गच्छन्ति। ततस्तस्य साधुभिः प्रज्ञापना कृता—आयुष्मन्! इदमेव भवतः परमं मङ्गलं यदेवं साधूनां वसतिरुपयुज्यते, अनया हि दत्तया भवता सर्वमपि भक्त-पानादिकं दत्तमेव भवति। इत्थं प्रज्ञापितः स तेषां वसतिं प्रदत्तवान्। एवं दुर्लभा शय्या भवति ॥ ३५४८ ॥ अथ व्यवच्छेदद्वारमाह—

**थल देउलिया ठाणं, सतिकालं दट्ठु दट्ठु तहिँ गमणं।**
**निग्गए वसहीभंजण, अण्णे उब्भामगाऽऽउट्टा ॥ ३५४९ ॥**

कस्यापि ग्रामस्य मध्ये स्थलम्। तत्र च ग्रामेण मिलित्वा देवकुलिका कारिता। तत्र साधवः स्थिताः। ते च तत्रोच्चतरे देवकुले स्थिताः 'सत्कालं' भिक्षाया देशकालं दृष्ट्वा दृष्ट्वा 'तत्र' तेषु कुलेषु भिक्षार्थं गच्छन्ति, न चैकमपि कुलं तेषां भिक्षां गृह्णतामुद्धरति। एवं च निर्विण्णाः सर्वेऽपि गृहस्थाः। ततो निर्गतेषु साधुषु 'वसतेः' देवकुलिकायास्तैर्भञ्जनम् 'मा अन्योऽप्येवमागत्य स्थास्यति' इति।[4] इतश्चान्यस्मिन्नीदृशे स्थलग्रामेऽन्ये केचन साधवो देवकुलिकायां स्थिताः। ते च भगवन्तो निःस्पृहाः बहिर्ग्रामेषूद्भ्रामकभिक्षाचर्यया गच्छन्ति स्वाध्यायपराश्च तिष्ठन्ति। ततस्ते गृहस्था आवृत्ताः सम्भूय तान् साधून् निमन्त्रयन्ति। साधवो ब्रुवते—बाल-वृद्धादीनां

१ प्रचर° त०। विशेषचूर्णौ 'पतरण' 'पचरण' इति द्वावपि शब्दौ दृश्येते ॥ २ °क्तम्—किं भा० ॥ ३ 'प्रचर° भा० ॥ ४ ताटी० भा० कां० विनाऽन्यत्र—**अन्येऽप्येवमागतास्तापयिष्यन्तीति** मो० ले० डे०। **अन्येऽप्येवमागतास्तापयन्तीति** त० ॥

कार्यं ग्रहीष्यामः । एवं घृतादि दुर्लभद्रव्यमपि सुलभं भवति, न च शय्याया व्यवच्छेदो जायते ॥ ३५४९ ॥ गतं 'दोषा वा के तस्य ?' इति द्वारम् । अथ 'कारणजाते कस्मिन् कल्पते ?' इति द्वारमाह—

**दुविहे गेलन्नम्मी, निमंतणे दव्वदुल्लभे असिवे ।**
**ओमोदरिय पओसे, भए व गहणं अणुण्णायं ॥ ३५५० ॥**

'द्विविधे' आगाढे अनागाढे च ग्लानत्वे १ तथा निमन्त्रणे २ दुर्लभद्रव्ये ३ अशिवे ४ अवमौदर्ये ५ 'प्रद्वेषे वा' राजद्विष्टे ६ 'भये वा' बोधिकस्तेनादिसमुत्थे ७, एवं सप्तसु कारणेषु शय्यातरपिण्डस्य ग्रहणमनुज्ञातम् । एषं **निर्युक्तिगाथार्थः** ॥ ३५५० ॥ साम्प्रतमेनामेव विवृणोति—

**तिपरिरयमणागाढे, आगाढे खिप्पमेव गहणं तु ।**
**कज्जम्मि छंदिया घेच्छिमो त्ति ण य बेंति उ अकप्पं ॥ ३५५१ ॥**

'त्रिपरिरयं' त्रीन् वारान् परिभ्रमणं तदनागाढे ग्लानत्वे कर्त्तव्यम् । यदि तथापि ग्लानप्रायोग्यं न लभ्यते ततः पञ्चकपरिहाण्या मासलघुप्राप्ताः शय्यातरपिण्डं गृह्णन्ति । आगाढे तु ग्लानत्वे क्षिप्रमेव ग्रहणं कार्यम् । तथा शय्यातरेण 'भक्त-पानमस्मद्गृहे गृह्णीत' एवं 'छन्दिताः' निमन्त्रिताः सन्तो भणन्ति—कार्ये समुत्पन्ने ग्रहीष्याम इति । न च ब्रुवते—युष्मदीयं भक्तपानमस्माकं न कल्पते ॥ ३५५१ ॥

**जं वा असहीणं तं, भणंति तं देह तेण णे कज्जं ।**
**णिब्बंधे चेव सइं, घेत्तूण पसंग वारेंति ॥ ३५५२ ॥**

यद् वा द्रव्यं तस्य गृहे 'अस्वाधीनं' नास्तीत्यर्थः तद् 'भणन्ति' याचन्ते इत्यर्थः । यथा—अमुकं द्रव्यं प्रयच्छत तेनास्माकं गुरुतरं कार्यम् । अथ शय्यातरो निर्बन्धम्—अतीवाग्रहं करोति ततः 'सकृद्' एकवारं गृहीत्वा भूयः प्रसङ्गं निवारयन्ति ॥ ३५५२ ॥

**दुल्लभदव्वं व सिया, संभारघयादि घेप्पती तं तु ।**
**ओमऽसिवे पणगादिसु, जतिऊणमसंथरे गहणं ॥ ३५५३ ॥**

दुर्लभद्रव्यं वा सम्भारघृतादिकं शय्यातरगृहे स्यात्, सम्भारः—बहुद्रव्यसंयोगस्तत्प्रधानं घृतं सम्भारघृतम्, आदिशब्दात् शतपाकतैलादि, तच्च ग्लानादिनिमित्तं शय्यातरगृहे गृह्यते । अवमौदर्या-ऽशिवयोरसंस्तरणे पञ्चकहान्या यतित्वा मासलघुप्राप्ताः शय्यातरकुले ग्रहणं कुर्वन्ति ॥ ३५५३ ॥

**उवसमणट्ठ पदुट्ठे, सत्थो वा जा ण लब्भते ताव ।**
**अच्छंता पच्छण्णं, गेण्हंति भए वि एमेव ॥ ३५५४ ॥**

प्रद्विष्टस्य राज्ञ उपशमनार्थं तिष्ठन्तः, यद्वा राज्ञा निर्विषया आज्ञप्ताः सन्तो यावत् तत्र सार्थो न लभ्यते तावत् प्रच्छन्नं तिष्ठन्तः शय्यातरकुले भक्त-पानं गृह्णन्ति, मा पर्यटतो राजा वा राजपुरुषा वा द्राक्षन्निति कृत्वा । भयं—बोधिकस्तेनादिप्रभवं तत्र बहिर्ग्रामेषु भिक्षां गन्तुं न शक्यते स्वग्रामे च न लभ्यते अतः 'एवमेव' शय्यातरकुले गृह्णन्ति ॥ ३५५४ ॥

---

१ **एषा निर्युक्तिगाथा** ताटी॰ भा॰ कां॰ ॥

अथ 'कया यतनया ग्रहीतव्यः ?' इति द्वारमाह—

**तिक्खुत्तो सक्खेत्ते, चउदिसिं मग्गिऊण कडयोगी ।**
**दव्वस्स य दुल्लभया, सागारियसेवणा दव्वे ॥ ३५५५ ॥**

'स्वक्षेत्रे' सक्रोशयोजनाभ्यन्तरे स्वग्राम-परग्रामयोः 'त्रिकृत्वः' त्रीन् वारान् चतसृष्वपि दिक्षु शुद्धं भैक्षं दुर्लभद्रव्यं वा मार्गयित्वा यदि न प्राप्नोति ततः 'कृतयोगी' गीतार्थः 'द्रव्यस्य' शुद्धभक्त-पानादेर्दुर्लभतां मत्वा सागारिकद्रव्यस्य—शय्यातर◁ पिण्डस्य प्रतिसेवनां करोति ॥ ३५५५ ॥ उक्त एकशय्यातर▷ विषयो विधिः । अथानेकशय्यातरविषयं विधिमाह—

**णेगेसु पिया-पुत्ता, सवत्ति वणिए घडा वए चेव ।**
**एएसिं णाणत्तं, वोच्छामि अहाणुपुव्वीए ॥ ३५५६ ॥**

अनेकेषु शय्यातरेष्वमी भेदाः—पिता-पुत्रौ सपत्न्यो वा वणिजो वा घटा वा–गोष्ठी व्रजो वा–गोकुलम् । एतेषां द्वाराणां 'नानात्वं' विभागं 'वक्ष्यामि' प्ररूपयिष्यामि यथानुपूर्व्या ॥ ३५५६ ॥

प्रतिज्ञातमेव निर्वाहयति—

**पिर्त-पुत्त थेरए या, अप्पभु दोसा य तम्मि उ पउत्थे ।**
**जेट्ठातिअणुण्णवणा, पाहुणए जं विधिग्गहणं ॥ ३५५७ ॥**

यदि पिता पुत्रश्च द्वावपि प्रभू तत उभावपि अनुज्ञापयितव्यौ । अथ पिता स्थविर इति कृत्वा चशब्दात् पुत्रोऽप्यतिबाल इति कृत्वा यद्यप्रभुस्तदा नानुज्ञापनीयः । दोषाश्चानुज्ञापनायां निष्काशनादयः प्रभुकृता भवन्ति । अथ स प्रभुः प्रोषितस्ततस्तस्यैव यो ज्येष्ठः पुत्र आदिशब्दादनुज्येष्ठादयो वा तेषामनुज्ञापना कर्त्तव्या, प्राघुणको वा यस्तस्याभ्यर्हितः सोऽनुज्ञापनीयः । सर्वत्र यद् विधिना ग्रहणं तदेवानुज्ञातं भगवद्भिर्नाविधिनेति ॥ ३५५७ ॥ अथैनामेव व्याख्यानयति—

**दुप्पभिइ पिया-पुत्ता, जहिँ होंति पभू ततो भणइ सव्वे ।**
**णातिक्कमंति जं वा, अपभुं व पभुं व तं पुव्वं ॥ ३५५८ ॥**

द्विप्रभृतयोऽनियताः पितापुत्रा यत्र प्रभवो भवन्ति तत्र सर्वानपि तान् मिलितान् 'भणति' अनुज्ञापयति । यं वा प्रभुमप्रभुं वा 'नातिक्रामन्ति' नाप्रमाणयन्ति तं पूर्वमनुज्ञापयति ॥ ३५५८ ॥

**अप्पभु लहुओ दिय णिसि, पभुणिच्छूढे विणास गरहा य ।**
**असहीणम्मि पभुम्मि उ, सहीणजेट्ठादऽणुण्णवणा ॥ ३५५९ ॥**

यद्यप्रभुमनुज्ञापयन्ति ततो मासलघु । प्रभुश्च समागतो दिवा निष्काशयति चतुर्लघु । निशायां निष्काशयति चतुर्गुरु । रात्रौ निष्काशिताः स्तेन-श्वापदादिभिर्विनाशं प्राप्नुवन्ति । अन्यत्र वसतिमलभमाना लोकतो गर्हामासादयन्ति, यथा—किं यूयं शोभनैः कर्मभिर्निर्धाटिताः ? वयमपि न प्रयच्छाम इति । अथ 'प्रभुः' पिता न स्वाधीनः किन्तु प्रोषितः ततो यः स्वाधीनः ज्येष्ठादिः पुत्र आदिशब्दादनुज्येष्ठादिकोऽपि यः प्रभुः सोऽनुज्ञापयितव्यः । अथ सर्वेऽपि प्रभवः ततो युगपत् ते सर्वेऽप्यनुज्ञापनीयाः ॥ ३५५९ ॥

---

१ ◁ ▷ एतच्चिह्नान्तर्गतः पाठः कां० एव वर्तते ॥
२ "पियपुत्त० गाहा पुरातना" इति विशेषचूर्णौ ॥

**पाहुणयं च पउत्थे, भणंति मेत्तं व णातगं वा से ।**
**तं पि य आगतमेत्तं, भणंति अमुएण णे दिण्णं ॥ ३५६० ॥**

प्रभौ प्रोषिते सति प्राघुणको यस्तस्याभ्यर्हितः समायातः तं वा मित्रं वा तदीयं 'ज्ञातकं वा' स्वजनं 'भणन्ति' अनुज्ञापयन्ति । 'तं च' प्रभुमागतमात्रमेव भणन्ति—'अमुकेन' युष्मन्मित्रादिना अस्माकमिदं गृहं प्रदत्तम् । स चाभीष्टनामग्रहणे कृते न निर्घाटयति ॥ ३५६० ॥

अप्रभुविषयं विधिमाह—

**अप्पभुणा उ विदिण्णे, भणंति अच्छामु जा पभू एती ।**
**पत्ते उ तस्स कहणं, सो उ पमाणं ण ते इतरे ॥ ३५६१ ॥**

अप्रभुरनुज्ञापितो भणति—अहं न जानामि । ततः साधवो भणन्ति—यावत् प्रभुरागच्छति तावद् वयं तिष्ठामः । एवमनुज्ञापितेनाप्रभुणा वितीर्णे प्रतिश्रये यदा प्रभुः प्राप्तो भवति तदा तस्याग्रे यथाभूतं कथयितव्यम् । कथिते च स ददाति वा निष्काशयति वा स एव तत्र प्रमाणम्, न 'ते' पूर्वानुज्ञापिताः 'इतरे' अप्रभवः । एवमुक्तेन विधिना यद् वसतेर्ग्रहणं तदेवानुज्ञातमिति ॥ ३५६१ ॥

**इय एसाऽणुण्णवणाजतणा पिंडो पभुस्स ऊ वज्जो ।**
**सेसाणं तु अपिंडो, सो वि य वज्जो दुविहदोसा ॥ ३५६२ ॥**

'इति' एवमुक्तप्रकारेण एषा प्रतिश्रयानुज्ञापनायां यतना प्रोक्ता । अथ शय्यातरपिण्डपरिहरणे यतनाऽभिधीयते—यः प्रभुः स शय्यातर इति कृत्वा तद्गृहे पिण्डो वर्ज्यः । 'शेषाणाम्' अप्रभूणाम् 'अपिण्डः' शय्यातरपिण्डो न भवति, परं सोऽपि 'द्विविधदोषात्' भद्रक-प्रान्तकृतदोषपरिहारार्थं वर्जनीयः ॥ ३५६२ ॥ गतं पितापुत्रद्वारम् । अथ सपत्नीद्वारम्—

**एगे महाणसम्मी, एकतो उक्खित्ते सेसपडिणीए ।**
**जेट्ठाऍ अणुण्णवणा, पउत्थे सुय जेट्ठ जाव पभू ॥ ३५६३ ॥**

शय्यातरे प्रोषिते सति यास्तदीयाः पत्न्यस्तासां यद् भोजनं तत्र चतुर्भङ्गी—एकत्र राद्धमेकत्र भुक्तं १ एकत्र राद्धं विष्वग् भुक्तं २ विष्वग् राद्धमेकत्र भुक्तं ३ विष्वग् राद्धं विष्वग् भुक्तम् ४ । तत्र "एगे महाणसम्मी एगतो" त्ति एकस्मिन् महानसे राद्धमेकतो भुक्तमिति प्रथमभङ्गो गृहीतः । "उक्खित्तं" ति एकत इति पदमनुवर्तते, एकतः—एकस्मिन् स्थाने 'उत्क्षिप्तं' भोजनभूमिकां नीतं भुक्तमिति यावत् अर्थादापन्नं विष्वग् राद्धम्, एतेन तृतीयभङ्ग उपात्तः । द्वितीय-चतुर्थभङ्गौ पुनरवर्जनीयाविति कृत्वा न गृहीतौ । (ग्रन्थाग्रम्–२४४२०) "सेसपडिणीए" त्ति यद् एकत्र राद्धमेकत्र भुक्तं तत्र भुक्तशेषं यद्यपि शेषसपत्नीभिः स्वगृहं प्रत्यानीतं तथापि भद्रक-प्रान्तदोषपरिहारार्थं वर्जनीयम् । तथा प्रभौ प्रोषिते तदीया ज्येष्ठभार्या वसतिमनुज्ञाप्यते । अथ सा न सुतमाता ततोऽनुज्येष्ठाऽपि या पुत्रवती । द्वयोर्वा पुत्रवत्योर्या ज्येष्ठपुत्रा, यत्पुत्रो वा प्रभुः, या वा स्वयं गृहे 'प्रभुः' प्रमाणभूता सा अनुज्ञापनीया । एषा **चिरन्तनगाथा** ॥ ३५६३ ॥ अथैनामेव विवृणोति—

१ ग्रन्थाग्रम्–९००० त० डे० ॥

**तम्मि असाहीणे जेट्ठपुत्तमाया व जा व से इट्ठा ।**
**अह पुत्तमाय सव्वा, जीसे जेट्ठो पभू वा वि ॥ ३५६४ ॥**

'तस्मिन्' गृहस्वामिनि 'अस्वाधीने' असन्निहिते ज्येष्ठा भार्या पुत्रमाता वा या वा "से" तस्य गृहपतेः 'इष्टा' वल्लभा सा वसतिमनुज्ञापनीया । अथ सर्वा अपि पुत्रमातरोऽभीष्टाश्च ततो यस्याः पुत्रो ज्येष्ठस्तामनुज्ञापयन्ति । अथ ज्येष्ठः पुत्रो न प्रभुः ततः कनिष्ठोऽपि यस्याः पुत्रः प्रभुः सा अनुज्ञापयितव्या ॥ ३५६४ ॥ पिण्डग्रहणे विधिमाह—

**असहीणे पभुपिंडं, वज्जंती सेसए तु भद्दादी ।**
**साहीणे जहिँ भुंजइ, सेसे वि उ भद्द-पंतेहिं ॥ ३५६५ ॥**

अस्वाधीने गृहस्वामिनि या तत्पत्नी प्रभुस्तस्याः पिण्डं साधवो वर्जयन्ति । शेषसपत्नीगृहेषु न शय्यातरपिण्डः परं भद्रक-प्रान्तकृता दोषा भवन्ति अतस्तासामपि पिण्डः परिहर्तव्यः । अथ स्वाधीनः शय्यातरः ततो यस्या गृहे भुङ्क्ते तत्र शय्यातरपिण्ड इति कृत्वा वर्जयन्ति । शेषाण्यपि सपत्नीगृहाणि भद्रक-प्रान्तदोषपरिहारार्थं वर्जयन्ति ॥ ३५६५ ॥

**एगत्थ रंधणे भुंजणे य वज्जेंति भुत्तसेसं पि ।**
**एमेव वीसु रद्धे, भुंजंति जहिं तु एगत्था ॥ ३५६६ ॥**

एकत्र राद्धमेकत्र भुक्तमित्यादिचतुर्भङ्ग्यां यत्रैकत्र रन्धनं भोजनं वा तत्र भुक्तशेषमपि वर्जयन्ति, प्रथमभङ्गे इत्यर्थः । एवमेव विष्वग् राद्धेऽपि यत्रैकत्र भुञ्जते तत्र भुक्तशेषमपि न गृह्णन्ति, तृतीयभङ्गे इति भावः ॥ ३५६६ ॥

एवमस्वाधीनभर्तृकाणां विधिरुक्तः । अथ स्वाधीनभर्तृकाणां यो विधिस्तमाह—

**नियतं व अणियतं वा, जहिं तरो भुंजती तु तं वज्जं ।**
**सेसासु वि ण य गिण्हति, मा छोभगमादि भद्दाई ॥ ३५६७ ॥**

नियतं वा अनियतं वा यत्र शय्यातरो भुङ्क्ते तद् गृहं वर्जनीयम् । नियतं नाम—यदेकस्या एव गृहे प्रतिदिनं भुङ्क्ते । अनियतं तु—वारकेण सर्वासामपि गृहे भुङ्क्ते । शेषपत्नीगृहेषु यद्यपि शय्यातरपिण्डो न भवति तथापि न गृह्णाति, मा भद्रक-प्रान्तकृता छोभकादयो दोषा भवेयुः । छोभकः—प्रक्षेपकः तं शेषपत्नीगृहे भद्रकः शय्यातरः कुर्यात्, 'मम गृहे तावदमी न गृह्णन्ति अत एवमपि दत्त्वा पुण्यमुपार्जयामि' इति बुद्ध्या । यस्तु प्रान्तः स द्वेषं यायात्—अहो ! दुर्दृष्टधर्माणोऽमी, यदि मदीयगृहे न कल्पते तत एतासां मद्दत्तोपजीविनीनां गृहे कथं कल्पते ? इति; प्रद्विष्टश्च प्रतिश्रयान्निष्काशयेत् ॥ ३५६७ ॥ गतं सपत्नीद्वारम् । अथ वणिग्द्वारमाह—

**दोसु वि अव्वोच्छिण्णे, सव्वं जंतम्मि जं च पाउग्गं ।**
**खंधे संखडि अडवी, असती य घरम्मि सो चेव ॥ ३५६८ ॥**

कोऽपि शय्यातरो देशान्तरं गन्तुकामो नगरादेर्बहिः स्थितो वर्त्तते, तस्य च 'द्वयोरपि गृहयोः' अन्तर्गृहाद् बहिर्गृहे बहिर्गृहाच्चाभ्यन्तरगृहे भक्तादिकमव्यवच्छिन्नं यद् आनीयते तन्न कल्पते । अथासौ शय्यातरस्ततः स्थानात् प्रस्थितः ततः 'याति' गच्छति तस्मिन् 'सर्वं'

तद्दिवसनीतमन्यदिवसनीतं च भक्त-पानं न कल्पते ।[1] सर्वमित्युक्ते मा भूदतिप्रसङ्ग इत्याशङ्क्याह—यच्च 'प्रायोग्यं' यतिजनयोग्यम्, एषणीयं प्रासुकं चेत्यर्थः, "खंधे" त्ति स्कन्धप्रदेशे मोट्टां कृत्वा बहिर्ग्रामेषु व्यवहरन् शय्यातरः साधूनां दधि-दुग्धादिकं दद्यात्, "संखडि" त्ति सङ्खडीं कुर्वन् साधूनामपि दद्यात्, "अडवि" त्ति अटवीं वा काष्ठच्छेदनादिनिमित्तं गृहीतशम्बलो गच्छन् साधून् दृष्ट्वा तन्मध्यात् तेषामपि दद्यात्, एतेषु त्रिष्वपि न कल्पते । "असई य घरम्मि सो चेव" त्ति यदि शय्यातरः सपुत्र-पशु-बान्धवो गृहे नास्ति किन्तु देशान्तरं प्रोषितः तदा देशान्तरस्थितोऽपि स एव शय्यातरो नान्य इति **निर्युक्तिगाथा**समासार्थः ॥ ३५६८ ॥

अथैनामेव विवरीषुराह—

**निग्गमगाइ बहि ठिए, अंतो खेत्तस्स वज्जए सव्वं ।**
**बाहिं तद्दिणणीए, सेसेसु पसंगदोसेण ॥ ३५६९ ॥**

शय्यातरो वाणिज्येन देशान्तरं गन्तुकामो निर्गमकः-प्रस्थानं स शुभमुहूर्ते क्रियते इत्यादिकारणेन नगरादेर्बहिर्गत्वा सक्रोशयोजनक्षेत्रस्याभ्यन्तरे बहिर्वा स्थितो भवेत् । यदि 'अन्तः' क्षेत्राभ्यन्तरे स्थितः तदा 'सर्वं' तद्दिवसा-ऽन्यदिवसनीतं शय्यातरपिण्ड इति कृत्वा वर्जयेत् । अथासौ क्षेत्राद् बहिः स्थितस्ततस्तद्दिवसनीतं शय्यातरपिण्डः, शेषदिवसनीतं तु यत् परिवासितं यद् वा तत्रैवोपस्कृतं तन्न शय्यातरपिण्डः, परं तदपि 'प्रसङ्गदोषेण' 'मा भद्रक-प्रान्तकृतदोषाणां प्रसङ्गो भवेत्' इति कृत्वा न ग्रहीतव्यम् ॥ ३५६९ ॥

**ठितो जया खेत्तबहिं सगारो, भत्तादियं तस्स दिणे दिणे य ।**
**अच्छिण्णमाणिज्जति णिज्जती य, गिहा तदा होति तहिं वि वज्जे ॥ ३५७० ॥**

यदा सागारिकः क्षेत्राद् बहिः स्थितस्तदा तस्य भक्तादिकमव्यवच्छिन्नं दिने दिने गृहाद् बहिरानीयते बहिःस्थानाच्च गृहं नीयते तत् सर्वमपि तत्र स्थितस्य तस्य वर्जयेत् ॥ ३५७० ॥

**बाहिं ठिय पठियस्स उ, सयं व संपत्थिया उ गेण्हंति ।**
**तत्थ उ भद्दगदोसा, ण होंति ण य पंतदोसा उ ॥ ३५७१ ॥**

शय्यातरः क्षेत्राद् बहिः स्थितो यस्यां वेलायामग्रतो गन्तुं प्रस्थितः, स्वयं वा साधवः पूर्णे मासकल्पे सम्प्रस्थिताः तदा तद्दिवसा-ऽन्यदिवसानीतं सर्वमपि प्रायोग्यं भक्त-पानं गृह्णन्ति । कुतः ? इत्याह—'तत्र' तस्यां वेलायां गृह्यमाणे भद्रकदोषाः प्रान्तदोषाश्च न भवन्ति, पुनर्ग्रहणाभावादिति भावः ॥ ३५७१ ॥ अथ स्कन्धपदं सङ्खडिपदमडवीपदं च व्याख्याति—

**अंतो बहि कच्छउडियादि ववहरंते पसंगदोसा उ ।**
**देउल-जण्णगमादी, कट्ठादऽडविं व वच्चंते ॥ ३५७२ ॥**

क्षेत्रस्यान्तर्बहिर्वा शय्यातरः 'कक्षापुटिकादिः' कक्षाप्रदेशे पुटा यस्य स कक्षापुटिकः—गृहीतोभयमोट्टाक इत्यर्थः, आदिशब्दात् कौतुपिकादिर्वा बहिर्ग्रामेषु व्यवहरन् साधूनां दधि-दुग्धादिकं दापयति । तत्र क्षेत्रस्यान्तस्तद्दिननीतमन्यदिननीतं च शय्यातरपिण्डः । बहिः

१ अत्रान्तरे ग्रन्थाग्रम् ८५०० इति मो० ले० ॥ २ इति सङ्ग्रहगाथा° भा० । "दोसु वि अव्वोच्छिण्णे० गाहा पुरातना" इति विशेषचूर्णौ ॥

पुनस्तद्दिवसनीतं शय्यातरपिण्डः, शेषदिवसनीतं न शय्यातरपिण्डः, परं भूयः प्रसङ्गदोषान्न गृह्यते । एवं देवकुल-तडाग-यज्ञादिकां सङ्खडीं कुर्वता काष्ठादिनिमित्तं च शम्बलं गृहीत्वाऽटवीं व्रजता क्षेत्रान्तर्दीयमानं शय्यातरपिण्डः । क्षेत्रबहिस्तद्दिवसनीतं शय्यातरपिण्डः, न द्वितीयादि-दिवसनीतम्, परं तदपि न ग्रहीतव्यम्, मा भूयः सङ्खडिकरणमटवीगमनं वा साधूनां दानार्थं कार्षीदिति कृत्वा ॥ ३५७२ ॥ अथ 'गृहे असन् स एव शय्यातरः' इति पदं व्याचष्टे—

**मुत्तूण गेहं तु सपुत्त-दारो, वाणिज्जमादी जति कारणेहिं ।**
**सयं व अण्णं व वएज्ज देसं, सेज्जातरो तत्थ स एव होति ॥ ३५७३ ॥**

'मुक्त्वा' परित्यज्य गेहं सार्धूनर्पयित्वेत्यर्थः सपुत्र-दारः शय्यातरो वाणिज्यादिभिः कारणैर्यदि स्वकमन्यं वा देशं व्रजति तत्रापि स एव शय्यातरो भवति, न पुनर्दूरदेशान्तरस्थितत्वात् तस्य शय्यातरत्वमपगच्छतीति ॥ ३५७३ ॥ गतं वणिग्द्वारम् । घटाद्वारमाह—

**महतर अणुमहतरए, ललियासण कडुअ दंडपतिए य ।**
**एतेहिँ परिग्गहिया, होंति घडातो तदा काले ॥ ३५७४ ॥**

महत्तरोऽनुमहत्तरको ललितासनिकः कटुको दण्डपतिकश्चेति, एतैः पञ्चभिः परिगृहीतास्तदा पूर्वकाले 'घटाः' गोष्ठ्यः 'भवन्ति' बभूवुरित्यर्थः ॥ ३५७४ ॥

अथामूनेव महत्तरादीन् व्याख्यानयति—

**सव्वत्थ पुच्छणिज्जो, तु महतरो जेट्ठमासण धुरे य ।**
**तहियं तु असण्णिहिए, अणुमहतरतो धुरे ठाति ॥ ३५७५ ॥**

यः 'सर्वत्र' सर्वेषु गोष्ठिकार्येषूत्पद्यमानेषु सर्वैरपि गोष्ठिपुरुषैः प्रच्छनीयः, यस्य च ज्येष्ठं बृहत्तरमासनम्, 'धुरि च' सर्वेषामादौ स्थाप्यते स महत्तरः । ततः 'तस्मिन्' मूलमहत्तरेऽसन्निहिते यस्तत्र सर्वैरपि प्रच्छनीयः 'धुरि च' प्रथमं तिष्ठति सोऽनुमहत्तरः ॥ ३५७५ ॥

**भोयणमासणमिट्ठं, ललिए परिवेसिया दुगुणभागो ।**
**कडुओ उ दंडकारी, दंडपती उग्गमे तं तु ॥ ३५७६ ॥**

यस्य भोजनमासनं च 'इष्टम्' मनोभिरुचितं क्रियते, परिवेषिका च स्त्री तस्याभीष्टा क्रियते, इष्टभोजनस्य द्विगुणो भागो दीयते स ललितमशनमासनं वाऽस्येति व्युत्पत्त्या ललिताशनिको ललितासनिको वा । अपराधापन्नस्य गोष्ठिकस्य यो दण्डपरिच्छेदकारी स कटुको भण्यते । यः पुनस्तं दण्डमुद्गमयति स दण्डपतिः ॥ ३५७६ ॥

एतेषां महत्तरादीनां यद् देवकुल-सभादिकं तस्य कथमनुज्ञापना विधेया ? इत्याह—

**उल्लोमाऽणुण्णवणा, अप्पभुदोसा य एकओ पढमं ।**
**जेट्ठादिअणुण्णवणा, पाहुणए जं विहिग्गहणं ॥ ३५७७ ॥**

महत्तरादिक्रममुल्लङ्घ्य यदि उल्लोमं-प्रतीपक्रमेणानुज्ञापनां करोति तदा मासलघु, 'अप्रभुदोषाश्च' निष्काशनादयो भवेयुः, अतः सर्वेऽप्येकतो मिलिताः प्रथममनुज्ञापनीयाः । अथ सर्वे मिलिता नावाप्यन्ते ततो ज्येष्ठमहत्तरस्य, तदभावे यथाक्रममनुमहत्तरादीनामनुज्ञापना

१ °धूनामर्प° भा० मो० ले० ॥

विधेया । अथ महत्तरादीनामेकोऽपि गृहे न प्राप्यते ततो यस्तेषामभ्यर्हितः प्राघुणकस्तमनुज्ञापयन्ति । एवंविधेन विधिना यदुपाश्रयस्य ग्रहणं तदेवानुज्ञातम्, नाविधिग्रहणम् ॥ ३५७७ ॥

अमुमेवार्थं स्फुटतरमाह—

**उल्लोम लहू दिय णिसि, तेणेक्कहिँ पिंडिए अणुण्णवणा ।**
**असहीणे जेट्ठादि व, जइ व समाणा महतरं वा ॥ ३५७८ ॥**

यदि 'उल्लोमं' महत्तरादिक्रमव्यत्यासेनानुज्ञापयन्ति तदा मासलघु । तेनैकत्र 'पिण्डितानां' मिलितानां पञ्चानामप्यनुज्ञापना कर्त्तव्या । अथ सर्वेऽपि मिलिता अस्वाधीनाः—न प्राप्यन्ते इत्यर्थः ततो ज्येष्ठ-महत्तरादिगृहेषु गत्वा अनुज्ञापना विधेया । 'यति वा' यावतः त्रिप्रभृतीन् तत्र सतः—स्वाधीनान् पश्यन्ति तावतामनुज्ञापनां कुर्वन्ति । महत्तरं वा एकमप्यनुज्ञापयन्ति, तस्य प्रमाणभूततया सर्वेषामनतिक्रमणीयत्वात् ॥ ३५७८ ॥ गतं घटाद्वारम्, व्रजद्वारमाह—

**बाहिँ दोहणवाडग, दुद्ध-दही-सप्पि-तक्क-णवणीते ।**
**आसण्णम्मि ण कप्पति, पंच पए उप्परिं वोच्छं ॥ ३५७९ ॥**

कस्यापि शय्यातरस्य सम्बन्धी ग्रामाद् बहिर्गवां दोहनवाटको भवेत्, तस्मिन् दुग्ध-दधि-सर्पिस्तक्र-नवनीताख्यानि पञ्च 'पदानि' द्रव्याणि भवन्ति । एतच्च द्रव्यपञ्चकम् 'आसन्ने' क्षेत्राभ्यन्तरे दीयमानं न कल्पते, शय्यातरपिण्डत्वात् । अथैतानि दुग्धादीनि क्षेत्रस्य 'उपरि' बहिर्वर्त्तन्ते ततस्तद्विषयं ग्रहणविधिमहं वक्ष्यामि ॥ ३५७९ ॥ प्रतिज्ञातमेव निर्वाहयति—

**निज्जंतं मोत्तूणं, वारग भति दिवसए भवे गहणं ।**
**छिण्णं भतीय कप्पति, असती य घरम्मि सो चेव ॥ ३५८० ॥**

गोकुलाद् दुग्धादिपञ्चकं शय्यातरगृहे यद् नीयते स शय्यातरपिण्डो भवति, अतस्तद् दुग्धादिकं नीयमानं मुक्त्वा यदन्यत् तत्रैव गोकुले परिभुज्यते तन्न भवति शय्यातरपिण्डः, परं तदपि भद्रक-प्रान्तदोषपरिहारार्थं न गृह्यते । यस्मिन् पुनर्दिवसे 'भृतकस्य' गोपालस्य वारकस्तस्मिन् दुग्धादिकं शय्यातरपिण्डो न भवति, परं शय्यातरस्यापश्यतो ग्रहणं भवेद् न पश्यतः । तथा भृतिर्नाम—गोपालकस्य दुग्धचतुर्थभागादि परिभाषिता दिवसदैवसिकी वृत्तिः तया 'छिन्नं' विभक्तं यद् दुग्धादिकं तद् गोपालसत्कमिति कृत्वा कल्पते ग्रहीतुं यदि शय्यातरो न पश्यति । तथा यदि साधूनां शय्यां समर्प्य शय्यातरः सपुत्र-दारो व्रजिकायां गच्छेत् ततो गृहेऽविद्यमानोऽपि स एव शय्यातरो भवति ॥ ३५८० ॥ अथास्या एव विषमपदानि विवृणोति—

**बाहिरखेत्ते छिण्णे, वारगदिवसे भतीय छिण्णे य ।**
**सो उण सागरिपिंडो, वज्जो पुण दिट्ठि भद्दादि ॥ ३५८१ ॥**

सक्रोशयोजनक्षेत्रस्य बहिर्यश्छिन्नो विभागः शय्यातरगृहे न नीयते, गोपालकवारकदिवसे वा यः सर्वोऽपि दोहो गोपसत्कः, प्रतिदिवसलभ्यो वा भृत्या छिन्नो यो दुग्धचतुर्थभागादिरूपो विभागः स एष सर्वोऽपि सागारिकपिण्डो न भवति, परं 'भद्रक-प्रान्तकृता दोषा दृष्टे

१ अत्र "दिय णिसि" त्ति पदं वृत्तिकृता नास्ति विवृतम् । "जं दिया वा राओ वा णिच्छुभिहिति" इति विशेषचूर्णिकृता विवृतम् ॥ २ सारियपिंडो ताभा० ॥

सति मा भूवन्' इति कृत्वा शय्यातरस्य पश्यतः सोऽपि वर्जनीयः ॥ ३५८१ ॥ अथ यदुक्तं सूत्रे—"एगं तत्थ कप्पागं ठवइत्ता अवसेसे निव्विसिज्जा" तदेतद् विभावयिषुराह—

**एगं ठवें णिव्विसए, दोसा पुण भद्दए य पंते य ।**
**णिस्साए वा छुभणं, विणास गरहं व पावंति ॥ ३५८२ ॥**

यद्यनेकेषु शय्यातरेषु निष्कारणे एकं सागारिकं स्थापयन्ति शेषान् 'निर्विशन्ति' उपभुञ्जते ततो भद्रक-प्रान्तविषया दोषा भवन्ति । भद्रको निर्विश्यमानशय्यातरस्य निश्रया तदीय-भक्त-पानमध्ये प्रक्षेपं कुर्यात्, 'मम गृहे तावदमी न गृह्णन्ति अतो मदीयमिदं भवद्भिः संयतानां दातव्यम्' इति कृत्वा । यस्तु प्रान्तः स एक एव स्थाप्यमानः प्रद्वेषं यायात्, प्रद्विष्टश्च वसते-र्निष्काशनं कुर्यात्, निष्काशिताश्च स्तेन-श्वापदादिभिर्विनाशं लोकाद् वा गर्हामासादयन्ति । कारणे पुनरेकमपि स्थापयन्तो निर्दोषाः ॥ ३५८२ ॥ कथम्? इत्याह—

**सड्ढेहि वा वि भणिया, एग ठवेत्ताण णिव्विसे सेसे ।**
**गणदेउलमादीसु व, दुक्खं खु विवज्जिउं बहुगा ॥ ३५८३ ॥**

वाशब्द उत्सर्गपदे तावन्न कल्पते एकः सागारिकः स्थापयितुम्, द्वितीयपदे तु कल्पते-ऽपीत्यस्यार्थस्य सूचनार्थः । ये श्राद्धाः—साधुसामाचारीकोविदास्तैः साधवो भणिताः—आर्याः! एकं शय्यातरं स्थापयित्वा शेषान् निर्विशत, मा सर्वानपि परिहरत । एवमुक्ता एकं स्थापयित्वा शेषान् निर्विशन्ति । अथवा गणस्य—बहुजनसमूहस्य सामान्ये देवकुल-सभादौ स्थिता अनुक्ता अप्येकं स्थापयित्वा शेषान् निर्विशन्ति । कुतः? इत्याह—'दुःखं' दुष्करं तत्र बहून् वर्जयितुम् ॥ ३५८३ ॥

**गिण्हंति वारएणं, अणुग्गहत्थीसु जह रुई तेसिं ।**
**पक्कण्णपरीमाणं, संतमसंतेयरे दव्वे ॥ ३५८४ ॥**

यद्वा ते सर्वेऽपि शय्यातरा अनुग्रहार्थिनः ततो यथा तेषां रुचिरुपजायते तथा वारकेण गृह्णन्ति । तत्र च पक्के—उपस्कृते अन्ने परिमाणं ज्ञातव्यम्—किं परिमितानामुपस्क्रियते? उतापरिमितानाम्? इति । तदपि द्रव्यं तस्य गृहे तत्र देशे वा 'सद्' विद्यमानम्? उत 'असद्' अविद्यमानम्? । यदि पूर्वपरिणामेन सद् द्रव्यमुपस्कुर्वन्ति तदा कल्पते, अन्यथा भजनीयम् । एवं तस्य शय्यातरस्य द्रव्ये सम्यगुपयोगो दातव्यः ॥ ३५८४ ॥

सूत्रम्—

**नो कप्पइ निग्गंथाण वा निग्गंथीण वा सागारियपिंडं बहिया अनीहडं असंसट्ठं वा संसट्ठं वा पडिग्गाहित्तए १४ ॥**

अथास्य सम्बन्धमाह—

---

१ दुःखतरं कां० ॥

**अंतो नूण न कप्पइ, कप्पइ णिक्खामिओ हु मा एवं ।**
**पत्तेय विमिस्सं वा, पिंडं गेण्हेज्जऽतो सुत्तं ॥ ३५८५ ॥**

नूनम् 'अन्तः' गृहाभ्यन्तरे शय्यातरपिण्डो न कल्पते, गृहाद् बहिर्निष्कामितस्तु कल्पते। एवं विचिन्त्य मा 'प्रत्येकम्' असंसृष्टं 'विमिश्रं वा' संसृष्टं पिण्डं गृह्णीयात्, अत एतत् सूत्रमारभ्यते। वक्ष्यमाणसूत्रद्वयस्याप्ययमेव सम्बन्धो द्रष्टव्यः ॥ ३५८५ ॥

अनेन सम्बन्धेनायातस्यास्य व्याख्या—नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा सागारिकपिण्डं बहिर्वाटकाद् 'अनिर्हृतम्' अनिष्कामितम् 'असंसृष्टं वा' अन्यदीयपिण्डैः सहामीलितं 'संसृष्टं वा' अन्यदीयपिण्डैः समं मीलितं प्रतिग्रहीतुमिति सूत्रार्थः ॥ अथ[2] भाष्यविस्तरः—

**वाडगदेउलियाए, इच्छा देंतम्मि गहण तह चेव ।**
**णीसट्ठमणीसट्ठे, गहणा-ऽगहणे इमे दोसा ॥ ३५८६ ॥**

शय्यातरवाटकस्य मध्ये काचिद् देवकुलिका तस्या यद् वानमन्तरं तदर्थं वाटकवास्तव्या अगारिणः सङ्खडीं कुर्वन्ति। तत्र च भिक्षाचरेभ्यो दातुं तेषामिच्छा समजनि। ततो वाटकवास्तव्यजने 'ददति' दातुमुपस्थिते ग्रहणं तथैव मन्तव्यं यथा पूर्वसूत्रे अभिहितम्। तथा निसृष्टं नाम—यद् बल्यादिकं वानमन्तरस्य निवेदितम्, अनिसृष्टं तु तद्विपरीतम्, तयोर्ग्रहणेऽग्रहणे च 'अमी' वक्ष्यमाणा दोषा भवन्तीति सङ्ग्रहगाथासमासार्थः ॥३५८६॥ अथैनामेव विवृणोति—

**उप्पत्तियं वा वि धुवं व भोज्जं, तस्सेव मज्झम्मि उ वाडगस्स ।**
**अमिस्सिते सागरिचोल्लगम्मि, अण्णेहिं सो चेव उ तस्स पिंडो ॥ ३५८७ ॥**

'तस्यैव' सागारिकसत्कस्य वाटकस्य मध्ये वानमन्तरमुद्दिश्य 'भोज्यं' सङ्खडिर्भवेत्, तच्चौत्पत्तिकं वा स्याद् ध्रुवं वा। औत्पत्तिकं नाम—पर्वतिथिमन्तरेणाकस्मिकम्। ध्रुवं तु—पर्वतिथिभावि, यथा नवम्यां दशम्यां वा। तत्रान्यैश्चोल्लकैः सममसिश्रितो यः सागारिकचोल्लकस्तस्मिन् सङ्खड्यां दीयमाने स एव तस्य शय्यातरस्य पिण्डो भवति ॥ ३५८७ ॥

अस्य निवेदितस्यानिवेदितस्य वा ग्रहणे तावदिमे दोषाः—

**भद्दो तन्नीसाए, पंतो घेप्पंते दट्ठूणं भणइ ।**
**अंतोघरे ण इच्छह, इह गहणं दुट्ठधम्मो त्ति ॥ ३५८८ ॥**

यः सागारिको भद्रकः सः 'तन्निश्रया' वानमन्तरनिवेदनाव्याजेनान्यदप्यात्मीयमाहारजातं तत्र प्रक्षिपेत्। यस्तु प्रान्तः स तथा गृह्यमाणं दृष्ट्वा भणति—'अन्तर्गृहे' गृहाभ्यन्तरे दीयमानं मदीयं पिण्डं नेच्छथ, इह पुनरेवं दीयमानस्य ग्रहणं कुरुथ, अहो! दुष्टधर्माणो यूयमिति ॥ ३५८८ ॥ तथैतद्दोषभयान्न गृह्णन्ति ततः किं भवति? इत्याह—

**तेसु अगिण्हंतेसु य, तीसे परिसाएँ एवमुप्पज्जे ।**
**को जाणइ किं एते, साहू घेत्तुं ण इच्छंति ॥ ३५८९ ॥**

'तेषु' साधुषु तं शय्यातरसत्कं निवेदनापिण्डमगृह्णानेषु 'तस्याः' सङ्खडिकारिण्याः पर्षद

---

१ भा० कां० विनाऽन्यत्र—**सह मी**° त०। **सम्मी**° तादी० मो० ले० डे० ॥

२ "**निर्युक्तिविस्तरः—**वाडग० गाथा" इति **चूर्णौ** ॥

एवं चिन्ता समुत्पद्यते, यथा—'को जानाति' को नामामुमर्थं सम्यग् वेत्ति किम् 'एते' साधव इदं शय्यातरसत्कमाहारजातं ग्रहीतुं नेच्छन्ति ? ॥ ३५८९ ॥

**नूणं सें जाणंति कुलं व गोत्तं, आगंतुओ सो य तहिं सगारो ।**
**भूणग्घऽसोयं व ततो चएवि, जं अम्ह इच्छंति ण सेज्जदातुं ॥ ३५९० ॥**

नूनं "से" तस्य शय्यास्वामिनो जानन्त्यमी कुलं वा गोत्रं वा, यथाऽयं नीचकुलोत्पन्नो हीनगोत्रो वेति । स च सागारिकः 'तत्र' ग्रामादावागन्तुकः अतो न तदीयं कुलादि तत्र कोऽपि वेत्ति । यद्वा ते गृहस्थाश्चिन्तयेयुः—'भ्रूणघ्नः' बालमारकोऽयं शौचं वा–शुचिसमाचारतारूपमस्य नास्ति, ⊲ततं एतदीयं पिण्डं त्यक्त्वा⊳ यदमी अस्माकं चोल्लकं ग्रहीतुमिच्छन्ति, न शय्यादातुः सम्बन्धिनम् ॥ ३५९० ॥ ततः सागारिक इत्थं चिन्तयेत्—

**ओभामिओ णेहि सवासमज्झे, चंडालभूतो य कतो इमेहिं ।**
**गेहे वि णिच्छंति असाधुधम्मा, अतो परं किं व करेज्ज अण्णं ॥ ३५९१ ॥**

अपभ्राजितोऽहम् 'अमीभिः' श्रमणकैः 'स्ववासमध्ये' स्वकीयसहवासिजनमध्ये, चाण्डालभूतश्च कृतोऽहममीभिर्मुण्डैः, गेहेऽपि च मदीये नेच्छन्त्यमी असाधुधर्माणः पिण्डं ग्रहीतुम्, अतः परं किं वा मम 'अन्यद्' अपरं कुर्युः ? यत् कर्तुं योग्यं तदमीभिः कृतमिति भावः ॥ ३५९१ ॥ ततश्च—

**राओ दिया वा वि हु णेच्छुभेज्जा, एगस्सऽणेगाण व सेज्जछेदं ।**
**अद्धाण णिंता व अलंभे जं तू, पावेज्ज तं वा वि अगिण्हमाणा ॥ ३५९२ ॥**

रात्रौ वा दिवा वा साधून् प्रतिश्रयाद् निष्काशयेत् । 'एकस्य वा' तस्यैव गच्छस्य 'अनेकेषां वा' बहूनां गच्छानां शय्यादानव्यवच्छेदं कुर्यात् । ततोऽध्वनि वहमाना निर्गच्छन्तो वा साधवस्तदीयदोषेण वसतिमलभमाना यत् परितापनादिकं प्राप्नुयुः तत् ते शय्यातरचोल्लकमगृह्णानाः प्राप्नुवन्ति, तन्निष्पन्नं तेषां प्रायश्चित्तमिति भावः ॥ ३५९२ ॥

एवमसंसृष्टपिण्डविषया दोषा उक्ताः । अथ संसृष्टपिण्डविषयानाह—

**संसट्ठस्स उ गहणे, तहियं दोसा इमे पसज्जंति ।**
**तण्णीसाएँ अभिक्खं, संखडिकारावणं होज्जा ॥ ३५९३ ॥**

यद्यन्यदीयचोल्लकैः संसृष्टं सागारिकपिण्डं गृह्णन्ति तदा तत्रैते दोषाः प्रसजन्ति—'तन्निश्रया' 'यद्यन्यदीयपिण्डसंसृष्टो मदीयः पिण्डो अमीषां कल्पते तत इत्थं कृत्वा भूयो भूयो दापयिष्यामि' इत्यालम्बनेन वाटकवास्तव्यजनैरभीक्ष्णं सङ्खडीकारापणं भवेत् ॥ ३५९३ ॥

**अलऽम्ह पिंडेण इमेण अज्जो !, भुज्जो ण आणेति जहेस इत्थं ।**
**साहू ण इच्छंति इमस्स दोसा, अम्हे वि वज्जेमु ण को वि एस ॥ ३५९४ ॥**

अथ भूयो यथैष सागारिकोऽत्र पिण्डं नानयतीत्येवमर्थं साधवो गृहस्थान् ब्रुवते—आर्याः ! अलमस्माकमनेन संसृष्टपिण्डेनेति । ततस्तेऽगारिणश्चिन्तयेयुः—अस्य सागारिकस्य दोषाद् यदि साधवोऽमुं पिण्डं नेच्छन्ति ततो वयमपि दान-ग्रहणादिव्यवहारमनेन सह वर्जयामः, यतो

१ ⊲ ⊳ एतदन्तर्गतः पाठः भा० नास्ति ॥ २ भूओ ताभा० ॥

न कोऽप्येष विशेषतो ज्ञायते, आगन्तुकत्वात् ॥ ३५९४ ॥

**अगम्मगामी किलिबोऽहवाऽयं, बोट्टी व हुज्जा में सुणादिणा वा ।**
**दोसा बहू तेण जहिं सगारो, पिंडं णए तत्थ उ णाभिगच्छे ॥ ३५९५ ॥**

अथवाऽयमगम्यगामी 'क्लीबो वा' नपुंसकः किल भविष्यति, 'बोट्टी वा' विट्टालना "से" तस्य शय्यातरपिण्डस्य शुनकादिना[1] कृता भवेत् । एवमादयो बहवो दोषा यतो भवन्ति तेन यत्र सङ्खडीकरणे सागारिकः स्वकीयं पिण्डं नयति तत्र प्रथमत एव नैवाभिगच्छेत् ॥३५९५॥

सूत्रम्—

**नो कप्पइ निग्गंथाण वा निग्गंथीण वा सागारियपिंडं बहिया नीहडं असंसट्ठं पडिग्गाहित्तए । कप्पइ निग्गंथाण वा निग्गंथीण वा सागारियपिंडं बहिया नीहडं संसट्ठं पडिग्गाहित्तए १५ ॥**

अस्य व्याख्या प्राग्वत् । ◁[2] नवरं सागारिकपिण्डो वाटकाद् बहिर्निष्कामितोऽपि 'असंसृष्टः' अन्यपिण्डैः सममभीलितो न कल्पते, संसृष्टस्तु कल्पते इति ॥ ▷ अथ भाष्यम्—

**बहिया उ असंसट्ठे, दोसा ते चेव मोत्तु संसट्ठं ।**
**संसट्ठमणुण्णायं, पेच्छउ सागारितो मा वा ॥ ३५९६ ॥**

सागारिकवाटकाद् बहिर्निष्कामिते असंसृष्टे गृह्यमाणे 'त एव' पूर्वसूत्रोक्ता भद्रक-प्रान्तदोषाः, परं मुक्त्वा संसृष्टम्, तत्र दोषा न भवन्तीति भावः । अत एव यद् वाटकाद् बहिर्निष्कामितं संसृष्टं तदत्र सूत्रेऽनुज्ञातम्, सागारिकः पश्यतु वा मा वा । इदं पुरस्ताद् व्यक्तीकरिष्यते ॥ ३५९६ ॥

**नीसट्ठमसंसट्ठो, वि अपिंडो किमु परेहिं संसट्ठो ।**
**अप्पत्तियपरिहारी, सगारदिट्ठं परिहरंति ॥ ३५९७ ॥**

निसृष्टो नाम—बहिर्निष्काश्य वानमन्तरस्य निवेदितः, यस्य वा[3] याचकादेरर्थाय निष्काशितस्तस्मै प्रदत्तः, स यद्यप्यन्यैश्चोल्लकैरसंसृष्टस्तथापि 'अपिण्डः' न सागारिकपिण्डः, किं पुनः 'परैः' अन्यैश्चोल्लकैः समं संसृष्टः ? स सुतरां सागारिकपिण्डो न भवतीत्यर्थः, परमप्रीतिकपरिहारिणः सन्तः सागारिकदृष्टं तमपि परिहरन्ति ॥ ३५९७ ॥ इदमेव सापवादमाह—

**अदिट्ठस्स उ गहणं, असती तव्वज्जितेण दिट्ठस्स ।**
**दिट्ठे व पत्थियाणं, गहणं अंतो व बाहिं वा ॥ ३५९८ ॥**

प्रथमं सागारिकेण सकुटुम्बेनादृष्टस्य, ततः "असइ" त्ति संस्तरणाभावे 'तद्वर्जितेन' तमेकं

---

१ शुनादिना श्वपाकेनैकत्र भोजनादिना कृता भा० ॥ २ ◁ ▷ एतच्चिह्नगतः पाठः भा० नास्ति ॥ ३ वा धार्मिकादे° भा० कां० । वा धाककादे° ताटी० । "जो बहिता णीणित्ता णिवेदितो वाणमंतरस्स, जस्स वा धम्मियादिणो अट्ठाए णीणितो सो णिसट्ठो भण्णइ" इति चूर्णौ ॥

सागारिकं वर्जयित्वा शेषकुटुम्बेन दृष्टस्य संसृष्टपिण्डस्य ग्रहणमनुज्ञातम् । अथ ते साधवो ग्रामान्तरं प्रस्थिताः ततः सागारिकेणापि दृष्टस्य संसृष्टस्य वा असंसृष्टस्य वा वाटकस्यान्तर्वा बहिर्वा सर्वत्र ग्रहणमनुज्ञातम्, पुनर्ग्रहणाभावेन भद्रक-प्रान्तदोषाणामभावात् ॥ ३५९८ ॥

**पाहुणगा वा बाहिं, घेत्तुमसंसट्ठगं च वच्चंति ।**
**अंतो वा उभयं पी, तत्थ पसंगादओ णत्थि ॥ ३५९९ ॥**

अथवा प्राघुणकाः साधवः केचित् तत्र समायाताः, ते च तं ग्रामं व्यतीत्याग्रतो गन्तुकामाः वाटकाद् बहिर्निष्कामितं निसृष्टमनिसृष्टमपि गृहीत्वा समुद्दिश्य च व्रजन्ति । तदभावे 'अन्तः' वाटकाभ्यन्तरे वर्त्तमानमुभयमपि प्राघुणकाः साधवो गृह्णन्ति, प्रथमं संसृष्टं तदप्राप्तावसंसृष्टमपीत्यर्थः । कुतः ? इत्याह—'तत्र' एवंविधे प्राघुणकानां ग्रहणे प्रसङ्गादयो दोषाः भद्रक-प्रान्तकृताः पुनर्ग्रहणाभावान्न सन्ति । प्रसङ्गो नाम—तन्निश्रया भूयः सङ्खडीकारापणम्, आदिशब्दाद् निष्काशनादिपरिग्रहः ॥ ३५९९ ॥

अथ "संसट्ठमणुण्णायं" ( गा० ३५९६ ) इत्यादिपदानां भावार्थं गाथात्रयेणाह—

**जो उ महाजणपिंडेण मेलितो बाहि सागरियपिंडो ।**
**तस्स तहिं अपभुत्ता, ण होति दिट्ठे वि अचियत्तं ॥ ३६०० ॥**
**जं पुण तेसिं चिय भायणेसु अविमिस्सियं भवे दव्वं ।**
**तं दिस्समाण गहियं, करेज्ज अप्पत्तियं पभुणो ॥ ३६०१ ॥**
**जं पुण तेण अदिट्ठं, दुवाण गहणं तु होतऽसंसट्ठे ।**
**तहियं ताणि कधिज्जा, ण यावि ण य आयरो तत्थ ॥ ३६०२ ॥**

यस्तु सागारिकपिण्डो महाजनपिण्डेन सह वाटकाद् बहिर्मीलितः स साधूनां कल्पते । कुतः ? इत्याह—'तस्य' सागारिकस्य तत्राप्रभुत्वाद् महाजनस्यैव च प्रभुत्वाद् दृष्टेऽपि सागारिकस्य नाप्रीतिकं भवति ॥ ३६०० ॥

यत् पुनर्द्रव्यं 'तेषामेव' शय्यातरमानुषाणां भाजनेषु 'अविमिश्रितम्' असंसृष्टं भवति तद् दृश्यमानं गृहीतं सत् 'प्र-

☞ भोः' शय्यातरस्याप्रीतिकं कुर्याद् अतो न ग्राह्यम् ॥ ३६०१ ॥

१ स्य पिण्ड° भा० ॥ २ °र्वा देवकुलिकायामुद्यानादिषु सर्वत्र कां० ॥

३ "बहिया उ असंसट्ठे०" गा० ३५९६ तः आरभ्यैताश्चतस्रो गाथाः **पुरातना** इति **चूर्णिकृतो विशेषचूर्णिकृतश्चा**भिप्रायः । तथाहि तद्वचनम्—"एताओ **पुराणिया**ओ गाहाओ, एतासिं इमाओ विभासागाधाओ—जो तु महा० गाधात्रयम् ।" इति ॥

४ ☞ ☜ एतादृग्हस्तचिह्नमध्यवर्त्ती ( इत आरभ्य ३६०७ गाथाटीकान्तर्गतहस्तचिह्नं यावत् ) समग्रोऽप्ययं ग्रन्थसन्दर्भः भा० प्रतिं विहायास्मत्पार्श्ववर्त्तिनीषु सर्वास्वपि प्राचीनासु प्रतिषु नास्ति, किं बहुना? ताडपत्रीयप्रतावप्ययं पाठो न विद्यते । सम्भावयामश्च वयम्—यदुत ज्ञानकोशगतेषु निखिलेष्वप्यर्वाचीन-प्राचीनकल्पटीकादर्शेषु नैवायं ग्रन्थसन्दर्भो भूत्रा भविष्यतीति । अस्मत्सविधवर्त्तिनीषु भा० प्रतिवर्जितप्रतिषु **सत् प्र[........]येदिति भावः** इति रूपः पाठो वर्त्तते । सम्भाव्यते किल—**सत् प्र** इतिपाठानन्तरवर्त्ति मूलप्रतिगतमेकं तालपत्रमकल्पनीयेन केनचित् प्रमाददोषेण भ्रष्टमिति तत्परम्परा विश्वेष्वप्यादर्शेष्ववतीर्णेति ॥

यत् पुनः 'तेन' सागारिकेणादृष्टस्यासंसृष्टस्यापि "दुघाणे" दुर्भिक्षे संस्तरणाभावाद् ग्रहणं क्रियते तत्र 'तानि' शय्यातरमानुषाणि गत्वा शय्यातरस्य कथयेयुर्न वा; कथितेऽपि 'न च' नैव 'तत्र' दुर्भिक्षे शय्यातरस्य तथाविध आदरो भवति, येन भूयः सङ्खडीं कुर्यादिति भावः ॥३६०२॥

सूत्रम्—

**जो खलु निग्गंथो वा निग्गंथी वा सागारियपिंडं बहिया नीहडं असंसट्ठं संसट्ठं करेइ, करेंतं वा साइज्जइ, से दुहओ वीइक्कममाणे आवज्जइ चाउम्मासियं परिहारट्ठाणं अणुग्घाइयं १६ ॥**

यः खलु निर्ग्रन्थो निर्ग्रन्थी वा सागारिकपिण्डं बहिर्निर्गतमसंसृष्टं संसृष्टं करोति, कुर्वन्तं वा 'स्वादयति' कारयति कुर्वन्तमनुमन्यते वेत्यर्थः, सः 'द्विधा' लौकिक-लोकोत्तरिकभेदाद् द्विप्रकारां मर्यादां व्यतिक्रामन् आपद्यते चातुर्मासिकं परिहारस्थानमनुद्घातिकम्, चतुरो गुरुमासानित्यर्थः । एष सूत्रसङ्क्षेपार्थः ॥ अथ भाष्यविस्तरः—

**संसट्ठस्स उ करणे, चउरो मासा हवंतऽणुग्घाता ।**
**आणादिणो य दोसा, विराहणा संजमा-ऽऽदाए ॥ ३६०३ ॥**

असंसृष्टमस्माकं ग्रहीतुं न कल्पत इति कृत्वा यदि संसृष्टं करोति, तुशब्दस्यानुक्तसमुच्चयार्थत्वात् कारयति वा कुर्वन्तमनुमोदयति वा, ततश्चत्वारो मासा अनुद्घाताः प्रायश्चित्तं भवति, आज्ञादयश्च दोषाः, विराधना च संयमा-ऽऽत्मविषया ॥ ३६०३ ॥

**सयमेव उ करणम्मी, उदगप्फुस भंडणुण्हवण पंते ।**
**तेणा चारभडा वा, कम्मबंधे पसज्जणया ॥ ३६०४ ॥**

स्वयमेव करणे तावदिमे दोषाः—'संयतेनाशुचिना स्पृष्टमिदं भाजनम्' इति विचिन्त्य उदकेन स्पर्शनं—प्रक्षालनम्, तथा 'किमस्मदीयानि भाजनानि स्पृशसि ?' इति 'भण्डनं' कलहम्, "उण्हवण" त्ति तेषां भाजनानामग्निकायेनाङ्गारणम्, एतानि प्रान्ताः सङ्खडिकारिणः कुर्वन्ति । तथा 'स्तेनाः' चौराः 'चारभटाः' राजपुरुषा एते तत्रागत्य तं संयतसंसृष्टं पिण्डं अपहरेयुः, ततश्च कर्मबन्धस्य प्रसजना भवति यावदसौ संयतो भूयो नावर्त्तते ॥३६०४॥ किञ्च—

**भिंदेज्ज भाणं दवियं व उज्झे, डज्झेज्ज उण्हेण कडी व भुज्जे ।**
**संसत्तगं तं व जहिं व छुब्भे, विरोहि दव्वं व जहिं व छड्डे ॥ ३६०५ ॥**

संयतः सागारिकपिण्डमन्यत्र प्रक्षिपन् तद् भाजनं प्रमादतो भिन्द्यात्, तत्र पश्चात्कर्मा-ऽन्यप्रवाहनादयो दोषाः । यद्वा तत्र भाजने यद् 'द्रव्यं' शालि-दाल्यादि तद् अन्यत्र सञ्चारयन् 'उज्झेत्' परित्यजेत् । अथवा तद् द्रव्यमतीवोष्णं तेनासौ दह्येत, कटी वा तथाकुर्वतो 'भुज्येत' वक्रीभवेत् । यत्र वाऽसौ सागारिकपिण्डं प्रक्षिपति 'तद्' द्रव्यं 'संसक्तं' जन्तुसंसक्तियुक्तम्, ततः संयमविराधना । विरोधि वा तद् द्रव्यम्, प्रक्षेपणीयद्रव्येण सह भुज्यमानं

रोगादिविकारकारकमित्यर्थः, तत्रात्मविराधना । 'यत्र वा' भूभागे तद् द्रव्यं प्रक्षिपन् प्रमादतः छर्दयति तत्र षट्कायविराधना ॥ ३६०५ ॥

अथ "तेणा चारभडा वा, कम्मबंधे पसज्जणया ॥" ( गा० ३६०४ ) इति व्याचष्टे—

**तं तेण छूढं तहिगं च पत्ता, तेणा भडा घोड कुकम्मिगा य ।**
**आसत्त णामऽट्ठित आउ मंसा, ण जिण्णऽणादेस ण जा विउट्टे ॥ ३६०६ ॥**

'तद्' द्रव्यं 'तेन' संयतेन 'तत्र' भाजने प्रक्षिप्तम्, तत्र च प्राप्ताः 'स्तेनाः' चौराः 'भटाः' राजपुरुषाः 'घोटाः' पञ्चालचट्टाः 'कुकर्मिणश्च' कुकर्मकारिणः एते तद् भाजनमुत्कृष्टशालि-दाल्यादिद्रव्यभूतमपहृत्य गच्छेयुः । तत्र केचिदाचार्यदेशीया ब्रुवते—यावत् तेषामासप्तमं कुलमनुवर्त्तते तावत् तस्य संयतस्य कर्मबन्धः । अपरे—तेषां यावद् नाम-गोत्रमनुवर्त्तते । अन्ये—यावत् तेषामस्थीनि सन्ति । अपरे पुनराहुः—यावत् ते आयुर्धारयन्ति । एके भणन्ति—यावत् तेषां तद्द्रव्याभ्यवहारप्रत्ययो मांसोपचयः । अन्ये तु ब्रुवते—यावत् तेषां तद् भक्तं भुक्तं सद् नाद्यापि जीर्णं तावत् प्रतिसमयं तस्य कर्मबन्धः । सूरिराह—एते सर्वेऽप्यनादेशाः । सिद्धान्तपक्षः पुनरयम्—यावदसौ संयतः 'न व्यावर्त्तते' न तस्मात् स्थानादालोचनाप्रदानादिना प्रतिक्रामति तावत् कर्मबन्धो मन्तव्यः ॥ ३६०६ ॥ किञ्च—

**णिच्छंति व मरुगादी, ओभावण जं च अंतरायं तु ।**
**कुज्जा व पच्छकम्मं, पवत्तणं घाय बंधं वा ॥ ३६०७ ॥**

संयतेन स्पृष्टमिति कृत्वा तद् भक्तं मरुकादयो भोक्तुं नेच्छन्ति । ततश्च 'अहो ! अमी अशुचयो यैः स्पृष्टमन्नमुच्छिष्टमिति कृत्वा ब्राह्मणादयो न भुञ्जते' इति महती साधूनामपभ्राजना स्यात् । यच्च मरुकादीनां तद् भक्तमभुञ्जानानामन्तरायं तन्निष्पन्नं प्रायश्चित्तम् । पश्चात्कर्म वा स गृहपतिः कुर्यात्, मरुकादिभोजनार्थं भूयोऽप्यभिनवं भक्तपाकं कार- ☞ येदिति भावः । यद्वा 'साधुभिरिदं पवित्रीकृतम्' इति मत्वा भद्रकास्तस्यान्नादेः स्वगृहे प्रवर्त्तनं कुर्युः । अथ ते प्रान्तास्ततो घातं वा बन्धं वा कुपिताः सन्तः संयतानां कुर्युः ॥ ३६०७ ॥

एते तावत् स्वयं करणे दोषा अभिहिताः । अथ स्वयं संस्प्रष्टुं कर्त्तुमसमर्था अन्यैः कारयन्ति यो वा कोऽप्यन्यः प्रक्षिपति तमनुमोदयन्ति तत इमे दोषाः—

**कारावणमण्णेहिं, अणुमोदण उम्हमादिणो दोसा ।**
**दुविहे वतिकमम्मि, पायच्छित्तं भवे तिविहं ॥ ३६०८ ॥**

अन्यैः कारापणे कुर्वतो वा अनुमोदने उष्मादयो दोषा भवन्ति । उष्मा नाम—तेनात्युष्ण-द्रव्येण तस्य अगारिणो हस्तादौ परितापः, आदिशब्दाद् यदीयं द्रव्यमसौ तत्र प्रक्षिपति स तेन सहासङ्खडं कुर्यात्—कस्मान्मदीयं स्पृशसि ? इति । एवमादयो दोषाः । अत्र च 'द्विविधे व्यतिक्रमे' लौकिक-लोकोत्तरिकमर्यादातिक्रमरूपे प्रायश्चित्तं त्रिविधं भवति । तत्रैकं स्वयं करणे, द्वितीयं कारापणे, तृतीयमनुमताविति ॥ ३६०८ ॥ इदमेवोत्तरार्द्धं व्याचष्टे—

**लोउत्तरं च मेरं, अतिचरई लोइयं च मेलंतो ।**
**अहवा सयं परेहि य, दुविहो तु वतिकमो होति ॥ ३६०९ ॥**

**पढमिल्लुगम्मि ठाणे, दोहि वि गुरुगा तवेण कालेण।**
**बितियम्मि य तवगुरुगा, कालगुरू होति ततियम्मि ॥ ३६१० ॥**

सागारिकचोल्लकमितरेषां चोल्लकैः समं मीलयन् 'लोकोत्तरिकीं मर्यादां' "न कल्पते सागारिकपिण्डोऽसंसृष्टः संसृष्टः कर्तुम्" इति भगवदाज्ञालक्षणां 'लौकिकीं च' 'न मीलनीया अस्माकं चोल्लकाः' इत्येवंरूपां मर्यादाम् 'अतिचरति' अतिक्रामतीत्यर्थः। अथवा स्वयं करणं परैश्च क्रियमाणस्य स्वादनमित्येवं द्विविधो व्यतिक्रमो भवति ॥ ३६०९ ॥

तत्र 'प्रथमस्थाने' स्वयंकरणलक्षणे चत्वारो गुरवो द्वाभ्यामपि गुरुकाः, तद्यथा—तपसा कालेन च। 'द्वितीये' कारापणे त एव चत्वारो गुरवस्तपोगुरुकाः। 'तृतीये' अनुमोदनालक्षणे स्थाने त एव चतुर्गुरुकाः कालगुरवो भवन्ति ॥ ३६१० ॥ किञ्च—

**अम्हच्चयं छूढमिणं किमट्ठा, तं केण उत्ते कहिते जतीहिं।**
**ते चेव तोयादि पवत्तणा य, असिट्ठ तेणे व असंखडादी ॥ ३६११ ॥**

अस्मदीयं तदिदं द्रव्यं किमर्थं केनान्यत्र प्रक्षिप्तम्?, इत्थं सङ्खडिकारिभिः साक्षेपमुक्ते रक्षपालो ब्रवीति—यतिभिरिदमेकत्र मीलितम्। एवं कथिते सति त एव 'तोयादयः' उदकस्पर्शन-भण्डनादयो दोषाः। अथ ते भद्रकास्ततः 'साधुहस्तेन पवित्रीभूतमिदम्' इति मत्वा प्रवर्त्तनं कुर्युः। अथासौ रक्षपालो न कथयति ततः 'अशिष्टे' अकथिते 'तेनैव' रक्षपालेन सममसङ्खडं कुर्युः, आदिशब्दाद् वधं वा बन्धं वा ते तस्य कुर्वन्ति। यत एते दोषा अतो नासंसृष्टं संसृष्टं कर्त्तव्यं कारयितव्यं क्रियमाणमनुमोदयितव्यं चेति ॥ ३६११ ॥

अथ द्वितीयपदमाह—

**अद्धाणणिग्गयादी, पविसंता वा वि अहव ओमम्मि।**
**अणुमोदण कारावण, पभुणिक्खंतस्स वा करणं ॥ ३६१२ ॥**

अध्वनो निर्गता आदिशब्दाद् अशिवादिविनिर्गता अध्वनि वा प्रविशन्तोऽथवाऽवमौदर्ये वर्त्तमानाः संसृष्टं पिण्डं कुर्वन्तः प्रथममनुमोदनं ततः कारापणमपि प्रतिसेवन्ते। यो वा प्रभुः—बलवान् राज-गणसम्मतो वा निष्क्रान्तः—प्रतिपन्नदीक्षस्तस्य स्वयमपि करणं भवतीति सङ्ग्रहगाथासमासार्थः। अथ विस्तरार्थोऽभिधीयते—ते साधवो विप्रकृष्टादध्वनो निर्गतास्तं वा प्रविशन्तोऽवमौदर्ये वा अन्यत्र पर्याप्तमलभमानास्तत् सागारिकसत्कं द्रव्यं स्निग्धं शरीरोपष्टम्भकं मत्वा प्रथमं तावदन्यं संसृष्टं कुर्वन्तमनुमोदयन्ति। अथान्यः संसृष्टं कुर्वन्न प्राप्यते ततः कारयेयुरपि ॥ ३६१२ ॥ कथम्? इत्याह—

**पुराण सागं च महत्तरं वा, अण्णं व गाहेंति तहिं च छोढुं।**
**सागारिओ वा वि विगोवितो जो, स पिंडमण्णेसु तु संदधाति ॥ ३६१३ ॥**

'पुराणं' पश्चात्कृतम्, तदप्राप्तौ प्रतिपन्नाणुव्रतं श्रावकम्, तदभावे यस्तत्र महत्तरस्तम्, 'अन्यं वा' प्रमाणभूतं 'तत्र' अन्यपिण्डेषु सागारिकपिण्डं प्रक्षेप्तुं 'ग्राहयन्ति' प्रज्ञापयन्तीत्यर्थः। यो वा सागारिकः 'विकोविदः' विशेषेण साधुसामाचारीकुशलः स स्वकीयं पिण्डमन्येषु पिण्डेषु 'सन्दधाति' मिश्रयतीत्यर्थः ॥ ३६१३ ॥

**सम्मिस्सियं वा वि अमिस्सियं वा, गिण्हंति गीता इतरेहिँ मिस्सं ।**
**कारेंतऽदिट्ठं चंऽविगोवितेसू, दिट्ठं च तप्पच्चयकारि गीता ॥ ३६१४ ॥**

यदि सर्वेऽपि गीतार्थास्ततः सम्मिश्रितं वा अमिश्रितं वा सागारिकपिण्डं गृह्णन्ति । अथ 'इतरैः' अगीतार्थैर्युक्तास्ततः 'मिश्रं' संसृष्टं गृह्णन्ति नासंसृष्टम् । अथासंसृष्टं ( अथ संसृष्टं ) न प्राप्यते अविकोविदाश्च–अगीतार्थास्तत्र सन्ति ततः 'अदृष्टं' यथा ते न पश्यन्ति तथा पुराणादिना संसृष्टं कारयन्ति । अथादृष्टे कार्यमाणे तेषामप्रत्यय उत्पद्यते, यथा—एतैः सागारिकपिण्ड एवासंसृष्ट आनीतः; ततस्तत्प्रत्ययकारिणो गीतार्थास्तैर्दृष्टमपि संसृष्टं कारयन्ति ॥ ३६१४ ॥

अथ "पभुनिक्खंतस्स वा करणं" ( गा० ३६१२ ) इति पदं व्याख्यानयति—

**जो उज्जिओ आसि पभू व पुव्वं, तप्पक्खिओ राय-गणच्चिओ वा ।**
**सवीरिओ पक्खिवती इमं तु, वोत्तूण किं अच्छइ एस वीसुं ॥ ३६१५ ॥**

यस्तत्र ग्रामे पूर्वम् 'ऊर्जितः' बलवान् 'प्रभुर्वा' अधिपतिरासीत्, 'तत्पाक्षिको वा' तस्य ग्रामस्य हितैषी 'राज-गणाञ्चितो वा' राजसम्मतो मल्लादिगणसम्मतो वा आसीत्, एवंविधोऽपि यः 'सवीर्यः' शक्तिमान्, भाजनभेदादयो दोषा यस्य न भवन्तीति भावः; सः 'एनं' सागारिकपिण्डमन्यपिण्डेषु प्रक्षिपति, परमिदं वचनमुक्त्वा, यथा—किमेषः 'विष्वक्' पृथक् तिष्ठतीति ॥ ३६१५ ॥

॥ **सागारिकपारिहारिकप्रकृतं समाप्तम्** ॥

---

## आ हृ ति का नि र्हृ ति का प्र कृ त म्

सूत्रम्—

**सागारियस्स आहडिया सागारिएण पडिग्गाहिया,**
**तम्हा दावए नो से कप्पइ पडिग्गाहित्तए ।**
**सागारियस्स आहडिया सागारिएण अप्पडिग्गा-**
**हिया, तम्हा दावए एवं से कप्पइ पडिग्गाहित्तए १७॥**

अथास्य सूत्रस्य कः सम्बन्धः ? इत्याह—

**नीहडसागरिपिंडस्स विवक्खो आहडो अह उ जोगो ।**
**नीहडसुत्ते पुणरवि, जोगो संदट्ठओ नाम ॥ ३६१६ ॥**

पूर्वसूत्रे निर्हृतः सागारिकपिण्ड उक्तः, इह तु तद्विपक्ष आहृत उच्यते । 'अथ' एष प्रस्तुतसूत्रस्य 'योगः' सम्बन्धः । तथा इतः सूत्रादनन्तरं पुनरपि निर्हृतसूत्रं भविष्यति[2] ततोऽयं सूत्रत्रयस्य 'योगः' सम्बन्धः सन्दष्टको नाम मन्तव्यः । किमुक्तं भवति ?—आदौ निर्हृ-

---

१ च अगोवि° ताभा० चूर्णी विशेषचूर्णी च विना ॥ २ °ति तद्विषयश्च 'योगः' भा० ॥

तसूत्रम्, मध्ये आहृतसूत्रम्, अवसाने तु भूयोऽपि निर्हृतसूत्रम्; एष ईदृशः सम्बन्धः सदृशपूर्वापरसूत्रद्वयेन सन्दंशकेनेव गृहीतत्वात् सन्दष्टक इत्यभिधीयते । अनेन वक्ष्यमाणसूत्रस्याप्यत्रैव सम्बन्धोऽभिहित इति ॥ ३६१६ ॥

अनेन सम्बन्धेनायातस्यास्य व्याख्या—'आहृतिका' प्रहेणकं सा सागारिकस्य गृहे कुतोऽपि गृहान्तरादागता, सा च सागारिकेण 'प्रतिगृहीता' स्वीकृता, 'ततः' तस्या मध्याद् दद्याद् नो "से" तस्य साधोः कल्पते प्रतिग्रहीतुम् । सागारिकस्याहृतिका सागारिकेण 'अप्रतिगृहीता' न स्वीकृता तस्या मध्याद् दद्यादेवं "से" तस्य साधोः कल्पते प्रतिग्रहीतुमिति सूत्रसङ्क्षेपार्थः ॥

साम्प्रतं निर्युक्तिविस्तरः—

**आहडिया उ अभिघरा, कुलपुत्तग भगिणि मट्टिगालित्ते ।**
**दव्वे खेत्ते काले, भावम्मि य होइ आहडिया ॥ ३६१७ ॥**

अभिशब्दोऽत्र पृथगर्थवाचकः । ततश्च 'अभिगृहाद्' अपरस्माद् वेश्मनो यद् विशिष्टं खाद्यकद्रव्यमागतं सा आहृतिका भण्यते । सा चैवं सम्भवति—कश्चित् कुलपुत्रकः क्वचिद् ग्रामे परिवसति, तस्य चान्यदा प्राघूर्णकः समायातः तदर्थं विविधमतिशायि द्रव्यमुपस्कृतम्, कुलपुत्रस्य च भगिनी तत्रैव ग्रामे परिणीता तदर्थं स्वकीयभार्याहस्ते घृतपूरादिकं प्रेषयति, सा च भगिनी तदानीं मृत्तिकालिप्तहस्ता ततस्तां भ्रातृजायां ब्रवीति—स्थापय त्वमिदममुकत्र प्रदेशे, अहमिदानीमक्षणिका तिष्ठामीति । सा चाहृतिका चतुर्द्धा, तद्यथा—द्रव्याहृतिका क्षेत्राहृतिका कालाहृतिका भावाहृतिका चेति ॥ ३६१७ ॥ अथैनामेव निर्युक्तिगाथां विवरीपुराह—

**आएसट्ठ[1] विसेसे, मति काले भगिणि संभरित्ताणं ।**
**भज्जि भज्जाहत्थे, कुलओ पेसेति भगिणीए ॥ ३६१८ ॥**

आदेशः—प्राघूर्णकस्तदर्थं घृतपूर-लपनश्रीप्रभृतेः खाद्यकद्रव्यस्य विशेषे सञ्जाते सति 'काले' भोजनदेशकाले भगिनीं संस्मृत्य भार्याहस्ते 'भर्जिकां' प्रहेणकं 'कुलजः' कुलपुत्रको भगिनीनिमित्तं प्रेषयति एषा आहृतिकोच्यते । अस्यां च चत्वारो भङ्गाः, तद्यथा—द्रव्यतः प्रतिगृहीता न भावतः १ भावतः प्रतिगृहीता न द्रव्यतः २ द्रव्यतोऽपि भावतोऽपि प्रतिगृहीता ३ नापि द्रव्यतो नापि भावतः प्रतिगृहीता ४ ॥ ३६१८ ॥ एषां यथाक्रमं भावनामाह—

**उच्छंगे अणिच्छाए, ठविया दव्वगहिया ण पुण भावे ।**
**एत्थ पुण भद्द-पंता, अचियत्तं चेव घेप्पंते ॥ ३६१९ ॥**
**वावार मट्टिया-असुइलित्तहत्था उ बिइयओ भंगो ।**
**दोसु वि गहिए तइओ, चउत्थभंगे उ पडिसेहो ॥ ३६२० ॥**

यदर्थं सा भर्जिका प्रेषिता सा भगिनी तं भ्रातरं प्रति केनापि कारणेन रुष्टा सती भ्रातृजायया समर्प्यमाणामपि तां न गृह्णाति, ततस्तया ननान्दुरुत्सङ्गेऽनिच्छयाऽपि सा भर्जिका स्थापिता, एषा द्रव्यतः प्रतिगृहीता न पुनर्भावतः । इयं च शय्यातरपिण्डो न भवति, भावतो-

[1] "आएसट्ठऽइसेसे" इति पाठः चूर्णौ विशेषचूर्णौ च । तथाहि—"पाहुणगस्स अट्ठाए अतिसेसगं दव्वं खज्जगादि कतं" इति ॥

ऽगृहीतत्वात् । परमत्र पुनर्भद्रक-प्रान्तदोषा भवन्ति, भद्रकस्तन्निश्रया प्रक्षेपं प्रान्तस्तु निष्काशन-वसतिव्यवच्छेदादिकं कुर्यादिति भावः । अप्रीतिकं चैवं गृह्यमाणे भवति—किमेष मदीयः पिण्डो न भवति येनैवममी इदं गृह्णन्ति ? ॥ ३६१९ ॥

तथा सा भगिनी यदा कमपि दलन-पेषणादिव्यापारं कुर्वाणा मृत्तिकया वा अशुच्या वा लिप्तहस्ता भवति तदा ब्रवीति—स्थापय त्वममुकत्र प्रदेशे, एषा भावतः प्रतिगृहीता न द्रव्यत इति द्वितीयो भङ्गः । तृतीये तु भङ्गे 'द्वाभ्यामपि' द्रव्य-भावाभ्यां प्रतिगृहीता । चतुर्थभङ्गे 'द्वाभ्यामपि' द्रव्य-भावाभ्यां प्रतिषेधः । किमुक्तं भवति ?—सा भगिनी रुष्टा सती बलादर्प्यमाणामपि तां भर्जिकां हस्ताभ्यामपि न स्पृशतीति । सा चाहृतिका द्रव्य क्षेत्र-काल-भावभेदात् चतुर्विधा । पुनरेकैका द्विविधा—छिन्ना अच्छिन्ना च ॥ ३६२० ॥ अथैता एव भावयति—

**संकप्पियं व दव्वं, दिट्ठा खेत्तेण कालतो छिन्नं ।**
**दोसु उ पसंगदोसा, सागारिएँ भावतो दुविहो ॥ ३६२१ ॥**

यद् द्रव्यं सङ्कल्पितम्, यथा—अमुकं घृतपूरादिकं तत्र गृहे नेतव्यम्, वाशब्दस्यानुक्तप्रकारान्तरद्योतकत्वाद् यद् वा तत्र गृहे नयनार्थं पृथक् स्थापितम्, तदुभयमपि द्रव्यतश्छिन्नम् । या पुनराहृतिका स्वगृहमानीयमाना सागारिकेण दृष्टा सा क्षेत्रतश्छिन्ना । तथा 'अमुकस्यां वेलायां नेतव्यम्' इति निर्दिष्टं द्रव्यं कालतश्छिन्नम् । उपलक्षणमिदम्, तेन[1] 'न नेष्यामि' इति यत्र भावो निवृत्तस्तद् भावतश्छिन्नम् । अच्छिन्ना त्वाहृतिका चतुर्द्धाऽप्येतद्विपरीता । तथा 'द्वयोर्भङ्गयोः' 'द्रव्यतः प्रतिगृहीता न भावतः, नापि द्रव्यतो नापि भावतः प्रतिगृहीता' इत्येवंलक्षणयोः न सागारिकपिण्डः, परं प्रसङ्गदोषान्न गृह्यते । "भावउ" त्ति 'भावतः प्रतिगृहीता न द्रव्यतः' इत्येवंरूपो यो भङ्गः, यश्च 'द्रव्यतोऽपि भावतोऽपि प्रतिगृहीता' इत्येवंलक्षणो द्विविधः प्रतिगृहीतो भङ्गः, एतयोः सागारिकपिण्ड इति कृत्वा न कल्पते ॥ ३६२१ ॥

अथैनामेव **निर्युक्तिगाथां** व्याचष्टे—

**संकप्पियं वा अहवेगपासे, सगारिदिट्ठं अमुगं तु वेलं ।**
**नियट्ट भावे नऽमुगं अदिट्ठा, काले ण निद्देस अछिन्न भावे ॥ ३६२२ ॥**

यद् घृतपूरादि तत्र गृहे नयनाय सङ्कल्पितम्, अथवा यदेकपार्श्वे विश्वक् स्थापितं तदेतद् द्रव्यतश्छिन्नम् । सागारिकेण स्वगृहमानीयमानं यद् दृष्टं तत् क्षेत्रतश्छिन्नम् । 'अमुकस्यां' मध्याह्नादिलक्षणायां वेलायां नेतव्यमिति निर्दिष्टं कालतश्छिन्नम् । यत्र तु 'न नेष्यामि' इति भावो निवृत्तस्तद् भावतश्छिन्नम् । एवं चतुर्द्धाऽपि छिन्नं व्याख्यातम् । अथाच्छिन्नं व्याख्याति—"नऽमुगं" इत्यादि । यद् द्रव्यममुकं नेतव्यमिति न सङ्कल्पितं न वा पृथक् स्थापितं तद् द्रव्यतोऽच्छिन्नम् । या वा आहृतिका सागारिकेणानीयमाना न दृष्टा तत् क्षेत्रतोऽच्छिन्नम् । कालेऽच्छिन्नं यत्र प्रतिनियताया वेलाया निर्देशो नास्ति । भावेऽच्छिन्नं तु यत्राद्यापि 'नेष्यामि' इति भावोऽव्यवच्छिन्नः, न निवर्त्तते इत्यर्थः ॥ ३६२२ ॥ अथात्रैव ग्रहणविधिमाह—

**भावो जाव न छिज्जइ, विप्परिणय गेण्ह मोत्तु [2]खेत्तं तु ।**

---

१ **तेन 'नेष्यामि'** भा० कां० विना ॥ २ **खेत्तम्मि** ताभा० ॥

**खेत्ते वि होति गहणं, अदिट्ठे विप्परिणतम्मि ॥ ३६२३ ॥**

भावो यावदद्यापि न व्यवच्छिद्यते तावन्न कल्पते । यदा तु 'न नेष्यामि' इति भावः 'विपरिणतः' व्यवच्छिन्नस्तदा ◁ क्षेत्रेच्छिन्नं मुक्त्वा यदन्यत् क्षेत्रतोऽच्छिन्नं यच्च द्रव्यतः कालतश्च छिन्नमच्छिन्नं वा तद् ग्रहीतुं कल्पते, ▷ क्षेत्रच्छिन्नं तु न कल्पत इति भावः । अथैतदेवापवदति—"खेत्ते वि" इत्यादि । क्षेत्रच्छिन्नस्यापि ग्रहणं भवति यदि स तद् द्रव्यं नयन्नपान्तराले 'न नेष्यामि' इति विपरिणतो भवति, तच्च सागारिकेण अदृष्टम्- अदृश्यमानं ग्रहीतव्यम् ॥ ३६२३ ॥ यतः—

**पुरतो पसंग-पंता, अचियत्तं चेव पुव्वभणियं तु ।**
**बितिय-ततिया उ पिंडो, पढम-चउत्था पसंगेहिं ॥ ३६२४ ॥**

अथ सागारिकस्य पुरतो गृह्णन्ति ततो भद्रकः प्रसङ्गः तन्निश्रया तत्र प्रक्षेपम्, प्रान्तश्च निष्काशनादिकं कुर्यात्, अप्रीतिकं च पूर्वभणितं तस्य तथापश्यतो गृह्यमाणे भवति, ततः पुरतो न ग्रहीतव्यम् । तथा द्वितीय-तृतीयौ भङ्गौ शय्यातरपिण्ड इति कृत्वा परिहर्त्तव्यौ । प्रथम-चतुर्थौ तु न शय्यातरपिण्डः, परं प्रसङ्गदोषभयात् तावपि परिहर्त्तव्यौ ॥ ३६२४ ॥

अथाचार्यो विनेयवर्गव्युत्पादनार्थमाक्षेप-परिहारौ निरूपयितुकाम इदमाह—

**कप्पइ अपरिग्गहिया, णिक्खेवे चउ दुगं अजाणंता ।**
**जाणंता वि य केई, सम्मोहं काउ लोभा वा ॥ ३६२५ ॥**

केचिदाचार्या निक्षेपचतुष्कस्य—'द्रव्यतः प्रतिगृहीता न भावतः' इत्यादिलक्षणभङ्गचतुष्टयस्य 'द्विकं' प्रथम-चतुर्थभङ्गद्वयमाश्रित्येदं सूत्रं प्रवृत्तमित्येवंविधमर्थमजानन्तः, यद्वा जानन्तोऽपि तदर्थं केचिदगीतार्थानां सम्मोहं कृत्वा लोभाद् ब्रुवते—कल्पते सागारिकेणापरिगृहीता आहृतिका ॥ ३६२५ ॥ इदमेव स्पष्टयति—

**जं आहडं होइ परस्स हत्थे, जं णीहडं वा वि परस्स दिन्नं ।**
**तं सुत्तछंदेण वयंति केई, कप्पं ण चे सुत्तमसुत्तमेवं ॥ ३६२६ ॥**

यद् 'आहृतकं' प्रहेणकं शय्यातरगृहमानीयमानं परस्य हस्ते भवति, एतेन प्रस्तुतमेव सूत्रं गृहीतम्; यच्च 'निर्हृतं' सागारिकगृहाद् निष्काशितं परस्य दत्तम्, अनेन च वक्ष्यमाणं सूत्रमुपात्तम्; तदेवंविधं द्रव्यं 'सूत्रच्छन्देन' सूत्राभिप्रायेण 'कल्प्यं' कल्पनीयम् 'न' नैव 'चेद्' यदि आचार्य! एवमसदुक्तं मन्यसे ततः सूत्रमसूत्रमेव प्राप्नोति, अप्रमाणमित्यर्थः । एवं केचिदाचार्यदेशीया वदन्ति ॥ ३६२६ ॥ अत्र सूरिः प्रतिवचनमाह—

**सुत्तं पमाणं जति इच्छितं ते, ण सुत्तमत्थं अतिरिच्च जाती ।**
**अत्थो जहा पस्सति भूतमत्थं, तं सुत्तकारीहिँ तहा णिबद्धं ॥३६२७॥**

यदि 'ते' तव सूत्रं प्रमाणत्वेन 'इष्टम्' अनुमतं तत इदमप्यक्षिणी निमील्य विचारयतु देवानांप्रियः—सूत्रं तावद् 'अर्थं' व्याख्यानमतिरिच्य 'न याति' न प्रवर्त्तते, नावबुध्यते

---

१ अदिट्ठं विप्प° ताभा० ॥ २ ◁ ▷ एतच्चिह्नमध्यवर्त्ती पाठः भा० कां० एव वर्त्तते ॥
३ °र्थः ॥ ३६२६ ॥ एवमाचार्यदेशीयेनोक्ते सूरिः भा० ॥

इत्यर्थः; अत एव 'अर्थः' निर्युक्ति-भाष्यादिरूपः 'यथा' येन प्रकारेण 'भूतं' सद्भूतम् 'अर्थम्' अभिधेयं पश्यति 'सूत्रकारिभिरपि' गणधर-स्थविरैः 'तत्' सूत्रम् 'तथा' तेनैवाभिप्रायेण निबद्धमवसातव्यम् ॥ ३६२७ ॥ अमुमेवार्थं द्रढयति—

**छाया जहा छायवतो णिबद्धा, संपत्थिए जाति ठिते य ठाति ।**
**अत्थो तहा गच्छति पज्जवेसु, सुत्तं पि अत्थाणुचरं तहेव ॥३६२८॥**

'छाया' प्रतीता, सा यथा 'छायावतः' पुरुषादेः 'निबद्धा' परतन्त्रा सती तस्मिन् सम्प्रस्थिते याति, स्थिते च तस्मिन् साऽपि तिष्ठति; तथाऽत्रापि छायावत्पुरुषस्थानीयोऽर्थो येषु 'पर्यायेषु' भङ्गकादिविषयेषु प्रकारेषु गच्छति सूत्रमपि छायास्थानीयं तस्यैवार्थस्यानुचरं सत् 'तथैव' तेषु तेषु पर्यायेषु गच्छति ॥ ३६२८ ॥ इदमेव स्पष्टतरमाह—

**जं केणई इच्छइ पज्जवेण, अत्थो ण सेसेहि उ पज्जवेहि ।**
**विही व सुत्ते तहि वारणा वा, उभयं व इच्छंति विकोवणट्ठा ॥ ३६२९ ॥**

'अर्थः' व्याख्यानविधिर्येन केनचित् पर्यायेण यत् सूत्रं ग्रहीतुमिच्छति न 'शेषैः' अपरैः पर्यायैः, तत्र स एव प्रमाणयितव्यो न शेषा इति वाक्यशेषः । यथेहैव सूत्रे यथाभावेन विपरिणते आनेतरि यदि सागारिको न पश्यति ततः कल्पते प्रतिग्रहीतुं तद् द्रव्यम् । एतेन पर्यायेण अर्थ आहृतिकामिच्छति, न शेषैरविपरिणत-क्षेत्रच्छिन्नतादिभिः पर्यायैः । एवमर्थेनेप्सितेऽनीप्सिते वा वस्तुनि सूत्रकारः कथं सूत्रं बध्नीयात्? इत्याह—विधिर्वा तत्र सूत्रे वक्तव्यः, यथा अत्रैवाऽऽहृतिकासूत्रे द्वितीये आलापके; 'वारणा वा' प्रतिषेधः, यथेहैव प्रथमे आलापके; 'उभय वा' विधि प्रतिषेधरूपं क्वचिदेकत्रापि सूत्रे शिष्यमतिविकोपनार्थं सूरय इच्छन्ति, यथा "कप्पइ निग्गंथीणं पक्के तालपलंबे भिन्ने पडिग्गाहित्तए, से वि य विहिभिन्ने नो चेव णं अविहिभिन्ने ।" ( उ० १ सू० ५ ) ॥ ३६२९ ॥ अपि च—

**उस्सग्गओ नेव सुतं पमाणं, ण वाऽपमाणं कुसला वयंति ।**
**अंधो य पंगुं वहते स चावि, कहेति दोण्हं पि हिताय पंथं ॥ ३६३० ॥**

'उत्सर्गतः' सामान्येन 'श्रुतं' सूत्रं नैव प्रमाणं न वा अप्रमाणम्, किन्तु पूर्वापराविरुद्धवृद्धसम्प्रदायागतेनार्थेन युक्तं प्रमाणम्, अन्यथा पुनरप्रमाणम्, इत्येवं 'कुशलाः' तीर्थकरगणधरा वदन्ति । तथाहि—यथा किल कश्चिदन्धो देशान्तरं गन्तुमनाः स्वयं मार्गमपश्यन् पङ्गुं गन्तुमशक्तं चक्षुष्मत्तया स्कन्धे विन्यस्य वहति, 'स चापि' पङ्गुः 'द्वयोरपि' आत्मनस्तस्य च 'हिताय' गर्त्ता-प्रपाताद्युपद्रवरक्षणाय 'पन्थानं' मार्गं कथयति । एवमर्थेनाप्रबोधितं सद् अन्धस्थानीयं सूत्रम्, तद् यदा पङ्गुस्थानीयमर्थमात्मन उपरिकृतं वहति तदा सोऽप्यर्थः सूत्रनिश्रया गच्छन् सम्यग्विषयविभागदर्शितया निष्प्रत्यपायं मुक्तिमार्गमुपदिशतीति, अतोऽर्थसव्यपेक्षमेव सूत्रं प्रमाणमिति स्थितम् ॥ ३६३० ॥ अथ "जाणंता वि य केई, सम्मोहं काउ लोभा वा ।" ( गा० ३६२५ ) इति पश्चार्द्धं व्याचष्टे—

**अप्पस्सुया जे अविकोविता वा, ते मोहइत्ता इमिणा सुएण ।**

---

१ °मर्थोऽपीप्सि° भा० कां० ॥

**तेसिं पगासो वि तमंतमेति निसाविहंगेसु व सूरपादा ॥ ३६३१ ॥**

ये 'अल्प[1]श्रुताः' अधीतस्वल्पसूत्रा ये वा 'अविकोविदाः' अगीतार्थास्तान् अनेन सूत्रेण मोहयित्वा विजानन्तोऽपि लोभबहुलतया सागारिकस्याहृतिकापिण्डं ग्राहयन्तीति वाक्यशेषः । 'ते[2]षां च' एवं मोहितानां 'प्रकाशः' प्रस्तुतसूत्रस्यार्थः कथ्यमानोऽपि 'तमस्तमायते' प्रबलान्धकारतया परिणमते । यथा 'निशाविहङ्गाः' उलूकाद्यास्तेषु सूर्यस्य पादाः—किरणाः प्रकाशरूपा अपि महान्धकारीभवन्ति ॥ ३६३१ ॥ आह—यद्येवं ततः "कल्पते सागारिकेणापरिगृहीता आहृतिका" इति प्रस्तुतसूत्रं कथं नीयते ? अत्रोच्यते—

**अहभावविप्परिणए, अदिट्ठ सुयं तु तम्मि उ पउत्थे ।**
**नीहडियाए पुरओ, संछोभगमादिणो दोसा ॥ ३६३२ ॥**

यस्तामाहृतिकां प्रहिणोति नयति वा तस्मिन् यथाभावं—स्वयमेव विपरिणते—न प्रहेष्यामि न नेष्यामीति वा विपरिणाममापन्ने कल्पते । यद्वा तेन तै[3]त्रागच्छता श्रुतम्—यस्य सकाशमहमिदं नयामि स प्रोषितः—ग्रामान्तरं गतः, ततस्तस्मिन् प्रोषिते सति स नेता 'न नयामि' इति विपरिणतः, अत्रान्तरे साधवः समायाताः ततः सागारिकेणादृष्टं कल्पते प्रतिग्रहीतुम्, अत्र सूत्रनिपातः । तथा वक्ष्यमाणसूत्रे भणिष्यमाणायां निर्हृतिकायां सागारिकस्य पुरतो गृह्यमाणायां संछोभकः—प्रक्षेपक आदिशब्दाद् निष्काशन-शय्याव्यवच्छेदादयश्च दोषा भवन्ति, अतः सागारिकस्य पुरतः सा न ग्रहीतव्या ॥ ३६३२ ॥

अत्र कथं स तत्राहृतिकां नयन् विपरिणमति ? इत्युच्यते—

**नीयं पि मे ण घेच्छति, धम्मो व जतीण होति देंतस्स ।**
**वसणऽब्भुदओ वा सिं, भंडणकम्मे व अद्दण्णा ॥ ३६३३ ॥**

मया तत्र नीतमप्येतद् घृतपूरादिकं स न ग्रहीष्यति, यद्वा यतीनामेवंविधं द्रव्यं ददतो मम धर्मो महान् भवति, अथवा येषां समीपे तद् नीयते तेषां स्वजनमरण-धनहरणादिकं व्यसनं शोककारणमजनिष्ट, 'अभ्युदयो वा[4]' कोऽप्युत्सवविशेषस्तेषां वर्त्तते, 'भण्डनं वा' कलहस्तदानीं[5] महता भरेण वर्त्तते, 'कर्मणि वा' कृष्यादौ ते 'अद्दन्नाः' अक्षणिकाः सन्ति ततो नीतमपि नामी ग्रहीष्यन्ति ॥ ३६३३ ॥

**इति भावम्मि णियत्ते, तेहि अदिट्ठस्स कप्पती गहणं ।**
**छेत्तादिणिग्गतेसु व, कप्पति गहणं जहिं सुत्तं ॥ ३६३४ ॥**

'इति' अनन्तरोक्तप्रकारेण भावे निवृत्ते सति येषां समीपे तद् नीयते 'तैः' शय्यातरमानुषैरदृष्टस्य कल्पते ग्रहणम् । यद्वा क्षेत्र[6]-खलादौ निर्गतेषु तेषु ग्रहणं कल्पते । एवं यत्र सूत्रमवतरति स एष विषय उक्त इति ॥ ३६३४ ॥

---

१ °ल्पसूत्राः' अधी° त० डे० ॥ २ तेषां 'प्रकाशः' अर्थः स चेह "भावो जाव न छिज्जइ" (गा० ३६२३) इत्यादिप्रागुक्तगाथारूपो गृह्यते, सोऽपि° भा० ॥ ३ तथा गच्छता भा० कां० विना ॥ ४ वा' विवाहादिक उत्सव° भा० ॥ ५ °हस्तेषां तदानीं भा० ॥ ६ ताटी० कां० मो० ले० विनाऽन्यत्र—°त्र-खलादिनिर्ग° भा० । °त्र-कालादौ निर्ग° त० डे० ॥

सूत्रम्—

**सागारियस्स नीहडिया परेण अपडिग्गाहिता, तम्हा दावए नो से कप्पइ पडिग्गाहित्तए ।**

**सागारियस्स नीहडिया परेण पडिग्गाहिया, तम्हा दावए एवं से कप्पइ पडिग्गाहित्तए १८ ॥**

◁ अस्य सम्बन्धः प्रागेवोक्तः । व्याख्याऽपि प्राग्वत् । नवरं ▷ सागारिकद्रव्यं यदन्यत्र नीयते सा निर्हृतिकेत्युच्यते । सा यस्य समीपे प्रेषिता तेनाप्रतिगृहीता न कल्पते, प्रतिगृहीता तु कल्पते ॥ अथ भाष्यम्—

**पढम-चउत्था पिंडो, बितिओ ततिओ य होति उ अपिंडो ।**
**पुरतो ते वि विवज्जे, भद्दग-पंतेहिँ दोसेहिँ ॥ ३६३५ ॥**

निर्हृतिकायामपि द्रव्यतः प्रतिगृहीता न भावत इत्यादयश्चत्वारो भङ्गाः । नवरमत्र प्रथम-चतुर्थौ भङ्गौ शय्यातरपिण्डः, एकत्र भावतोऽपरत्र तु द्रव्यतो भावतश्च परेणाप्रतिगृहीतत्वात् । द्वितीयस्तृतीयश्च भङ्गो न भवति शय्यातरपिण्डः, परं सागारिकस्य पुरतः 'तावपि' द्वितीय-तृतीयभङ्गौ भद्रक-प्रान्तदोषभयाद् विवर्जयेयुः ॥ ३६३५ ॥

तत्र भद्रकस्तन्निश्रया प्रक्षेपं कुर्यात्, यस्तु प्रान्तः स इदं ब्रूयात्—

**केणावि अभिप्पाएण दिज्जमाणं पि णेच्छिउं पुव्विं ।**
**अम्हे ओभावेंता, पुरओ चिय णे पडिच्छंति ॥ ३६३६ ॥**

अमी श्रमणकाः केनाप्यभिप्रायेण पूर्वमस्माभिर्दीयमानमपि 'अनीप्सित्वा' अप्रतिगृह्य साम्प्रतं बहुजनमध्येऽस्मानपभ्राजयन्त इत्थमस्माकमेव पुरत इदमेव द्रव्यं प्रतीच्छन्ति ॥ ३६३६ ॥

**किं तं न होति अम्हं, खेत्तंतरियं व किं विसमदोसं ।**
**सुव्वत्त सोत्तिगादिव, चरेंति जतिणो वि डंभेणं ॥ ३६३७ ॥**

किमेतद् द्रव्यमिदानीमस्माकं सत्कं न भवति?, अथ 'क्षेत्रान्तरमागतम्' इति कृत्वा कल्पते तदप्यसङ्गतम्, यतः क्षेत्रान्तरितं विषं किमदोषं भवति? तदमी सुव्यक्तं 'श्रोत्रिया इव' धिग्जातीया इव यतयोऽपि सन्तो दम्भेन चरन्ति । किमुक्तं भवति?—धिग्जातीयाः 'अशूद्रान्निका वयम्' इति कृत्वा शूद्रगृहं न समुद्दिशन्ति परं तन्दुलादीनि गृह्णन्ति; यथा तेषा-मशूद्रान्नव्रतं दम्भ एवममीषामपि शय्यातरपिण्डपरिहारादिव्रतं दम्भ इव लक्ष्यते ॥ ३६३७ ॥

अथाहृतिका निर्हृतिका वा येषु कारणेषु गृह्यते तान्याह—

**दुविहे गेलन्नम्मी, णिमंतणे दव्वदुल्लभे असिवे ।**
**ओमोदरिय पओसे, भए य गहणं अणुण्णायं ॥ ३६३८ ॥**

---

१ ◁ ▷ एतदन्तर्गतः पाठः भा० नास्ति ॥

अस्य व्याख्या प्राग्वत् ( गा० १५५० ) ॥ ३६३८ ॥ अत्र निमन्त्रणापदं विशेषतो भावयति—

**निब्बंधनिमंतेंते, भणंति भज्जि दलाहि जा एसा ।**
**तं पुण अविगीतेसुं, गीया इतरं पि गेण्हंति ॥ ३६३९ ॥**

शय्यातरं महता निर्बन्धेन निमन्त्रयमाणं साधवो भणन्ति—या तवैषा भर्जिका–प्रहेणकं आहृतिका निर्हृतिका वा तां प्रयच्छ । 'तत् पुनः' आहृतिकाया निर्हृतिकाया वा ग्रहणमगीतार्थेषु कुर्वन्ति । ये तु गीतार्थास्ते 'इतरमपि' सागारिकपिण्डमपि गृह्णन्ति ॥ ३६३९ ॥

**णेच्छंतमगीतं एतिणेव सुत्तेण पत्तियावेंति ।**
**सच्छंदेण ण भणिमो, फुड-वियडमिणं भणति सुत्तं ॥ ३६४० ॥**

अथागीतार्थ आहृतिकां निर्हृतिकां वा नेच्छति ग्रहीतुं तत एतेनैव सूत्रेण प्रत्याययन्ति, यथा—आर्याः ! वयं 'स्वच्छन्देन' स्वाभिप्रायेण न भणामः, किन्तु 'स्फुट-विकटम्' अतीवव्यक्ताक्षरमिदमेव सूत्रं भणति, यथा—कल्पते सागारिकेणाप्रतिगृहीता आहृतिका परेण च प्रतिगृहीता निर्हृतिकेति ॥ ३६४० ॥ अपि च—

**जो तं जगप्पदीवेहिँ पणीयं सव्वभावपण्णवणं ।**
**ण कुणति सुतं पमाणं, ण सो पमाणं पवयणम्मि ॥ ३६४१ ॥**

'तत्' सकलत्रिलोकीप्रसिद्धं 'जगत्प्रदीपैः' भगवद्भिस्तीर्थकरैः प्रणीतं सर्वेषाम्–उत्सर्गाऽपवाद-निश्चय-व्यवहारादीनां भावानां प्रज्ञापना–प्ररूपणा यत्र तत् तथाविधं श्रुतं यः कश्चित् प्रमाणं न करोति नासौ 'प्रवचने' चतुर्वर्णसङ्घमध्ये प्रमाणं भवति ॥ ३६४१ ॥

अमुमेवार्थमन्योक्तिभङ्गया द्रढयति—

**जस्सेव पभावुम्मिल्लिताइँ तं चेव हयकतग्घाइं ।**
**कुमुदाइँ अप्पसंभावियाइँ चंदं उवहसंति ॥ ३६४२ ॥**

यस्यैव प्रभावेणोन्मीलितानि–प्रबुद्धानि तमेव चन्द्रं कुमुदान्युपहसन्तीति सण्टङ्कः । कथम्भूतानि ? इत्याह—हतकृतघ्नानि, हतशब्दो निन्दावाचकः, कृतघ्नतया पापानीत्यर्थः । आत्मानं सम्भावयन्ति–'वयमेव शोभनानि' इत्यभिमन्यन्ते तच्छीलानि च यानि तान्यात्मसम्भावीनि, ◁ कुत्सितान्यात्मसम्भावीनि आत्मसम्भाविकानि । ▷[1] एवंविधानि परमोपकारिणमपि चन्द्रं 'वयमतीवावदातानि, भवाँस्तु सकलङ्कत्वान्न तथा' इति स्वकीयश्वेतप्रभापटलेनोपहसन्तीवोपहसन्तीत्युच्यते । एवमार्याः ! भवन्तोऽपि यस्यैव प्रभावेणोन्मीलितविवेकलोचनाः सञ्जाताः तदेव श्रुतं साम्प्रतमप्रमाणयन्तो हतकृतघ्ना इव लक्ष्यन्ते । एवं प्रज्ञापिताः सन्तः प्रतिपद्यन्ते सूत्राशातनापातकभयादगीतार्था अप्याहृतिकादिग्रहणम् ॥ ३६४२ ॥

**॥ आहृतिका-निर्हृतिकाप्रकृतं समाप्तम् ॥**

---

१ ◁ ▷ एतन्मध्यगतः पाठः भा० एव वर्त्तते ॥

## अं शि का प्र कृ त म्

सूत्रम्—

**सागारियस्स अंसियाओ अविभत्ताओ अव्वोच्छिन्नाओ अव्वोगडाओ अनिज्जूढाओ, तम्हा दावए नो से कप्पइ पडिग्गाहित्तए।**

**सागारियस्स अंसियाओ विभत्ताओ वोच्छिन्नाओ वोगडाओ निज्जूढाओ, तम्हा दावए एवं से कप्पइ पडिग्गाहित्तए १९ ॥**

अथास्य सम्बन्धमाह—

**छिन्नममत्तो कप्पति, अच्छिण्णो ण कप्पती अह तु जोगो।**
**पत्तेगं वा भणितो, इयाणि साहारणं भणिमो ॥ ३६४३ ॥**

आहृतिका-निर्हृतिकापिण्डवदंशिकापिण्डोऽपि सागारिकेण 'छिन्नममत्वः' 'ममायम्' इति भावाद् निवर्त्तितः कल्पते, अच्छिन्नममत्वस्तु न कल्पते। अथैषः 'योगः' सम्बन्धः। यद्वा 'प्रत्येकम्' एकस्यैव सागारिकस्य सत्कं पिण्डमाश्रित्य विधिर्भणितः। इदानीं तु सागारिकस्यान्येषां च साधारणं पिण्डमधिकृत्य विधिं भणामः ॥ ३६४३ ॥

अनेन सम्बन्धेनायातस्यास्य व्याख्या—सागारिकस्य या अंशिका तस्या अन्येषामंशिकाभ्योऽविभक्ताया अव्यवच्छिन्नाया अव्याकृताया अनिर्गूढाया मध्यात् कश्चिद् भक्त-पानं दद्यात्, नो "से" तस्य साधोः कल्पते प्रतिग्रहीतुम्। सागारिकस्यांशिका विभक्ता व्यवच्छिन्ना व्याकृता निर्गूढा[1] च यस्माद् राशेर्भवति तस्माद् दद्यात्, एवं "से" तस्य कल्पते प्रतिग्रहीतुमिति सूत्रसङ्क्षेपार्थः ॥ अथ **निर्युक्ति**विस्तरः—

**सागारियस्स अंसिय, अविभत्ता खेत्त-जंत-भोज्जेसु।**
**खीरे मालाकारे, सगारदिट्ठं परिहरंति ॥ ३६४४ ॥**

सागारिकस्यांशिका अविभक्ता न कल्पते। सा च क्षेत्रे वा यन्त्रे वा भोज्येषु वा क्षीरे वा मालाकारे वा सम्भवति। अत्र च सागारिकदृष्टं सर्वत्रापि परिहरन्तीति **निर्युक्तिगाथा**समासार्थः ॥ ३६४४ ॥ अथैनामेव विवरीषुः सूत्रस्य विषमपदानि तावद् विवृणोति—

**अंसो ति व भागो ति व, एगट्ठा पुंज एव अविभत्ता।**
**कतभागो वि ण सव्वो, वोच्छिज्जति सा अवोच्छिण्णा ॥ ३६४५ ॥**

अंश इति वा भाग इति वा एकार्थे पदे। अंश एवांशिका, स्वार्थे[2] कः प्रत्ययः। तत्र यावान् सागारिकादीनां साधारणश्चोल्लक उपस्कृतस्तावानद्याप्यखण्डः पुञ्ज एव[3] यदाऽऽस्ते न

---

१ निर्यूढा मो॰ ले॰ ॥ २ स्वार्थिकः कप्रत्य° भा॰ ॥ ३ भा॰ विनाऽन्यत्र—°व अथास्ते त॰ डे॰ मो॰ ले॰। °व......आस्ते कां॰। °व अयस्ते ताटी॰ ॥

भागादिविवक्षा कृता सा अंशिका अविभक्तेत्युच्यते । यत्र तु भागाः कृताः परं मूलराशिः कृतभागोऽपि न सर्वो व्यवच्छिद्यते सा अव्यवच्छिन्ना ॥ ३६४५ ॥

**अव्वोगडा उ तुज्झं, ममं तु वा जा ण ताव णिद्दिसति ।**
**तत्थेव अच्छमाणी, होति अणिज्जूहिया अंसी ॥ ३६४६ ॥**

सर्वेषामपि समा भागाः स्थापिताः परम् 'एष भागस्तव, एष पुनर्मम' इत्येवं यां न तावद् निर्दिशति साऽव्याकृताऽभिधीयते । या तु निर्दिष्टा परमद्यापि न ततोऽन्यत्र नीयते सा अंशिका तत्रैव तिष्ठन्ती अनिर्गूढा भवति । एवंविधा न कल्पते प्रतिग्रहीतुमिति ॥ ३६४६ ॥

अथ क्षेत्रद्वारं व्याचष्टे—

**सीताइ जण्णो पहुगादिगा वा, जे कप्पणिज्जा जतिणो भवंति ।**
**साली-फलादीण व णिक्कयम्मि, पडेज्ज तेल्लं लवणं गुलो वा ॥ ३६४७ ॥**

सागारिकस्यान्येषां च साधारणे क्षेत्रे 'सीतायाः' हलपद्धतिदेवतायाः 'यज्ञः' पूजा भवेत् तत्र शाल्यादिद्रव्यं यद् उपस्कृतम्, पृथुकादयो वा ये तत्र क्षेत्रे यतीनां कल्पनीया भवन्ति, यद् वा तत्र शालीनां—कलमादीनां फलानां—चिर्भटादीनाम् आदिशब्दाद् योवारिप्रभृतीनां धान्यानां विक्रीयमाणानां निष्क्रये तैलं वा लवणं वा गुडो वा पतेत्, एषा सर्वाऽपि क्षेत्रविषया सागारिकांशिका ॥ ३६४७ ॥ यन्त्रद्वारमाह—

**जंते रसो गुलो वा, तेल्लं चक्कम्मि तेसु वा जं तू ।**
**विक्केज्जंते पडितं, पवत्तणंते य पगयं वा ॥ ३६४८ ॥**

यन्त्रमपि सागारिकस्यान्यैः सह साधारणं स्यात् । तच्च द्विधा—इक्षुयन्त्रं तिलयन्त्रं च । तत्रेक्षुयन्त्रे कोल्हुकाख्ये[3] रसो गुडो वा भवेत् । तिलयन्त्रं तु चक्रमुच्यते, तत्र तैलं तिला-ऽतसी-सर्षपादीनां भवेत् । 'तेषु वा' रसादिषु विक्रीयमाणेषु 'यत् तु' तन्दुल-घृत-वस्त्रादिकमापतितम्, अथवा यन्त्रस्य प्रवर्त्तने—प्रथमप्रारम्भे 'अन्ते वा' परिसमाप्तौ यत् ते सम्भूय 'प्रकृतं' प्रकरणं कुर्वन्ति, एषा यन्त्रविषया अंशिका ॥ ३६४८ ॥ अथ भोज्य-क्षीरद्वारे व्याख्यानयति—

**गण-गोट्ठिमादि भोज्जा, भुत्तुव्वरियं व तत्थ जं किंचि ।**
**भाउगमादीण पओ, अविभत्तं जं व गोवेणं ॥ ३६४९ ॥**

गणः—मल्लादिगणरूपः गोष्ठी—महत्तरादिपुरुषपञ्चकपरिगृहीता तयोः, आदिशब्दादन्यस्यापि महाजनस्य साधारणानि यानि भोज्यानि—सङ्खडयः यद् वा किञ्चिद् मोदकचूरिप्रभृतिकं तत्र भुक्तोद्धरितं द्रव्यम्, एषा भोज्यविषया सागारिकांशिका । तथा सागारिकसम्बन्धिनां भ्रातृ-भ्रातृव्यादीनां 'पयः' दुग्धं यावदद्यापि सागारिकेण सहाविभक्तम्, यद् वा दुग्धं वृत्तिच्छिन्नं सागारिकदुग्धमध्यादद्यापि गोपेनाविभक्तम्, एषा क्षीरविषया सागारिकांशिका ॥ ३६४९ ॥

मालाकारद्वारमाह—

**पुप्फपणिएण आरामिगाण पडियं ण जाव उ विरिकं ।**
**पक्खेवगादि समुद्दं, अचियत्तादी य पुव्वुत्ता ॥ ३६५० ॥**

१ °निर्यूढा भा० मो० ले० ताटी० ॥ २ °द् यावा° भा० ॥ ३ कोल्हुका° भा० कां० विना ॥

पुष्पाणां पणितेन- विक्रयेण यद् 'आरामिकाणां' मालिकानां घृतादिकं पतितं तद् आरामस्वामिना सागारिकेण यावदद्यापि न 'विरिक्तं' विभक्तं तावदेषाऽपि सागारिकांशिका । अथ च क्षेत्रादिषु मालाकारान्तेषु द्वारेषु यदि सागारिकस्य सम्मुखं पश्यतस्तदीयायामंशिकायामविभक्तायां साधवो भक्तादिकं गृह्णन्ति तदा भद्रककृताः प्रक्षेपकादयः प्रान्तकृताः पुनरप्रीतिकादयः पूर्वोक्ता दोषा मन्तव्याः ॥ ३६५० ॥ मालाकारद्वारं प्रकारान्तरेणाह—

**अहवा वि मालकारस्स अंसियं अवणयंति भुज्जेसु ।**
**सो य सगारो तेसिं, तं पि ण इच्छंति अविभत्तं ॥ ३६५१ ॥**

अथवा मालाकारस्य पुष्पावचयनादिनिर्विष्टामंशिकां 'भोज्येषु' शालि-दाल्यादिषु यावत् तस्य आभाव्यं तावन्मात्रामगारिणः प्रागेवापनयन्ति, स च मालाकारः 'तेषां' साधूनां सागारिकः, अतो यावदसौ मालाकारांशिका अविभक्ता तावत् तामपि ग्रहीतुं नेच्छन्ति ॥३६५१॥

द्वितीयपदमाह—

**गेलण्णमाईसु उ कारणेसु, माऽदिप्पसंगो ण य सव्वे गीता ।**
**गिण्हंति पुंजा अविरेडियातो, तस्सऽण्णतो वा वि विरेडियाओ ॥ ३६५२ ॥**

ग्लानत्वा-ऽवमौदर्यादिषु कारणेषु संस्तरणाभावे 'मा प्रथमत एव शय्यातरपिण्डग्रहणेऽतिप्रसङ्गो भवतु' इति कृत्वा, न च ते सर्वेऽपि गीतार्था अतः प्रथमम् 'अविरिक्ताद्' अन्यैः समं साधारणात् पुञ्जात्, ततः 'अन्यस्मादपि' विरिक्तात् 'तस्य' सागारिकस्य सत्कात् पुञ्जाद् गृह्णन्ति ॥ ३६५२ ॥

॥ अंशिकाप्रकृतम् ॥

---

## पूज्यभक्तउपकरणप्रकृतम्

सूत्रम्—

**सागारियस्स पूयाभत्ते उद्देसिए चेइए पाहुडियाए, सागारियस्स उवगरणजाए निट्ठिए निसट्ठे पाडिहारिए, तं सागारिओ देज्जा[2] सागारियस्स परिजणो देज्जा[3], तम्हा दावए नो से कप्पइ पडिगाहित्तए २० ॥**

अथास्य सूत्रस्य कः सम्बन्धः ? इत्याह—

**दव्वे छिण्णमछिण्णं, ण कप्पती कप्पए य इति वुत्तं ।**
**इदमण्णं पुण भावे, अव्वोच्छिण्णम्मि पडिसिद्धं ॥ ३६५३ ॥**

---

१ अत्र च भा० ॥ २-३ देइ भा० ॥

द्रव्यतः 'छिन्नं' विभक्तं सद् अंशिकाद्रव्यं कल्पते, तदेव 'अच्छिन्नं' 'अविभक्तं' न कल्पते इति प्रोक्तम् । इदं पुनरन्यद् अस्मिन् सूत्रे सागारिकस्याऽव्यवच्छिन्ने भावे प्रतिषिद्धम्, न कल्पते इत्यर्थः ॥ ३६५३ ॥

**अविसेसिओ व पिंडो, हेट्ठिमसुत्तेसु एसमक्खातो ।**
**इह पुण तस्स विभागो, सो पुण उवकरण भत्ते वा ॥ ३६५४ ॥**

अथवा अधस्तनसूत्रेषु 'अविशेषितः' विभागरहितः 'एषः' सागारिकपिण्ड आख्यातः । 'इह पुनः' प्रस्तुतसूत्रे 'तस्य' सागारिकपिण्डस्य विभाग उच्यते । कथम्? इत्याह—'स पुनः' पिण्ड उपकरणं वा भवेद् भक्तं वा इति ॥ ३६५४ ॥

अनेन सम्बन्धेनायातस्यास्य व्याख्या—सागारिकस्य ये पूज्याः—स्वामि-कलाचार्यादयस्तदर्थं भक्तम्—अशनादि पूज्यभक्तम्, तच्चोद्देशः—सङ्कल्पस्तेन निर्वृत्तमौद्देशिकम्, तानेव पूज्यानुद्दिश्य कृतमित्यर्थः । ततस्तेषामेव प्राभृतिकायां 'चेतितं' ढौकनीकृतम्, उपनीतमिति भावः । तथा सागारिकस्य उपकरणजातं—वस्त्र-कम्बलादिकं पूज्यानामर्थाय 'निष्ठितं' निष्पादितम्, ततः 'निसृष्टं' पूज्येभ्यः प्रदत्तम् । 'तच्च' भक्तमुपकरणं वा तेभ्यः प्रातिहारिकं दत्तम्, भुक्तावशेषं सदिदं भूयोऽप्यस्माकं प्रत्यर्पणीयमिति भावः । तद् एवंप्रकारं संयतानां सागारिको वा दद्यात्[1] सागारिकस्य परिजनो वा दद्यात्[3] किं कल्पते? न वा? इत्याह—(ग्रन्थाग्रं २४९२०) 'तस्मात्' पूज्यभक्तात् पूज्योपकरणाद्वा प्रातिहारिकाद् दद्यात् परं न कल्पते प्रतिग्रहीतुमिति सूत्रार्थः[5] ॥

अथ भाष्यम्—

**संबंधी सामि गुरू पासंडी वा वि तं समुद्दिस्स ।**
**पूया उक्खित्तं ति य, पट्ठगभत्तं च एगट्ठा ॥ ३६५५ ॥**

सागारिकस्यैव यः 'सम्बन्धी' पितृव्य-मातुलादिर्यो वा तस्य 'स्वामी' प्रभुः 'गुरुर्वा' कलाचार्यः यस्य वा पाषण्डिनो भक्तः स पूज्य उच्यते तं समुद्दिश्य कृतं पूज्यभक्तमुच्यते । "तत्त्वभेद-पर्यायैर्व्याख्या" इति वचनादेकार्थिकान्याह—पूज्यभक्तम् उत्क्षिप्तभक्तं पट्टकभक्तम्, एतान्येकार्थानि पदानि ॥ ३६५५ ॥

**चेइयकडमेगट्ठं, पाहुडिय पहेणगं च एगट्ठा ।**
**उवगरणं वत्थादी, जाव विभागो व जोग्गं वा ॥ ३६५६ ॥**

चेतितं कृतं चेत्येकार्थम् । प्राभृतिका प्रहेणकमिति च एकार्थे । उपकरणं वस्त्रादिकम् । वस्त्रं चेह क्षौमिकं गृह्यते, तच्च परिधानं पावरणं वा पूज्यानां दातव्यम्, आदिग्रहणात् पाषण्डिनः प्रतिग्रहो वा कम्बलं वा एकादशप्रतिमां प्रतिपित्सोर्वा रजोहरणं दातव्यम्, एवमादिको यावान् विभागोऽत्र घटते यद् वा यस्योपकरणं योग्यं तद् वक्तव्यम् ॥ ३६५६ ॥

---

१ °तिकया 'चे' भा० ॥ २-३ ददाति भा० ॥ ४ ग्रन्थाग्रम्—९००० डे० ताटी० । ग्रन्थाग्रम्—१०००० मो० ले० ॥ ५ अत्रान्तरे मो० ले० प्रतिषु: द्वितीयः खण्डः समाप्यते । अन्ते च इति श्रीकल्पवृत्तिद्वितीयखण्डं समाप्तम् इत्युल्लिखितं वर्तते ॥ ६ °दिशब्दात् पा° भा० ॥

**णिट्ठिय कडं च उक्कोसकं च दिण्णं तु जाणसु णिसट्ठं ।**
**भुत्तुव्वरियं पडिहारियं तु इयरं पुणो चत्तं ॥ ३६५७ ॥**

निष्ठितं कृतमित्येकोऽर्थः । यद्वा यद् उत्कृष्टं वस्त्रादि तद् निष्ठां प्राप्तमिति कृत्वा निष्ठितमुच्यते । यत्तु दत्तं तद् निसृष्टं जानीहि । भुक्तोद्वरितं भूयोऽस्माकं प्रत्यर्पणीयमिति यत् प्रतिज्ञातं तत् प्रातिहारिकम् । 'इतरत् पुनः' अप्रातिहारिकं सागारिकेण भक्तमुपकरणं वा यत् 'त्यक्तं' निर्दयतया दत्तमित्यर्थः । [1]⊲ एवंविधं प्रातिहारिकदत्तं शय्यातरपिण्ड इति कृत्वा न ग्रहीतव्यम् ⊳ ॥ ३६५७ ॥

सूत्रम्—

**सागारियस्स पूयाभत्ते उद्देसिए चेइए जाव पाडिहारिए, तं नो सागारिओ देज्जा नो सागारियस्स परिजणो देज्जा, सागारियस्स पूया देज्जा, तम्हा दावए नो से कप्पइ पडिग्गाहित्तए २१ ॥**

अस्य व्याख्या प्राग्वत् । नवरम्—अत्र न सागारिको न वा सागारिकस्य परिजनो देयात्[2] किन्तु सागारिकस्य 'पूज्यः' सम्बन्धि-स्वाम्यादिर्दद्यात्[3] तथापि न कल्पते, प्रातिहारिकतया दत्तमिति कृत्वा सागारिकपिण्डत्वात् ॥

सूत्रम्—

**सागारियस्स पूयाभत्ते उद्देसिए चेइए पाहुडियाए सागारियस्स उवगरणजाए निट्ठिए निसट्ठे अपाडिहारिए, तं सागारिओ देइ सागारियस्स परिजणो देइ, तम्हा दावए नो से कप्पइ पडिग्गाहित्तए २२ ॥**

अयमप्रातिहारिकतया सागारिकपिण्डो न भवति, परं सागारिकस्तत्परिजनो वा ददातीति कृत्वा प्रक्षेपकादिदोषसद्भावाद् न कल्पते ॥

सूत्रम्—

**सागारियस्स पूयाभत्ते जाव अपाडिहारिए, तं नो सागारिओ देइ, नो सागारियस्स परिजणो देइ, सागारियस्स पूया देइ, तम्हा दावए एवं से कप्पइ पडिगाहित्तए २३ ॥**

---

१ ⊲ ⊳ एतच्चिह्नगतः पाठः भा० नास्ति ॥ २ ददाति कि° भा० ॥ ३ °र्ददाति त° भा० ॥

अत्र सागारिकेणादृष्टं तत्पूज्योऽप्रातिहारिकं ददातीति कृत्वा कल्पते, परं द्वितीयपदे, नोत्सर्गतः ॥　यत आह—

**पूयाभत्ते चेतिएँ, उवकरणे णिट्ठिते णिसट्ठे य ।**
**तं पि ण कप्पति घेत्तुं, पक्खेवगमादिणो दोसा ॥ ३६५८ ॥**

पूज्यानामर्थाय यद् भक्तं 'चेतितं' कृतम्, यच्चोपकरणं निष्ठितं तत् तेभ्यः 'निसृष्टम्' अप्रातिहारिकतया प्रदत्तं तदपि न कल्पते प्रतिग्रहीतुम्, प्रक्षेपकादयो दोषा भद्रक-प्रान्तकृता मा भूवन्निति ॥ ३६५८ ॥

**॥ पूज्यभक्त-उपकरणप्रकृतं समाप्तम् ॥**

## उ प धि प्र कृ त म्

सूत्रम्—

**कप्पइ निग्गंथाण वा निग्गंथीण वा इमाइं पंच वत्थाइं धारित्तए वा परिहरित्तए वा, तंजहा— जंगिए भंगिए साणए पोत्तए तिरीडपट्टे नामं पंचमे २४ ॥**

अथास्य सूत्रस्य कः सम्बन्धः ? इत्याह—

**उवगरणं चिय पगयं, तस्स विभागो उ बितिय-चरिमम्मि ।**
**आहारो वा वुत्तो, इदाणि उवधिस्स अधिकारो ॥ ३६५९ ॥**

पूर्वसूत्रे तावदुपकरणमेव प्रकृतम्, अतः 'तस्य' उपकरणस्य 'विभागः' विशेषप्ररूपणं द्वितीयोद्देशकस्य चरमे अन्त्ये सूत्रद्वये क्रियते । अथवा पूर्वसूत्रेषु सप्रपञ्चमाहार उक्तः, इदानीं त्वस्मिन् सूत्रे 'उपधि(धे)रधिकारः' यादृश उपधिर्ग्रहीतुं कल्पते तादृक् प्रतिपाद्यते इति भावः ॥ ३६५२ ॥

**ताइं विरूवरूवाइँ देइ वत्थाणि ताणि वा घेत्तुं ।**
**सेस जतीणं देज्जा, तत्थ इमे पंच कप्पंति ॥ ३६६० ॥**

अथवा 'तानि' परिधान-प्रावरण-कम्बलादीनि विरूपरूपाणि वस्त्राणि यदा सागारिकोऽप्रातिहारिकतया ददाति तदा तानि गृहीत्वा पूज्यः कलाचार्यादिः 'शेषाणि' भुक्तोद्वरितानि यतीनां दद्यात्, 'तत्र' तेषु दीयमानेष्वमूनि पञ्च वस्त्राणि कल्पन्ते ॥ ३६३० ॥

अनेन सम्बन्धेनायातस्यास्य व्याख्या—कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा इमानि पञ्च वस्त्राणि 'धारयितुं वा' परिग्रहे धर्तुं 'परिहर्तुं वा' परिभोक्तुम् । तद्यथा—जङ्गमाः—त्रसाः तदवयवनिष्पन्नं जाङ्गमिकम्, सूत्रे प्राकृतत्वाद् मकारलोपः, भङ्गा—अतसी तन्मयं भाङ्गिकम्,

सनसूत्रमयं सानकम्, 'पोतकं' कार्पासिकम्, तिरीटः—वृक्षविशेषस्तस्य यः पट्टो वल्कलक्षणस्तन्निष्पन्नं तिरीटपट्टकं नाम पञ्चमम् । एष सूत्रसङ्क्षेपार्थः ॥

अथ विस्तरार्थं भाष्यकृद् बिभणिषुराह—

**जंगमजायं जंगिय, तं पुण विगलिंदियं च पंचिंदी ।**
**एकेकं पि य एत्तो, होति विभागेणऽणेगविहं ॥ ३६६१ ॥**

जङ्गमेभ्यो जातं जङ्गिकम्, तत् पुनर्विकलेन्द्रियनिष्पन्नं पञ्चेन्द्रियनिष्पन्नं वा । अनयोर्मध्ये एकैकमपि विभागेन चिन्त्यमानमनेकविधं भवति ॥ ३६६१ ॥ तद्यथा—

**पट्ट सुवन्ने मलए, अंसुग चीणंसुके च विगलेंदी ।**
**उण्णोट्टिय मियलोमे, कुतवे किट्टे त पंचेंदी ॥ ३६६२ ॥**

"पट्ट" त्ति पट्टसूत्रजम्, "सुवन्ने" त्ति सुवर्णवर्णं सूत्रं केषाञ्चित् कृमीणां भवति तन्निष्पन्नं सुवर्णसूत्रजम्, **मलयो** नाम—देशस्तत्सम्भवं मलयजम्, अंशुकः—श्लक्ष्णपट्टः तन्निष्पन्नमंशुकम्, चीनांशुको नाम—कोशिकाराख्यः कृमिः तस्माद् जातं चीनांशुकम्, यद्वा **चीना**[1] नाम जनपदः तत्र यः श्लक्ष्णतरः पट्टस्तस्माद् जातं चीनांशुकम्, एतानि विकलेन्द्रियनिष्पन्नानि । तथा और्णिकमौष्ट्रिकं मृगरोमजं चेति प्रतीतानि, कुतपो जीणम्, किट्ट—तेषामेवोर्णारोमादीनामवयवाः तन्निष्पन्नं वस्त्रमपि किट्टम्, एतानि पञ्चेन्द्रियनिष्पन्नानि द्रष्टव्यानि ॥ ३६६२ ॥[2]

अथ भाङ्गिकादीनि चत्वार्यप्येकगाथया व्याचष्टे—

**अतसी-वंसीमादी, उ भंगियं साणियं च सणवके ।**
**पोत्तय कप्पासमयं, तिरीडरुक्खा तिरिडपट्टो ॥ ३६६३ ॥**

अतसीमयं वा "वंसि" त्ति वंशकरीलस्य मध्याद् यद् निष्पद्यते तद् वा, एवमादिकं भाङ्गिकम् । यत् पुनः सनवृक्षवल्काद् जातं तद् वस्त्रं सानकम् । पोतकं कर्पासमयम् । तिरीटवृक्षवल्काद् जातं तिरीटपट्टकम् ॥ ३६६३ ॥

**पंच परूवेऊणं, पत्तेयं गेण्हमाण संतम्मि ।**
**कप्पासिगा य दोण्णि उ, उण्णिय एको य परिभोगो ॥ ३६६४ ॥**

एवं पञ्च वस्त्राणि प्ररूप्य सम्प्रति ग्रहणविधिरभिधीयते—'प्रत्येकम्' एकैकस्य साधोः प्रायोग्याणि वस्त्राणि गृह्णता 'सति' विद्यमाने लाभे द्वौ कल्पौ कार्पासिकौ एकश्चौर्णिक इत्येवं त्रयः कल्पा ग्रहीतव्याः । परिभोगश्चामीषां वक्ष्यमाणविधिना विधातव्यः । एषा **पुरातना** गाथा ॥ ३६६४ ॥ अथैनामेव विवृणोति—

**एकोम्मि सोत्ति दोण्णी, तिण्णि वि गेण्हिज्ज उण्णिए लहुओ ।**
**पाउरमाणे चेवं, अंतो मज्झे व जति उण्णी ॥ ३६६५ ॥**

एक और्णिकः कल्पो द्वौ वा सौत्रिकौ प्रत्येकं ग्रहीतव्यौ । अथ त्रीनपि कल्पान् सौत्रिकान्

1 चीनो नाम भा॰ कां॰ ताटी॰ विना ॥ 2 "पंचिंदियं मियलोमं सलोमं मूसगलोमं वा, कुतवं छागलं, किट्टं एतेसिं चेवावयवणिप्फण्णं" इति चूर्णौ । "उण्णिय-उट्टिया प्रतीता, मियलोमे पच्चएयाणं रोमा, कुतवो तस्सेव अवयवा, किट्टिसं सछगलियारोमं, एयाणि पंचिंदियणिप्फण्णाणि" इति विशेषचूर्णौ ॥

और्णिकान् वा गृह्णाति ततो मासलघु । प्रावृण्वन्नपि यद्येकमौर्णिकं प्रावृणोति ततः 'एवमेव' मासलघु । 'अन्तर्वा' शरीरानन्तरितं 'मध्ये वा' द्वयोः सौत्रिकयोर्मध्यभागे यदौर्णिकं प्रावृणोति तदाऽपि मासलघु ॥ ३६६५ ॥ इदमेव भावयति—

**अब्भिंतरं व बाहिं, बाहिं अब्भिंतरं करेमाणे ।**
**परिभोगविवच्चासे, आवज्जइ मासियं लहुअं ॥ ३६६६ ॥**

अभ्यन्तरपरिभोग्यं–सौत्रिकं कल्पं बहिः 'कुर्वन्' प्रावृण्वन् बहिःपरिभोग्यं वा–और्णिकमभ्यन्तरं कुर्वन् परिभोगव्यत्यासं करोति, तत्र चापद्यते मासिकं लघुकम् । यत एवमतः सौत्रिकं कल्पमन्तः प्रावृणुयात्, और्णिकं तु बहिः । एष विधिपरिभोग उच्यते ॥ ३६६६ ॥

अत्र विधीयमाने गुणानुपदर्शयति—

**छप्पइय-पणगरक्खा, भूसा उज्झायणा य परिहरिया ।**
**सीतत्ताणं च कतं, खोम्मिय अब्भिंतरे तेण ॥ ३६६७ ॥**

और्णिके ह्यन्तः परिभुज्यमाने षट्पदिकाः संसज्येरन्, ताः सौत्रिकमन्तः प्रावृण्वता रक्षिता भवन्ति । और्णिकं चान्तः परिभुज्यमानं मलीमसं भवति, तत्र च पनकः संसज्यते, अतो विधिपरिभोगे पनकस्यापि रक्षा कृता भवति । सौत्रिकेण च बहिः प्रावृतेन विभूषा भवेत् । तथा वस्त्रमहर्निशमपि परिभुज्यमानं मलक्षमं–न मलीमसं भवति, कम्बली तु परिभुज्यमाना मलीमसा जायते, मलीमसतया च दुर्गन्धा, अतो विधिपरिभोगे "उज्झायणा" दुर्गन्धता साऽपि परिहृता । सौत्रिककल्पगर्भया च कम्बलिकया प्राव्रियमाणया शीतत्राणं कृतं स्यात् । एतेन कारणकलापेन 'क्षौमिकं' कार्पासिकं वस्त्रमभ्यन्तरे प्रावरणीयम् ॥ ३६६७ ॥

अथ कार्पासिकं न प्राप्यते ततः किं कर्त्तव्यम्? इत्याह—

**कप्पासियस्स असती, वागय पट्टे य कोसियारे य ।**
**असती य उण्णियस्सा, वागत कोसेज्ज पट्टे य ॥ ३६६८ ॥**

कार्पासिकस्याभावे वल्कजम्, तस्याभावे पट्टवस्त्रम्, तदप्राप्तौ कौशिकारवस्त्रमपि ग्रहीतव्यम् । अथौर्णिकं न प्राप्यते तत और्णिकस्य स्थाने प्रथमं वल्कजं ततः कौशेयं ततः पट्टजमपि ग्राह्यम् । यद्वा पट्टशब्देनात्र तिरीटपट्टकमुच्यते । चशब्दादतसी-वंशीमयमपि ग्रहीतव्यम् ॥ ३६६८ ॥ अथ प्रावरणे गणनाविधिमाह—

**ण उण्णियं पाउरते तु एक्कं, दोण्णी जता खोम्मिय उण्णियं च ।**
**दो सुत्ति अंतो बहि उण्णि तीसु, दुगादि उण्णी वि बहिं परेणं ॥ ३६६९ ॥**

और्णिकं कल्पमेकं न प्रावृणुते, अर्थादापन्नं सौत्रिकमेकमपि प्रावृणुयात् । यदा तु द्वौ कल्पौ प्रावृणोति तदा 'क्षौमिकं' सौत्रिकमन्तः द्वितीयं पुनरौर्णिकं बहिः प्रावृणुयात् । त्रिषु कल्पेषु प्रावरीतुमिष्टेषु द्वौ सौत्रिकावन्तः एकं त्वौर्णिकं बहिः प्रावृणुयात् । अथौर्णिकान् द्व्यादीनपि प्रावरीतुमिच्छति ततो द्वित्रिप्रभृतयोऽप्यौर्णिका बहिः सौत्रिकात् परतः प्रावरणीयाः ॥ ३६६९ ॥ अथ वस्त्रग्रहणे विधिमाह—

१ °णुयात्, अ° भा० ॥

**पंचण्हं वत्थाणं, परिवाडीनाएँ होइ गहणं तु ।**
**उप्परिवाडी गहणे, पच्छित्ते मग्गणा होइ ॥ ३६७० ॥**

'पञ्चानां' जङ्गिकादीनां वस्त्राणां परिपाट्या ग्रहणं कर्त्तव्यम् । परिपाटिर्नाम—पूर्वं कार्पासिकमौर्णिकं च, तदभावे वल्कज-पट्टजादिकमित्यादिरनन्तरोक्तः क्रमः । तामुल्लङ्घ्य उत्परिपाट्या ग्रहणे प्रायश्चित्तस्य मार्गणा भवति । तद्यथा—जघन्यमुपधिमुत्परिपाट्या गृह्णाति पञ्चरात्रिन्दिवानि, मध्यमे मासलघु, उत्कृष्टे चतुर्लघवः ॥ ३६७० ॥ एतदेव भावयति—

**अलंभऽहाडस्स उ अप्पकम्मं, अलंभे तस्सावि उ जं सकम्मं ।**
**एतं अकाउं चउरो उ मासा, भवंति वत्थे परिवाडिहीणे ॥ ३६७१ ॥**

इह छेदन-सीवन-सन्धानादेरेकमपि परिकर्म यत्र न भवति तद् यथाकृतम् । यस्य तु दशिका वा केवलं छेत्तव्याः, सन्धानं वा द्वयोः खण्डयोर्विधेयम्, तुन्नं वा कर्त्तव्यं तदल्पपरिकर्म । यत्तु बहुधा छिद्यमानं सन्धीयमानं वा प्रमाणप्राप्तं भवति, यद् वा बहुधा सीवितव्यं तद् वस्त्रं बहुपरिकर्मोच्यते । तत्र प्रथमं यथाकृतं मार्गयितव्यम्, तस्यालाभेऽल्पपरिकर्म, तस्याप्यभावे यत् 'सकर्म' बहुपरिकर्मकम् । अथैवंविधं योगमकृत्वा प्रथममेवाल्पपरिकर्म बहुपरिकर्म वा गृह्णाति ततश्चत्वारो मासा लघवः । तुशब्दो विशेषणे, तल्लभ्यश्चायमर्थः—उत्कृष्टस्य वस्त्रस्य यथाकृतादिविपर्यासग्रहणे चतुर्लघवः, मध्यमस्य विपर्यासे मासिकम्, जघन्यस्य व्यत्यासे पञ्चकम् । एवं 'परिपाटीहीने' यथोक्तग्रहणक्रमरहिते वस्त्रे गृह्यमाणे प्रायश्चित्तम् ॥ ३६७१ ॥

अथ द्वितीयपदमाह—

**अद्धाणमाईसु उ कारणेसुं, कुज्जा अलंभम्मि उ उक्कमं पि ।**
**गेलन्नमादीसु विवज्जयं वा, असतीय कुज्जा खलु खुम्मियस्स ॥ ३६७२ ॥**

अध्वा—विप्रकृष्टो मार्गस्तं प्रपन्नानां ततो वा निर्गतानां दुर्लभं वस्त्रं भवेत्, एवमादिषु कारणेषु वस्त्रस्यालाभे उत्क्रममपि कुर्यात्, यथाकृतादिक्रमव्यत्यासेनापि गृह्णीयादिति भावः । तथा ग्लानत्वा-ऽनात्मवशतादिषु कारणेषु 'विपर्ययमपि' परिभोगविपर्यासमपि कुर्यात्, अन्तःपरिभोग्यं बहिः बहिःपरिभोग्यं चान्तः प्रावृणुयादिति भावः । क्षौमिकस्य वा कल्पस्याभावे खल्वेकमप्यौर्णिकं प्रावृणुयात् ॥ ३६७२ ॥

## ॥ उपधिप्रकृतं समाप्तम् ॥

---

१ अभावे तस्सा° ताभा० ॥

## र जो ह र ण प्र कृ त म्

सूत्रम्—

**कप्पइ निग्गंथाण वा निग्गंथीण वा इमाइं पंच रयहरणाइं धारित्तए वा परिहरित्तए वा, तंजहा— उण्णिए उट्टिए साणए वच्चाचिप्पए मुंजचिप्पए नाम पंचमे २५ ॥**

अथास्य सम्बन्धमाह—

**उदितो खलु उक्कोसो, उवही मज्झिममिदाणि वोच्छामि ।**
**संखा व एस सरिसी, पाउंछण सुत्तसंबंधो ॥ ३६७३ ॥**

'उदितः' भणितः खल्वनन्तरसूत्रे 'उत्कृष्टः' और्णिक-सौत्रिककल्परूप उपधिः । इदानीं तु 'मध्यममुपधिं' रजोहरणमहमस्मिन् सूत्रे वक्ष्ये । यद्वा अनयोः सूत्रयोर्या पञ्चलक्षणा संख्या एषा 'सदृशी' वस्त्राणां रजोहरणानां च तुल्या, अत इदं 'पादप्रोञ्छनं' रजोहरणं तद्विषयं सूत्रमारभ्यते । एष सम्बन्धः ॥ ३६७३ ॥

अनेन सम्बन्धेनायातस्यास्य व्याख्या—कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा इमानि पञ्च रजोहरणानि धारयितुं वा परिहर्तुं वा । 'तद्यथा' इति उपप्रदर्शनार्थः । 'और्णिकम्' ऊरणिकानामूर्णाभिर्निर्वृत्तम्, 'औष्ट्रिकं' उष्ट्ररोमभिर्निर्वृत्तम्, 'सानकं' सनवृक्षवल्कात् जातम्, वच्चकः—तृणविशेषस्तस्य चिप्पकः—कुट्टितः त्वग्रूपः तेन निष्पन्नं वच्चकचिप्पकम्, मुञ्जः—शरस्तम्बस्तस्य चिप्पकाद् जातं मुञ्जचिप्पकं नाम पञ्चममिति सूत्रार्थः ॥ अथ भाष्यविस्तरः—

**अब्भिंतरं च बज्झं, हरति रयं तेण होइ रयहरणं ।**
**तं उण्णि उट्टि सणयं, वच्चयचिप्पं च मुंजं च ॥ ३६७४ ॥**

यस्मादाभ्यन्तरं बाह्यं च रजो हरति तेन रजोहरणं भवति । तत्र बाह्यं रजो हरतीति सुप्रतीतम्, आभ्यन्तरं कथं पुनरपहरति ? इति उच्यते—रजोहरणेन प्रमार्जिते भूभागे ये आदाननिक्षेपादयः संयमव्यापारा विधीयन्ते ते[1] तदष्टकर्मरूपमाभ्यन्तरं रजोऽपहरन्ति, अतः कारणे कार्याध्यारोपं विधाय तदप्याभ्यन्तररजोहरणमुच्यते । उक्तं च—

संजमजोगा एत्थं, रओहरा तेसि कारणं जेणं ।
रयहरणं उवयारा, तेणं भण्णइ रओ कम्मं ॥ ( पञ्चवस्तुके गा० १३३ )

तच्च पञ्चविधम्—और्णिकमौष्ट्रिकं सनकं वच्चकचिप्पकं मुञ्जचिप्पकं चेति ॥ ३६७४ ॥ तत्राद्यानि त्रीणि सुप्रसिद्धानि, अन्त्यद्वयं व्याख्यानयति—

**वच्चक मुंजं कत्तंति चिप्पिउं तेहि वूयए गोणी ।**
**पाउरणऽत्थुरणाणि य, करेंति देसिं समासज्ज ॥ ३६७५ ॥**

---

१ मो० ले० विनाऽन्यत्र—तेऽष्टकर्म° त० डे० । ते कर्म° भा० कां० ॥

कचिद् धर्मचक्रभूमिकादौ देशे 'वच्चकं' दर्भाकारं तृणविशेषं 'मुञ्जं च' शरस्तम्बं प्रथमं 'चिप्पित्वा' कुट्टयित्वा तदीयो यः क्षोदस्तं कर्त्तयन्ति। ततः 'तैः' वच्चकसूत्रैर्मुञ्जसूत्रैश्च 'गोणी' बोरको व्यूयते, प्रावरणा-ऽऽस्तरणानि च 'देशीं' देशविशेषं समासाद्य कुर्वन्ति। अतस्तन्निष्पन्नं रजोहरणं वच्चकचिप्पकं मुञ्जचिप्पकं वा भण्यते ॥ ३६७५ ॥

रयहरणपंचगस्सा, परिवाडीयाएँ होति गहणं तु।
उप्परिवाडी गहणे, आवज्जति मासियं लहुअं ॥ ३६७६ ॥

'रजोहरणपञ्चकस्य' अनन्तरोक्तस्य परिपाटिकया ग्रहणं भवति। उत्परिपाट्या तु ग्रहणे आपद्यते मासिकं लघुकम् ॥ ३६७६ ॥ का पुनः परिपाटिः ? इत्याह—

तिविहोण्णिय असतीए, उट्टियमादीण गहण धरणं तु।
उप्परिवाडी गहणे, तत्थ वि सट्ठाणपच्छित्तं ॥ ३६७७ ॥

यथाकृतादिभेदात् त्रिविधं यदौर्णिकं तत् प्रथमतो ग्रहीतव्यम्। यथाकृतादिलाभचर्चः प्राग्वद् द्रष्टव्यः। अथौर्णिकं न प्राप्यते तत औष्ट्रिकादीनामपि चतुर्णां यथाक्रमं ग्रहणं धारणं वा कर्त्तव्यम्। अथ 'उत्परिपाट्या' यथोक्तक्रमव्यत्यासेन ग्रहणं करोति ततस्तत्रापि स्वस्थानप्रायश्चित्तम्, मध्यमोपधिनिष्पन्नं लघुमासिकमिति भावः ॥ ३६७७ ॥

आह—किमर्थं प्रथममौर्णिकं गृह्यते ? उच्यते—

उट्ट-सणा कुच्छंती, उल्ला इयरेसु मद्दवं णत्थि।
तेणोण्णियं पसत्थं, असतीय उ उक्कमं कुज्जा ॥ ३६७८ ॥

"उट्ट-सण" त्ति औष्ट्रिक-शनजे रजोहरणे वर्षाकाले व्याघारितवृष्टिकायेनार्द्रीभूते सती कुथ्यतः। ततश्च पनकसम्मूर्च्छनादयो दोषाः प्रमार्जनाकार्यं च न भवति। अथार्द्रेणापि प्रमार्जयन्ति ततो दशिकान्तेषु गोलकाः प्रतिबध्यन्ते, मलिनीभूते च तत्राप्कायविराधना। तथा 'इतरयोः' वच्चक-मुञ्जचिप्पकाख्ययो रजोहरणयोर्मार्दवं नास्ति, स्वभावत एव कठिनत्वात्। तेन कारणेनौर्णिकरजोहरणमौष्ट्रिकादिभ्यः प्रशस्तम्। और्णिकस्य 'असति' अभावे उत्क्रमं कुर्यात्, औष्ट्रिकादीन्यपि यथालाभं गृह्णीयादिति भावः ॥ ३६७८ ॥

## ॥ रजोहरणप्रकृतं समाप्तम् ॥

## ॥ इति कल्पाध्ययनटीकायां द्वितीय उद्देशकः परिसमाप्तः ॥

द्वैतीयीकोद्देशकोऽयं मयाऽपि, स्पष्टीचक्रे सद्गुरूणां प्रसादात्।
सूते नाम्भोबिन्दुनिस्यन्दमिन्दुग्रावा चन्द्रज्योत्स्नया चुम्बितः किम् ? ॥



॥ नमः श्रीजिनप्रवचनस्थविरेभ्यः स्थविरेभ्यः ॥

पूज्यश्रीभद्रबाहुस्वामिविनिर्मितस्वोपज्ञनिर्युक्त्युपेतं

# बृहत् कल्पसूत्रम् ।

श्रीसङ्घदासगणिक्षमाश्रमणसूत्रितेन लघुभाष्येण भूषितम्

तपाश्रीक्षेमकीर्त्याचार्यवरविहितया वृत्त्या समलङ्कृतम् ।

## तृतीय उद्देशः ।

### निर्ग्रन्थ्युपाश्रयप्रवेशप्रकृतम्

व्याख्यातो द्वितीय उद्देशकः, अथ तृतीयः प्रारभ्यते, अस्य चेदमादिसूत्रम्—

**नो कप्पइ निग्गंथाणं निग्गंथीणं उवस्सयंसि[1] चिट्ठित्तए वा निसीइत्तए वा तुयट्टित्तए वा निद्दाइत्तए वा पयलाइत्तए वा, असणं वा[2] ४ आहारं आहारित्तए, उच्चारं[3] वा पासवणं वा खेलं वा सिंघाणं वा परिट्ठवित्तए, सज्झायं वा करित्तए, झाणं वा झाइत्तए, काउस्सग्गं वा ठाणं ठाइत्तए १ ॥**

अथास्य सूत्रस्य कः सम्बन्धः ? इत्याह—

वत्थाणि एवमादीणि गणहरो गेण्हिउं सयं चेव ।
वेच्चति[4] वतिणीवसहिं, पवत्तिणीए पणामेउं ॥ ३६७९ ॥

'एवमादीनि' द्वितीयोद्देशकचरमसूत्रद्वयोक्तानि निर्ग्रन्थीप्रायोग्याणि वस्त्राणि गृहीत्वा 'गणधरः' निर्ग्रन्थीवर्त्तापकः प्रवर्त्तिन्यास्तानि वस्त्राणि स्वयमेव "पणामेउं" ति अर्पयितुं व्रतिनीनां वसतिं व्रजति, अतस्तद्विषयो विधिरनेन सूत्रेण प्रतिपाद्यते ॥ ३६७२ ॥

---

१ °सि आसइत्तए वा चिट्ठि° ताम्० मु० । भाष्ये टीकायां च नास्ति "आसइत्तए" ति पदम्, दृश्यतां गाथा ३६८८ । चूर्णावपि नेक्ष्यत इदं पदम् । विशेषचूर्णौ पुनः विद्यते ॥ २ वा ४ आहारं ताम्० ॥ ३ °चारं वा ४ परि° ताम्० ॥ ४ वच्चति पवत्तिणीए, वसहिं सिग्घं पणामेउं त० डे० मो० ले० ॥

प्रकारान्तरेण सम्बन्धमाह—

**बीएहिँ उ संसत्तो, बितियस्सातिम्मि इह उ इत्थीहिँ ।**
**बितिए उवस्सगा वा, पगता इहइं पि सो चेव ॥ ३६८० ॥**

द्वितीयोद्देशकस्यादिसूत्रे बीजैः संसक्त उपाश्रयो भणितः, 'इह तु' तृतीयोद्देशकस्यादिसूत्रे स्त्रीभिः संसक्त उच्यते । यद्वा द्वितीये उद्देशके बहुषु सूत्रेषूपाश्रयाः प्रकृता येषु साधूनां वस्तुं न कल्पते, अत इहाप्यादिसूत्रे स एवोपाश्रयः प्रोच्यते ॥ ३६८० ॥

**तत्थ अकारण गमणं, पडुच्च सुत्तं इमं समुदियं तु ।**
**कज्जेण वा गते तू, तुवट्टमादीणि वारेति ॥ ३६८१ ॥**

'तत्र' निर्ग्रन्थीनामुपाश्रयेऽकारणं–वक्ष्यमाणकारणकलापं विना यद् गमनं तत् प्रतीत्य इदं सूत्रं 'समुदितं' समायातम्, तदनेन प्रतिषिध्यते इति भावः । अथ कार्येण तत्र गताः ततः 'गते तु' गमने पुनः सञ्जाते त्वग्वर्त्तनादीनि कर्तुं वारयति ॥ ३६८१ ॥

अनेन सम्बन्धेनायातस्यास्य व्याख्या—नो कल्पते निर्ग्रन्थानां निर्ग्रन्थीनामुपाश्रये स्थातुं वा निषत्तुं वा त्वग्वर्त्तयितुं वा निद्रायितुं वा प्रचलायितुं वा, अशनं वा पानं वा खादिमं वा स्वादिमं वा चतुर्विधमप्याहारमाहर्त्तुम्, उच्चारं वा प्रश्रवणं वा खेलं वा सिंघाणं वा परिष्ठापयितुम्, स्वाध्यायं वा कर्त्तुम्, ध्यानं वा ध्यातुम्, कायोत्सर्गं वा स्थानं स्थातुमिति सूत्रसङ्क्षेपार्थः ॥

अथ विस्तरार्थं भाष्यकृद् बिभणिषुराह—

**आपुच्छमणापुच्छा, व अकज्जे चउगुरुं तु वच्चंते ।**
**आपुच्छिय पडिसिद्धे, सुद्धा लग्गा उवेहंता ॥ ३६८२ ॥**

स्थविराणामापृच्छयाऽनापृच्छया वा यदि अकार्ये निर्ग्रन्थीनामुपाश्रयं व्रजति ततश्चतुर्गुरुकम् । स्थविरा आपृष्टाः सन्तो यदि प्रतिषेधं कुर्वन्ति–'मा व्रज, न वर्त्तते निष्कारणं निर्ग्रन्थीनामुपाश्रयं गन्तुम्' एवं प्रतिषिद्धे स्थविराः 'शुद्धाः' न प्रायश्चित्तभाजः । अथ स्थविरा उपेक्षन्ते ततस्तेऽपि लग्नाः, चतुर्गुरुकमापन्ना इत्यर्थः ॥ ३६८२ ॥ अथवा—

**चउरो गुरुगा लहुगा, मासो गुरुगो य होति लहुगो य ।**
**आयरिए अभिसेगे, भिक्खुम्मि य गीतऽगीतत्थे ॥ ३६८३ ॥**

आचार्यो यदि निष्कारणं निर्ग्रन्थीप्रतिश्रयं गच्छति ततश्चत्वारो गुरवः । अभिषेको व्रजति चत्वारो लघवः । गीतार्थभिक्षुर्व्रजति गुरुको मासः । अगीतार्थभिक्षुर्व्रजति लघुको मासः ॥ ३६८३ ॥ यद्वा—

**गमणे दूरे संकिय, णिस्संकऽभिलाव कक्ख सतिकरणं ।**
**ओभासण पडिसुणणे, संपत्ताऽऽरोवणा भणिता ॥ ३६८४ ॥**

निष्कारणं संयतीनामुपाश्रये गच्छति १ तत्र गतो दूरे स्थितः संयतीः पश्यति एतास्ता इति २ कतरा कतरा पुनरियम्? इत्येवं शङ्कां करोति ३ अमुका अमुका वा इयमिति निःशङ्कितं जानाति ४ संयतीभिः समम् 'अभिलापं' संलापं करोति ५ कक्षान्तरादीनि विलोकयति ६

---

१ जानीते ४ भा० ॥

'स्मृतिकरणम्' 'ईदृशी ममाप्यासीत्' इति लक्षणं करोति ७ तामवभाषते ८ अवभाषिता सती सा प्रतिशृणोति ९ सम्पत्तिं तया सह करोति १०, एतेषु दशसु स्थानेषु आरोपणा वक्ष्यमाणा भणिता ॥ ३६८४ ॥ अथात्र स्मृतिकरणपदं व्याचष्टे—

**भावम्मि उ संबंधो, सतिकरणं एरिसा व सा आसि ।**
**अहवा णं इणमट्ठं, पणएमि सती भवति एसा ॥ ३६८५ ॥**

'भावे' भावतः—प्रतिसेवनाभिप्रायेण तया सह यः सम्बन्धः क्रियते, यादृशी त्वं ईदृशी 'सा' मेद्भार्या आसीत्, एतत् स्मृतिकरणमुच्यते । अथवा 'एतां' संयतीमहम् 'अमुमर्थं' प्रतिसेवनालक्षणं 'प्रणयामि' प्रार्थयामीत्येषा स्मृतिरुच्यते ॥ ३६८५ ॥

अथानन्तरोक्तेषु दशसु स्थानेषु प्रायश्चित्तमाह—

**चउरो य अणुग्घाया, लहुगो लहुगा य होंति गुरुगा य ।**
**छम्मासा लहु-गुरुगा, छेदो मूलं तह दुगं च ॥ ३६८६ ॥**

संयतीप्रतिश्रयगमने चत्वारोऽनुद्धाता मासाः । दूरदर्शने मासलघु । शङ्कायां चतुर्लघवः । निःशङ्किते चतुर्गुरवः । आलापे षण्मासा लघवः । कक्षान्तराद्यवलोकने षण्मासा गुरवः । स्मृतिकरणे छेदः । अवभाषणे मूलम् । प्रतिश्रवणेऽनवस्थाप्यम् । सम्पत्त्यां पाराञ्चिकम् ॥ ३६८६ ॥

एवं तावदोघतः प्रायश्चित्तमुक्तम् । अथ विभागतस्तदेव दर्शयितुमाह—

**निक्कारणगमणम्मि, बहवे दोसा य पच्चवाता य ।**
**जिण-थेरपडिकुट्ठा, तेसिं[4] चाऽऽरोवणा इणमो ॥ ३६८७ ॥**

निष्कारणगमने बहवो दोषाश्च प्रत्यपायाश्च भवन्ति । तत्र दोषा आत्म-परोभयसमुत्थाः पारलौकिकाः, प्रत्यपायाश्च भोगिनी-घाटिकादय ऐहलौकिकाः । ते चोभयेऽपि जिनैः—तीर्थकृद्भिः स्थविरैश्च -गणधरादिभिः प्रतिकुष्टाः, यथाऽमी भवन्ति तथा न विधेयमित्युपदिष्टमिति भावः । तेषां च दोषाणाम् 'इयं' वक्ष्यमाणा 'आरोपणा' प्रायश्चितम् ॥ ३६८७ ॥

तच्चैतेषु सूत्रोक्तपदेषु भवति—

**चिट्ठित्त णिसीइत्ता, तुयट्ट णिद्दा य पयल सज्झाए ।**
**झाणा-ऽऽहार-विहारे, पच्छित्ते मग्गणा होइ ॥ ३६८८ ॥**

स्थातुं निषत्तुं त्वग्वर्तनं निद्रां प्रचलां स्वाध्यायं ध्यानमाहारं वा कर्त्तुं विहारं—चङ्क्रमणम् उपलक्षणत्वाद् उच्चार-प्रश्रवणे कायोत्सर्गं वा कर्त्तुं न कल्पते । अथ करोति ततः प्रायश्चित्तस्य मार्गणा भवति ॥ ३६८८ ॥ इदमेव प्रकटयति—

**एतेसिं तु पयाणं, पत्तेय परूवणा विभागो य ।**
**जो एत्थं आवण्णोऽणावण्णो वा वि जो एत्थं ॥ ३६८९ ॥**

'एतेषां' स्थानादीनां पदानां प्रत्येकं प्ररूपणा 'विभागश्च' दोषाणां विभाषालक्षणः कर्त्तव्यः । कथम् ? इत्याह—यः 'अत्र' दोषजाले प्रायश्चित्तजाते वाऽऽपन्नो यो वाऽनापन्नः तदेतद्

१ °वस्स उ ताभा० चूर्णौ च ॥ २ मदीया भार्या भा० कां० ॥ ३ अभिलापे कां० ॥ ४ °सिं ताऽऽरो° ताभा० ॥

वक्तव्यम् ॥ ३६८९ ॥ यथाप्रतिज्ञातमेव निर्वाहयति—

**निक्कारणमविहीए, निक्कारणओ तहेव य विहीए ।**
**कारणओ अविहीए, कारणतो चेव य विहीए ॥ ३६९० ॥**
**आदिभयणाण तिण्हं, अण्णतरीए उ संजतीसेज्जं ।**
**जे भिक्खू पविसेज्जा, सो पावति आणमादीणि ॥ ३६९१ ॥**

साध्वीप्रतिश्रये प्रविशतां चत्वारो भङ्गाः, तद्यथा—निष्कारणेऽविधिना साध्वीप्रतिश्रये १ निष्कारणं विधिना २ कारणतोऽविधिना ३ कारणतो विधिना प्रविशति ४ ॥ ३६९० ॥

अत्र 'आदिभजनानाम्' आद्यानां त्रयाणां भङ्गानाम् अन्यतरया भजनया—भङ्गकेन संयतीनां शय्यां—वसतिं यो भिक्षुः प्रविशति स आज्ञादीनि दूषणानि प्राप्नोति ॥ ३६९१ ॥

तत्र प्रथमभङ्गव्याख्यानार्थमाह—

**निक्कारणम्मि गुरुगा, तीसु वि ठाणेसु मासियं गुरुगं ।**
**लहुगा य दारमूले, अतिगयमेत्ते गुरू पुच्छा ॥ ३६९२ ॥**

निष्कारणे संयतीवसतिं गच्छतश्चतुर्गुरुकाः । अविधिना च प्रविशतस्त्रिष्वपि स्थानेषु मासिकं गुरुकम् । त्रीणि स्थानानि नाम—अग्रद्वार-मध्या-ऽऽसन्नलक्षणानि, एतेषु नैषेधिकीमकुर्वतस्त्रीणि मासगुरुकाणि भवन्ति । यदि 'द्वारमूले' मूलद्वारसमीपे बहिस्तिष्ठति ततश्चतुर्लघवः । अथैकमपि पदमुपाश्रयमध्येऽतिगतः—प्रविष्टस्तदा अतिगतमात्रे चतुर्गुरुः । "पुच्छि" त्ति नोदकः पृच्छां करोति ॥ ३६९२ ॥ कथम्? इत्याह—

**पाणाइवायमादी, असेवतो केण होंति गुरुगा उ ।**
**कीस व बाहिं लहुगा, अंतो गुरु चोतग! सुणेहिं ॥ ३६९३ ॥**

प्राणातिपातादिकमपराधमसेवमानस्य केन कारणेन चतुर्गुरुका भवन्ति? कस्माद्वा 'बहिः' द्वारमूले चतुर्लघुकाः? कस्माच्चान्तःप्रविष्टमात्रस्य चतुर्गुरुकम्? । आचार्यः प्राह—हे नोदक! 'शृणु' निशमयात्र कारणं येनैवं प्रायश्चित्तं दीयते ॥ ३६९३ ॥ किं तत्? इत्याह—

**वीसत्था य गिलाणा, खमिय वियारे य भिक्ख सज्झाए ।**
**पालीय होइ भेदो, अप्पाण परे तदुभए य ॥ ३६९४ ॥**

काचिदार्यिका तत्र 'विश्वस्ता' अपावृतशरीरा भवेत् सा संक्षोभमुपयायात् । ग्लाना वा क्षपिका वा संयतसंक्षोभेण न भुञ्जीत । विचारभूमौ भिक्षायां स्वाध्यायभूमौ वा प्रस्थितानां तासां व्याघातो भवेत् । पाली नाम—संयममहातडागस्यानतिक्रमलक्षणः सेतुः तस्या आत्म-परोभयसमुत्थो भेदो भवति; यद्वा "पालि" त्ति वसतिपालिका भण्यते, तया सार्द्धमालापादि कुर्वत आत्मसमुत्थः परसमुत्थ उभयसमुत्थो वा भेदो भवतीति द्वारगाथासमासार्थः ॥ ३६९४ ॥

साम्प्रतमेनामेव विवृणोति—

**काई सुहवीसत्था, दरजिमिय अवाउडा य पयलाति ।**
**अतिगतमेत्ते य तहिं, संकिय पपलाइया थद्धा ॥ ३६९५ ॥**

---

१ °रणमविधिना प्रविशति १ निष्का° भा० कां० ॥

काचिदार्यिका वसतेरन्तःस्थिता 'सुखविश्वस्ता' आत्मसुखेनापावृतशरीरा तिष्ठति, दरजिमिता वा-अर्धभुक्ता दरनिवसिता काचिदास्ते, अपावृतनिषण्णा वा काचित् प्रचलायते । ततः 'तस्मिन्' संयतेऽकस्माद् 'अतिगतमात्रे' प्रविष्टमात्र एव 'दृष्टाऽहमनेनापावृता' इति 'शङ्किता' शङ्काकुला सती प्रपलायते, सहसैव नश्यतीत्यर्थः । प्रपलायिता च सती संक्षोभतः स्तब्धगात्रा सा भवेत् ॥ ३६९५ ॥ अथेदमेव व्याचष्टे—

**वीरल्लसउणवित्तासियं जहा सउणिवंद्यं वुण्णं ।**
**वच्चति णिरावयक्खं, दिसि-विदिसाओ विभज्जंतं ॥ ३६९६ ॥**

वीरल्लशकुनः-हुलायकः, तेन समागच्छता वित्रासितं सद् यथा शकुनिकानां-पक्षिणीनां वृन्दं "वुन्नं" विषण्णं सद् 'निरपेक्षं' पुत्रभाण्डाद्यपेक्षारहितं दिशो विदिशश्च 'विभज्यमानं' वियुज्यमानं 'व्रजति' सहसैव पलायते ॥ ३६९६ ॥ एष दृष्टान्तः, अयमर्थोपनयः—

**तम्मि य अतिगतमित्ते, वित्तत्थाओ जहेव ता सउणी ।**
**गेण्हंति य संघाडिं, रयहरणे यावि मग्गंति ॥ ३६९७ ॥**

'तस्मिन्' संयतेऽतिगतमात्र एव यथैव ताः शकुनिकास्तथैव ता अपि संयत्यो वित्रस्ता भवन्ति । ततश्च काचिदपावृतगात्रा त्वरितं प्रावृणोति, अन्याः काश्चन सङ्घाटिका गृह्णन्ति, यास्तु संयतं सहसा समागतं दृष्ट्वा रजोहरणं मुक्त्वा नष्टाः ताः पश्चात् सुस्थीभूताः सत्यो रजोहरणानि मार्गयन्तीति ॥ ३६९७ ॥ यच्च नोदकेनोक्तम् "प्राणातिपातादिकमसेवमानस्य कस्माच्चतुर्गुरुकं दीयते ?" ( गा० ३६९३ ) तदेतत् परिहरन्नाह—

**छक्कायाण विराहण, पक्खुलणं खाणु कंटए विलिया ।**
**थद्धा य पेच्छिउं भावभेओ दोसा उ वीसत्थे ॥ ३६९८ ॥**

ताः संयत्यः कुम्भकारशालादौ स्थिता भवेयुः, तत्र च निरपेक्षा नश्यन्त्यो मृत्तिकामर्दनेन पृथिवीकायम्, उदककुम्भप्रलोटनेनाप्कायम्, उल्मुकघट्टनेनाग्निकायम्, "यत्राग्निस्तत्र नियमाद् वायुः" इति कृत्वा वायुकायम्, बीज-हरितमर्दनेन वनस्पतिम्, कुन्थु-कीटिकादिमर्दनेन त्रसकायं च विराधयेयुः; एषा षट्कायविराधना, सा च तत्त्वतस्तेनैव साधुना कृता । प्रस्खलनं नाम-अधस्तादुपरि वा आस्फालनं यद् वा तासां नश्यन्तीनां भवेत् । स्थाणुना वा कण्टकेन वा पादयोरुपघातः स्यात् । "विलिया" 'व्रीडिता' अकस्मात् तद्दर्शनाद् लज्जिता सती काचिद् वैहायसोद्बन्धनादि कुर्यात् । भयातिरेकतो वा स्तब्धा भवेत् । तां च तथाभूतां दृष्ट्वा भावभेदो भवति, 'सात्त्विकभावप्रभवोऽयमस्य शरीरे स्तम्भः' इत्येवमितराः संयत्यश्चिन्तयेयुरिति भावः । एवमादयो दोषा विश्वस्तार्यिकाविषया मन्तव्याः ॥ ३६९८ ॥ गतं विश्वस्ताद्वारम् । अथ ग्लानाद्वारमाह—

**कालाइक्कमदाणे, गाढतरं होज्ज णेव पउणेज्जा ।**
**संखोभेण णिरोधो, मुच्छा मरणं व असमाही ॥ ३६९९ ॥**

ग्लाना संयती तस्य संयतस्य सङ्क्षोभेण न भुङ्क्ते, प्रतिचरिका वा तदर्थं भिक्षां न गच्छति । ततः कालातिक्रमेण तस्या भक्त-पानप्रदाने गाढतरं ग्लानत्वं भवेत्, न वा सा प्रगुणीभवेत् । अथवा तदीयसङ्क्षोभेण तस्या वातकर्मणः कायिक्याः संज्ञाया वा निरोधो भवेत्, ततस्तद्बाधया

मूर्च्छा सञ्जायेत, निरोधेन वा मरणमाप्नुयात्, असमाधिर्वा तस्या भवेत्, तत्रानागाढपरितापनादिनिष्पन्नं प्रायश्चित्तम् ॥ ३६९९ ॥ अथ क्षपिकाद्वारमाह—

**पारणगपट्ठिया आणियं च अविगडियऽदंसिय ण भुंजे ।**
**अचियत्त अंतराए, परिताव असब्भवयणे य ॥ ३७०० ॥**

क्षपिका चतुर्थादितपःकर्मकारिणी पारणकार्थं प्रस्थिताऽपि 'ज्येष्ठार्य आगतः' इति मत्वा निवर्त्तते । प्रवर्त्तिनी वा तस्य समीपे निविष्टा वर्त्तते, तया च क्षपिकया पारणकमानीतम्, परम् 'अविकटितम्' अनालोचितम् 'अदर्शितं वा' अनालोकितं सा न भुङ्क्ते इति कृत्वा प्रवर्त्तिनीं प्रतिपालयन्ती तिष्ठति । ततश्च तस्या अप्रीतिकमन्तरायोऽनागाढमागाढं वा परितापो भवेत् । असभ्यवचनं वा सा ब्रूयात्—अहो ! अयमस्मत्कार्याणां कीलक इव साम्प्रतमुपस्थित इति ॥ ३७०० ॥ विचारद्वारमाह—

**नोल्लेऊण ण सक्का, अंतो वा होज्ज णत्थि वीयारो ।**
**संते वा ण पवत्तति, णिच्छुभण विणास गरिहा य ॥ ३७०१ ॥**

स साधुर्द्वारमूले उपविष्टत्वाद् 'नोदयितुं' लङ्घयितुं न शक्यते, तासां च संयतीनामन्तः विचारभूमिर्नास्ति, अस्ति वा परं तस्यां संज्ञा न प्रवर्त्तते, शय्यातरेण वा सा नानुज्ञाता, तस्यां व्युत्सर्जने निष्काशनमसौ कुर्यात्, निष्काशिताश्च श्वापदादिभिर्विनाशं लोकाच्च गर्हामासादयन्ति, तन्निष्पन्नं तस्य संयतस्य प्रायश्चित्तम् ॥ ३७०१ ॥ अथ भिक्षाद्वारमाह—

**सइकालफेडणे एसणादिपेल्लंतऽपेल्लणे हाणी ।**
**संकायऽभाविएसु य, कुलेसु दोसा चरंतीणं ॥ ३७०२ ॥**

संयत्यो भिक्षायां प्रस्थिताः, स च साधुः समायातः, ततस्तस्य दाक्षिण्येन तावत् स्थिता यावद् भिक्षायाः सत्कालः—देशकालः स्फिटितः । ततोऽवेलायां भिक्षामटन्त्य एषणाशुद्धेः आदिशब्दाद् उद्गमोत्पादनाशुद्धेश्च प्रेरणं कुर्युः । अथ न प्रेरयेयुः ततस्तासामात्मनो हानिः परिताप-महादुःखादिना भवेत् । अभावितकुलेषु वाऽकाले चरन्तीनां शङ्कादयो दोषा भवेयुः । शङ्का मैथुनार्थविषया, आदिशब्दाद् भोजिका-घाटिकादिदोषपरिग्रहः ॥ ३७०२ ॥

अथ स्वाध्यायद्वारमाह—

**सज्झाए वाघातो, विहारभूमिं व पत्थिय णियत्ता ।**
**अकरण णासाऽऽरोवण, सुत्तऽत्थ विणा य जे दोसा ॥ ३७०३ ॥**

'ज्येष्ठार्य आगतः' इति कृत्वा ताः पठनं परावर्त्तनं वा न कुर्वन्ति, एवं स्वाध्यायव्याघातो भवेत् । वसतौ वा अस्वाध्यायिके जाते 'विहारभूमिं' स्वाध्यायभुवं प्रस्थिताः भूयस्तं समागतं दृष्ट्वा निवृत्ताः, ततः "अकरणे"ति सूत्रपौरुषीं न कुर्वन्ति मासलघु, अर्थपौरुषीं न कुर्वन्ति मासगुरु । सूत्रा-ऽर्थनाशनिष्पन्ना चारोपणा, सा चेयम्—सूत्रं नाशयति चतुर्लघु, अर्थं नाशयति चतुर्गुरु । सूत्रा-ऽर्थाभ्यां च विना ये 'दोषाः' चरण-करणहान्यादयस्तन्निष्पन्नं सर्वमपि संयतस्य प्रायश्चित्तम् ॥ ३७०३ ॥ पालीभेदद्वारमाह—

---

१ °भूमौ' स्वाध्यायभुवि 'प्रस्थि° भा० ॥

**संजममहातलागस्स णाणवेरग्गसुपडिपुण्णस्स ।**
**सुद्धपरिणामजुत्तो, तस्स उ अणइक्कमो पाली ॥ ३७०४ ॥**

संयमः–पञ्चाश्रवादिविरमणात्मकः स एव महद्–विस्तीर्णं यत् तडागं तस्य, 'ज्ञानवैराग्यसुप्रतिपूर्णस्य' ज्ञानम्–आचारादिश्रुतं तत्समुत्थं यद् वैराग्यं–प्रतिसमयविशुद्ध्यमानो भवनिर्वेदः तेन जलस्थानीयेन सुष्ठु–अतीव प्रतिपूर्णस्य, यः शुद्धपरिणामयुक्तस्तस्यानतिक्रमः स पालिरित्युच्यते ॥ ३७०४ ॥ तस्य भेदः कथं भवति ? इत्याह—

**संजमअभिमुहस्स वि, विसुद्धपरिणामभावजुत्तस्स ।**
**विकहादिसमुप्पण्णो, तस्स उ भेदो मुणेयव्वो ॥ ३७०५ ॥**

संयमाभिमुखस्यापि तस्य विशुद्धिपरिणामभावयुक्तस्य पालिस्थानीयस्यानतिक्रमस्य यः 'विकथादिसमुत्पन्नः' मिथःकथादिकरणसमुद्भूतः 'भेदः' विनाशः स इह पालीभेदो ज्ञातव्यः । स चाऽऽत्म-परोभयसमुत्थो भवेत् ॥ ३७०५ ॥

**अहवा पालयतीति, उवस्सयं तेण होति सा पाली ।**
**तीसे जायति भेदो, अप्पाण-परोभयसमुत्थो ॥ ३७०६ ॥**

अथवा या तत्रोपाश्रयं पालयति सा "सत्यभामा भामा" इति **न्यायात्** पाली भण्यते । तस्या एकाकिन्यास्तं संयतं दृष्ट्वा आत्मसमुत्थः परसमुत्थ उभयसमुत्थो वा भेदो जायते ॥ ३७०६ ॥ कथम् ? इति चेद् उच्यते—

**मोहतिगिच्छा खमणं, करेमि अहमवि य बोहि पुच्छा य ।**
**मरणं वा अचियत्ता, अहमवि एमेव संबंधो ॥ ३७०७ ॥**

स संयतस्तं संयतीप्रतिश्रयं गतो यावदेका वसतिपालिका तिष्ठति, ततस्तेन सा पृष्टा—आर्ये ! किमिति भवती भिक्षां नावतीर्णा ? । सा प्राह—अद्य मम क्षपणम् । स प्रश्नयति—किंनिमित्तम् ? । सा प्रतिब्रूते—मोहचिकित्सार्थम् । तयाऽपि स संयत एवमेव पृष्टो ब्रवीति—अहमपि मोहचिकित्सार्थं क्षपणं करोमि । ततस्तेन पृच्छा कृता—आर्ये ! भवत्या कथं बोधिरासादिता ? । सा प्राह—मरणं मदीयभर्तुरजनिष्ट, तस्य वा अहम् 'अप्रीतिका' द्वेष्या पूर्वमभुवं अतः प्रव्रजिता । ततस्तया सोऽप्येमेव पृष्टः प्राह—अहमपि 'एवमेव' अभीष्टकलत्रवियोगादिना प्राव्राजिषम् । एवं भिन्नकथासद्भावकथनैर्भावसम्बन्धो भवति ॥३७०७॥ इदमेव स्फुटतरमाह—

**ओमाणस्स व दोसा, तस्स व[1] गमणेण सग्गलोगस्स ।**
**महतरियपभावेण य, लद्धा मे संजमे बोही ॥ ३७०८ ॥**

अपमानं नाम–ससापत्न्यतायां यद् भर्त्ता माम् अवमतया पश्यति स तस्य दोषादहं प्रवव्राज । अथवा मदीयो भर्त्ता मय्येकान्तानुरक्त आसीत्, अतस्तस्य स्वर्गलोकस्य गमनेन तथा महत्तरिकया यद् ममानवरतं धर्माख्यानकानि कथितानि तत्प्रभावेण च लब्धा मया संयमे बोधिः, संयमं प्रतिपन्नवतीत्यर्थः ॥ ३७०८ ॥ यद्वा—

**पदूमिता मि घरासे, तेण हतासेण तो ठिता धम्मे ।**

१ व मरणेण ताभा० ॥

**सिट्ठं दाइ रहस्सं, ण कहिज्जइ जं अणत्तस्स ॥ ३७०९ ॥**

'प्रदुमिता' प्रकर्षेण क्लेशिताऽस्मि अहं "घरासे" गृहवासे, प्राकृतत्वाद् वाशब्दलोपः, तेन 'हताशेन' कुपतिना, ततः स्थिताऽहमेवंविधे धर्मे । इदं च रहस्यमिदानीं मया भवतां 'शिष्टं' कथितम्, यद् 'अनाप्तस्य' भवद्व्यतिरिक्तस्य कस्यापि पुरतो न कथ्यते ॥ ३७०९ ॥

**रिक्खस्स वा वि दोसो, अलक्खणो सो अभागधिज्जो णु ।**
**न य निग्गुणा मि अज्जो! तुब्भे वि य नाहिह विसेसं ॥ ३७१० ॥**

मम पाणिग्रहणदिवसे यद् ऋक्षं–नक्षत्रं तस्य वा कोऽपि दोष आसीत्, तेन स तादृशो निःस्नेहोऽलक्षणोऽभागधेयश्च मम भर्त्ता अभवत्, न चाहं 'निर्गुणा' गुणविकला, यद्वा आर्य ! यूयमपि ज्ञास्यथ मदीयं 'विशेषं' सगुण-निर्गुणताविभागम् ॥ ३७१० ॥ एवमुक्ते संयतो ब्रूयात्—

**इट्ठकलत्तविओगे, अण्णम्मि य तारिसे अविज्जंते ।**
**महतरयपभावेण य, अहमवि एमेव संबंधो ॥ ३७११ ॥**

इष्टकलत्रस्य वियोगे सञ्जातेऽन्यस्मिंश्च तादृशे कलत्रेऽविद्यमाने महत्तरः–आचार्यो मम धर्ममाख्याति स्म, ततस्तत्प्रभावेणाहमपि प्रव्रजितः । "एमेव" त्ति यथा तया सविकारमात्मीयं चरितमाख्यातं तथा संयतोऽप्येवमेव कथयति । एवं तयोः परस्परं भावसम्बन्धो भवति ॥ ३७११ ॥ किञ्चान्यत्—

**[1]किं पिच्छह सारिक्खं, मोहं मे णेति मज्झ वि तहेव ।**
**उच्छंगगता मि मता, इहरा ण वि पत्तियंतो मि ॥ ३७१२ ॥**

संयतस्तां संयतीं निश्चलया दृष्ट्या निरीक्षते, ततः सा ब्रवीति—किमेवं पश्यथ ? । स प्राह—मदीयभोगिन्या सह यद् भवत्याः सर्वथैव सादृश्यं तद् मां मोहं नयति, किमेषा सैव ? इति विभ्रमं जनयतीत्यर्थः । सा ब्रवीति—ममापि त्वं तथैव मोहं जनयसि । स प्राह—किं करोमि ? ममोत्सङ्गे गता–स्थिता सती सा मृता, 'इतरथा' यदि परोक्षं सा मृताऽभविष्यत् ततो देवानामपि वचनेन प्रत्ययं नागमिष्यम्, यथा—त्वं सा मम पत्नी न भवसीति ॥ ३७१२ ॥

**इय संदंसण-संभासणेहिं भिन्नकध-विरहजोएहिं ।**
**सेज्जातरादिपासण, वोच्छेद दुदिट्ठधम्म त्ति ॥ ३७१३ ॥**

"इय" एवं यत् परस्परं सन्दर्शनं यच्च सम्भाषणं–'किमिति त्वमद्य भिक्षां न गता ?' इत्यादिपृच्छारूपं ताभ्याम्, तथा यास्तया सह भिन्नकथाः, यश्च विरहे–एकान्ते योगः, एतैश्चारित्रस्य भेद उपजायते । तथा शय्यातर आदिशब्दादन्यो वा यः तत्परिजनादिस्तयोस्तथाविधं चेष्टितं पश्यति स तद्द्रव्या-ऽन्यद्रव्ययोर्व्यवच्छेदं कुर्यात् । 'दुर्दृष्टधर्माण एते' इत्येवं विपरिणाममुपगच्छेत् । [2]◁ अथासौ तया सह सम्पत्तिं गच्छति ततो नरकायुर्बध्नाति, तीर्थकृतां सङ्घस्य च महतीमाशातनां विधाय बोधिलाभप्रतिबन्धकं कर्मजालमुपचिनोति । उक्तं च—

लिंगेण लिंगिणीए, संपत्तिं जइ निगच्छई मूढो ।
निरयाउयं निबंधइ, आसायणया अबोही य ॥ ▷ ( कल्पबृहद्भाष्ये ) ॥ ३७१३ ॥

---

१ किं पेक्खह ताभा० ॥ २ ◁ ▷ एतच्चिह्नान्तर्गतः पाठः भा० नास्ति ॥

◁ [1]एतत् सर्वं स्थानं निषदनं चाश्रित्योक्तम् । अथ त्वग्वर्त्तनादीनि पदान्यङ्गी ▷ कृत्याह—

पयला निद्द तुअट्टे, अच्छिदिट्टम्मि चमढणे मूलं ।
पासवणे सच्चित्ते, संका वुच्छम्मि उड्डाहो ॥ ३७१४ ॥

प्रचलायनं नाम–निषण्णस्य सुप्तजागरावस्था, निद्रायणं तु–निषण्णस्यैव स्वपनम्, त्वग्वर्त्तनं–संस्तारकं प्रस्तीर्य शयनम्, अक्षिचमढनं–चक्षुषोर्मीलनम् । एतानि कुर्वाणो यद्यपि सागारिका-दिना न दृष्टस्तथापि चतुर्गुरु, दृष्टे तु शङ्कायां चतुर्गुरु, निःशङ्किते मूलम्, प्रश्रवणं संयतीनां कायिकाभूमौ करोति चतुर्लघु । "सच्चित्ते" त्ति संयत्याः कायिकां व्युत्सृजन्त्या योनौ संयतनिसृष्टं शुक्रबीजमवगाहेत ततो मूलम् । "संका वुच्छम्मि" त्ति तं संयतं तत्र कायिकां व्युत्सृजन्तं दृष्ट्वा सागारिकादिः शङ्कां कुर्यात्—किं मन्ये एष श्रमणको रजन्यामत्रैवोषितः ?, ततो महा-नुड्डाहः प्रवचनस्य भवतीति । एषा पुरातना गाथा ॥ ३७१४ ॥

अथास्या एव व्याख्यानमाह—

पयला निद्द तुअट्टे, अच्छीणं चमढणम्मि चउगुरुगा ।
दिट्ठे वि य संकाए, गुरुगा सेसेसु वि पदेसु ॥ ३७१५ ॥

प्रचलां निद्रां त्वग्वर्त्तनमक्षिचमढनं च कुर्वाणं यदि परो न पश्यति ततश्चतुर्गुरुकाः, दृष्टे-ऽपि प्रचलादौ शङ्कायां चतुर्गुरुकाः, निःशङ्किते मूलम् । 'शेषेष्वपि' [2]अशनादिसमुद्देशन-स्वाध्या-यकरणादिषु सूत्रोक्तपदेषु परेणादृष्टेषु चत्वारो गुरवः, दृष्टेष्वपि शङ्कायां चतुर्गुरु, निःशङ्किते मूलम् ॥ ३७१५ ॥ का पुनः शङ्का भवेत् ? इति चेद् उच्यते—

सज्झाएण णु खिण्णो, [3]आउं अण्णेण जेण पयलाति ।
संकाएँ हुंति गुरुगा, मूलं पुण होति णिस्संके ॥ ३७१६ ॥

'नुः' इति वितर्के, किमेष संयतः स्वाध्यायजागरेण खिन्नः ? आहोश्विदन्येन सागारिकप्र-सङ्गेन रात्रौ खिन्नः ? येनैवं प्रचलायते, एवं शङ्कायां चतुर्गुरुकाः, निःशङ्किते तु मूलं भवति ॥ ३७१६ ॥

अण्णत्थ मोय गुरुओ, संजतिवोसिरणभूमिए गुरुगा ।
जोणोगाहण बीए, केयी धाराएँ मूलं तु ॥ ३७१७ ॥

संयतीकायिकाभूमिं विमुच्यान्यत्र मोकस्य व्युत्सर्जने मासगुरु । अथ संयतीव्युत्सर्जनभूमौ व्युत्सृजति ततश्चतुर्गुरु । तत्र च कदाचिद् दृष्टिक्लीबस्यान्यस्य वा बीजनिसर्गो भवेत्, तच्च बीजं संयतीधाराहतं सद् ऊर्द्ध्वमुत्समुद्धावितं योनाववगाहेत तत्र संयतस्य मूलम्, [4]उड्डाहादितायां च तस्यामुड्डाहादयो दोषाः । केचिदाचार्या ब्रुवते—धारया स्पृष्टमात्र एव बीजे मूलं भवति । यत एते दोषा अतो निष्कारणे संयतीवसतिमविधिना न प्रविशेत् ॥ ३७१७ ॥

गतः प्रथमो भङ्गः । द्वितीयभङ्गमाह—

---

१ ◁ ▷ एतन्मध्यगतः पाठः तादी० त० डे० मो० ले० नास्ति, कां० भा० एव वर्त्तते ॥
२ अशिवादि° भा० कां० विना ॥　३ आओ अ° ताभा० । आतो अ° बृहद्भाष्ये ॥
४ "जे वाहडा उड्डाहादयो दोसा" इति चूर्णौ विशेषचूर्णौ च ॥

**निक्कारणे विधीय वि, दोसा ते चेव जे भणिय पुव्विं ।**
**वीसत्थाई मुत्तुं, गेलन्नाई उवरिमा उ ॥ ३७१८ ॥**

निष्कारणे 'विधिनाऽपि' नैषेधिकीत्रयकरणरूपेण प्रवेशे त एव दोषाः ये 'पूर्वं' प्रथमभङ्गे सप्रपञ्चमुक्ताः । नवरं विश्वस्ताविषया ये दोषा उक्ताः, आदिशब्दस्तेषामेवानेकभेदसूचकः, तान् मुक्त्वा ये ग्लान्यादिविषया उपरितना दोषास्ते द्वितीयभङ्गे सम्भवन्ति, विश्वस्तादोषास्तु नैषेधिकीत्रयकरणेन न सम्भवन्तीति भावः ॥ ३७१८ ॥

**निक्कारणे विधीय वि, तिट्ठाणे गुरुगो जेण पडिकुट्ठं ।**
**कारणगमणे सुद्धो, णवरिं अविधीय मासतियं ॥ ३७१९ ॥**

निष्कारणे विधिनाऽपि प्रविशन् यस्त्रिषु स्थानेषु नैषेधिकीं प्रयुङ्क्ते तस्यापि मासगुरुकम् । कुतः ? इत्याह—येन प्रतिक्रुष्टं भगवता निष्कारणमार्यिकावसतौ गमनम् । अथ तृतीयभङ्गमाह—"कारण" इत्यादि । कारणे यः संयतीवसतौ गच्छति स शुद्धः । नवरम् 'अविधिना' असामाचार्या प्रवेशनिष्पन्नं त्रिषु स्थानेषु यदि नैषेधिकीत्रयं न करोति ततो मासलघुत्रयम्, द्वयोः स्थानयोर्न करोति मासलघुद्वयम्, एकस्मिन् स्थाने न करोति एकं मासलघुकम् ॥ ३७१९ ॥

**कारणतो अविधीए, दोसा ते चेव जे भणिय पुव्विं ।**
**कारणे विधीय सुद्धो, इच्छं तं कारणं किन्नु ॥ ३७२० ॥**

कारणतोऽविधिना प्रविशतो दोषास्त एव भवन्ति ये विश्वस्तादिविषयाः पूर्वं भणिता इति । कारणे तु 'विधिना' त्रिषु स्थानेषु नैषेधिकीत्रयं कृत्वा प्रविशन् शुद्धः । शिष्यः पृच्छति—इच्छाम्यहं ज्ञातुम् किं तत् कारणम् ? येन तत्र गम्यते ॥ ३७२० ॥ सूरिराह—

**गम्मइ कारणजाए, पाहुणए गणहरे महिड्ढीए ।**
**पच्छादणा य सेहे, असहुस्स चउक्कभयणा उ ॥ ३७२१ ॥**

गम्यते संयतीनां प्रतिश्रये 'कारणजाते' उपाश्रय-संस्तारकप्रदानादिके । प्राघुणको वा साधुः संयतीनामनाबाधपृच्छानिमित्तं गच्छेत् । गणधरो वा मूर्च्छा-विसूचिकादौ संयतीनामागाढे कारणे समुत्पन्ने दिवा रात्रौ वा गच्छेत् । 'महर्द्धिको वा' राजा-ऽमात्यादिप्रव्रजितः संयतीनां तेजो-गौरवादिजननार्थं यायात् । "सेहि" त्ति शैक्षस्य राजपुत्रप्रव्रजितादेरमात्यादिभिरुन्निष्कामयितुमारब्धस्य प्रच्छादना संयतीप्रतिश्रये नीत्वा कर्त्तव्या । काचिद्वा संयती ग्लाना तस्याश्चिकित्सा कर्त्तव्या, तत्रासहिष्णोः साधोः साध्व्या[श्च] श्चतुष्कभजना भवति, चतुर्भङ्गीत्यर्थः । सा चेयम्—साध्वी सहिष्णुः साधुरपि सहिष्णुः १ साध्वी सहिष्णुः साधुरसहिष्णुः २ साध्वी असहिष्णुः साधुः सहिष्णुः ३ साध्वी साधुश्च द्वावप्यसहिष्णू ४ । एष द्वारगाथासङ्क्षेपार्थः ॥ ३७२१ ॥

अथ विस्तरार्थमभिधित्सुः प्रथमद्वारमङ्गीकृत्याह—

---

१ "कारण० पच्छद्दं । कारणगमणे सुद्धो, अविधीए मासलहुगो तिसु ठाणेसु ।" इति चूर्णौ ॥ २ अविधिप्रवेश° भा० ॥ ३ °सगुरुत्र° भा० ॥ ४ °सगुरुद्व° भा० ॥ ५ °सगुरुकम् भा० ॥ ६ °हिष्णुपदोपलक्षिता चतुष्क° भा० ॥ ७ साधोश्चतु° कां० विना ॥

**उवस्सए य संथारे, उवही संघपाहुणे ।**
**सेहट्ठवणुद्देसे, अणुन्ना भंडणे गणे ॥ ३७२२ ॥**
**अणप्पज्झ अगणि आऊ, वीआर पुत्त संगमे ।**
**संलेहण वोसिरणे, वोसट्ठे निट्ठिए तिहं ॥ ३७२३ ॥**

उपाश्रयस्य संस्तारकस्योपधेर्वा प्रदानार्थं संयतीप्रतिश्रयं गच्छेत् । काश्चिद्वा संयत्यः परीषहपराजिता अवधावनाभिमुख्यो वर्त्तन्ते तासां स्थिरीकरणार्थं सङ्घप्राघुणो गच्छेत् । इह कुलस्थविरो गणस्थविरः सङ्घस्थविरो वा सङ्घस्य गौरवार्हतया प्राघुण इव प्राघुण उच्यते । शैक्षस्य वोपस्थापनां स्थापनाकुलानां वा स्थापनां कर्तुं तत्र व्रजेत् । वसतावस्वाध्यायिके श्रुतस्योद्देशमनुज्ञां वा कर्तुं तत्र गच्छेत् । 'भण्डनं' कलहः तद् वा तासां परस्परमुत्पन्नं तदुपशमनार्थं गन्तव्यम् । "गणे" त्ति प्रवर्त्तिन्या कालगतायां गणचिन्तार्थं गच्छेत् ॥

"अणप्पज्झ" त्ति देशीपदमनात्मवशवाचकम्, ततश्चानात्मवशायाः—यक्षाविष्टादिरूपाया आर्यिकाया मन्त्र-तन्त्रादिप्रयोगेणात्मवशतां कर्तुं गच्छेत् । अग्निना वा संयतीवसतिर्दग्धा, अप्कायपूरेण वा प्लाविता, विचारभूमौ वा गच्छन्तीनां तासां सोपसर्गम्, "पुत्ते" त्ति पुत्रः उपलक्षणत्वात् पिता भ्राता वा तासां कालगतो भवेत्, "संगमे" त्ति पुत्र-भ्रात्रादिरेव तासां सञ्ज्ञातकश्चिरादागतो भवेत् तस्य यः सङ्गमः—मीलकस्तदर्थम्, तथा 'संलेखनं' भक्तप्रत्याख्यानाय परिकर्मणां काचिदार्यिका करोति, 'व्युत्सर्जनं वा' भक्तप्रत्याख्यानं कर्तुकामा काचिद् विद्यते, 'व्युत्सृष्टं वा' कयाचिद् भक्तं प्रत्याख्यातम् अनशनं प्रतिपन्नमित्यर्थः, एतेषु कारणेषु गच्छेत् । अथ काचिद् 'निष्ठिता' कालगता ततः शेषसंयतीनां शोकापनयनार्थं 'त्र्यहं' त्रीन् दिवसान् यावदुपर्युपरि सूरिणा गन्तव्यमिति श्लोकद्वयसङ्क्षेपार्थः ॥ ३७२२ ॥ ३७२३ ॥

अथैतदेव प्रतिपदं बिभावयिषुराह—

**अज्जाणं पडिकुट्ठं, वसही-संथारगाण गहणं तु ।**
**ओभासिउ दाउं वा, वच्चेज्जा गणहरो तेणं ॥ ३७२४ ॥**

आर्याणां स्वयं वसतेः संस्तारकाणां च ग्रहणं भगवता 'प्रतिकुष्टं' प्रतिषिद्धम्, अतो वसतिमवभाषितुं गणधरो गच्छति । संस्तारकांश्च तासां प्रायोग्यानुत्पाद्य तान् प्रदातुं गणधरस्तत्र व्रजेत् ॥ ३७२४ ॥ अथोपधिद्वारमाह—

**पडियं पम्हुट्ठं वा, पलावियं अवहियं व उग्गमियं ।**
**उवहिं भाएतुं जे, दाएउं वा वि वच्चेज्जा ॥ ३७२५ ॥**

भिक्षादौ पर्यटन्तीनां तासामुपधिः पतितः, स्वाध्यायभूमौ वा गतानां "पम्हुट्ठं" ति विस्मृतः, उदकेन वा प्लावितः, स्तेनैर्वाऽपहृतः, स च भूयोऽपि साधुभिर्लब्धः; अपूर्वो वा उपधिस्तैः 'उद्गमितः' उत्पादितः, अतस्तमुपधिं भाजयितुं वा दातुं वा गणधरो व्रजेत् । तत्र पतित-विस्मृतादेरुपकरणस्य यद् यस्याः सत्कं तस्य तस्या एव यद् विभज्य समर्पणं तद् भाजनमुच्यते,

१ भा० कां० विनाऽन्यत्र—°धावना भवति मुख्या वर्त्त° मो० ले० । °धारणा भवति मुख्या वर्त्त° त० डे० ॥ २ °स्परं समु° मो० ले० ॥

यत् पुनरपूर्व उपधिरुत्पाद्य तासां दीयते तद् दानम्। अथवा भाजनं प्रवर्त्तिन्या अभावे शेषसंयतीनां विभज्य समर्पणम्, यत्तु प्रवर्त्तिन्या हस्ते समर्प्यते तद् दानम् ॥ ३७२५ ॥

अथ सङ्घप्राघुणद्वारमाह—

**ओहाणाभिमुहीणं, थिरकरणं काउ अज्जियाणं तु ।**
**गच्छेज्जा पाहुणओ, संघ-कुलथेर-गणथेरो ॥ ३७२६ ॥**

अवधावनाभिमुखीनां परीषहपराजितानामार्यिकाणां स्थिरीकरणं कर्तुं प्राघुणको गच्छेत्। कः पुनः प्राघुणकः? इत्याह—सङ्घस्थविरः कुलस्थविरो गणस्थविरो वा, उपलक्षणमिदम्, तेनान्योऽपि यः स्थिरीकरणलब्धिसम्पन्नः स गच्छति ॥ ३७२६ ॥ अथ शैक्षद्वारमाह—

**अन्नत्थ अप्पसत्था, होज्ज पसत्था य अज्जिगोवसए ।**
**एएण कारणेणं, गच्छेज्ज उवट्ठवेउं जे ॥ ३७२७ ॥**

अन्यत्र विधीयमाना उपस्थापना क्षारा-ऽङ्गार-कचवराद्यप्रशस्तद्रव्ययुक्तत्वादप्रशस्ता भवेत्, आर्यिकोपाश्रये तु प्रशस्ता, एतेन कारणेन शैक्षमुपस्थापयितुं "जे" इति पादपूरणे आर्यिकावसतिं गच्छेत् ॥ ३७२७ ॥ स्थापनाद्वारमाह—

**ठवणकुलाइँ ठवेउं, तासिं ठवियाणि वा निवेएउं ।**
**परिहरिउं ठवियाणि, ठवणाऽऽदियणं व वोत्तुं जे ॥ ३७२८ ॥**

दानश्राद्धादीनि स्थापनाकुलानि तासां समक्षं स्थापयितुम्, यद्वा तानि स्ववसतौ स्थापितानि परं तासां 'निवेदयितुम्' 'अमुकममुकं च कुलं स्थापितम्' इत्येवं ज्ञापयितुम्, इदानीं वा तानि कुलानि स्थापितानि ततः 'परिहर्तुं' 'न निर्वेष्टव्यानि' इत्येवं निवारयितुम्, येषु जन्मसूतक-मृतसूतकादियुक्तेषु कुलेषु पूर्वमित्वरस्थापना कृता तेषु विवक्षितावधिपरिपूर्त्यनन्तरं भूयोऽपि 'आदानं' ग्रहणं कुरुतेत्यनुज्ञावचनं वक्तुं गन्तव्यम् ॥ ३७२८ ॥ अथोद्देशा-ऽनुज्ञाद्वारद्वयमाह—

**वसहीएँ असज्झाए, गोरव भय सद्ध मंगले चेव ।**
**उद्देसादी काउं, वाएउं वा वि गच्छेज्जा ॥ ३७२९ ॥**

वसतावस्वाध्यायिके जाते संयतीवसतिमुद्देशमनुज्ञां वा कर्तुं गच्छेत्। अथवा यदाचार्यः स्वयं तासामुद्देशादिकं करोति ततस्ता आचार्यविषयं यद् गौरवं यच्च तदीयं भयं ताभ्यां शीघ्रं तदङ्ग-श्रुतस्कन्धादिकमधीयते, आचार्येण वा स्वयमुद्दिष्टे तासां महती श्रद्धोपजायते, प्रशस्तद्रव्यादिगुणयुक्तत्वाच्च तत्रोद्देशादौ विधीयमाने मङ्गलं भवेत्, एतैः कारणैरुद्देशादिकं कर्तुं तत्र गच्छेत्। प्रवर्त्तिन्यां वा कालगतायामन्या काचित् तासां वाचनादात्री न विद्यते ततो गणधरो वाचयितुं गच्छेत् ॥ ३७२९ ॥ भण्डनद्वारमाह—

**उप्पन्ने अहिगरणे, विओसवेउं तहिं पसत्थं तु ।**
**अच्छेंति खउरियाओ, संजमसारं ठवेउं जे ॥ ३७३० ॥**

अधिकरणे उत्पन्ने सति ताः संयमस्य सारं—सर्वस्वभूतमुपशमं पार्श्वे स्थापयित्वा "जे" इति प्राग्वत् "खउरियाओ" कलुषितचेतसः परस्परमनालपन्त्यस्तिष्ठन्ति, ततस्ता व्युपशमयितुं 'तत्रैव'

१ °याणि व, ठ° ताभा० ॥ २ °तेत्याज्ञा° त० डे० ॥ ३ °रमा° भा० विना ॥

संयतीवसतौ गणधरस्यान्यस्य वा तथाविधोपशमनालब्धिसम्पन्नस्य गमनं प्रशस्तं भवति ॥३७३०॥

गणधरद्वारमाह—

**जइ कालगया गणिणी, नत्थि उ अन्ना उ गणहरसमत्था ।**
**एतेण कारणेणं, गणचिंताए वि गच्छेज्जा ॥ ३७३१ ॥**

यदि 'गणिनी' प्रवर्तिनी कालगता, नास्ति चान्या संयती गणभरोद्वहनसमर्था, अत एतेन कारणेन गणचिन्ताकरणार्थमपि गच्छेत् ॥ ३७३१ ॥ अथात्मवशाद्वारमाह—

**अन्नं जक्खाइट्ठं, [व] खित्तचित्तं व दित्तचित्तं वा ।**
**उम्मायं पत्तं वा, काउं गच्छेज्ज अप्पवज्झं ॥ ३७३२ ॥**

यक्षेण आविष्टा–गृहीता यक्षाविष्टा । अपमाननया क्षिप्तं–नष्टं चित्तं यस्याः सा क्षिप्तचित्ता । या तु हर्षातिरेकेणापहृतचित्ता सा दीप्तचित्ता भण्यते । या तु मोहनीयकर्मोदयेन चित्तशून्यतामुपगता सा उन्मादप्राप्ता । ईदृशामार्यां विज्ञायाचार्यो मन्त्रेण वा तन्त्रेण वा "अप्पवज्झं" ति 'आत्मवशां' स्वस्थचित्तां कर्तुं संयतीवसतिं गच्छेत् ॥ ३७३२ ॥ अग्निद्वारमाह—

**जइ अगणिणा उ वसही, दड्ढा डज्झइ व डज्झिहिति व त्ति ।**
**नाऊण व सोऊण व, उवघेत्तुं जे व जाएज्जा ॥ ३७३३ ॥**

यद्यग्निना संयतीवसतिर्दग्धा, दह्यते वा सम्प्रतिकाले, अथवा प्रत्यासन्नाग्निप्रदीपनदर्शनेन धक्ष्यते इति ज्ञात्वा वा स्वयं 'श्रुत्वा वा' परमुखेनाकर्ण्य तां वसतिम् 'उपग्रहीतुं' संस्थापयितुं निर्वापयितुं वा "जे" इति पादपूरणे संयतीवसतिं 'यायात्' गच्छेत् ॥ ३७३३ ॥

अथाप्कायद्वारमाह—

**नंइपूरेण व वसही, वुज्झइ वूढा व वुज्झिहिति व त्ति ।**
**उदगभरियं व सोच्चा, उवघेत्तुं तं तु वच्चेज्जा ॥ ३७३४ ॥**

नदीपूरेण प्रसरता वसतिः साम्प्रतम् 'उह्यते' नीयते, 'व्यूढा वा' नीता, 'वक्ष्यते वा' नेष्यते, उदकेन वा वसतिर्भृता, एवं श्रुत्वा 'तां' वसतिम् 'उपग्रहीतुम्' उल्लिञ्चनादिकं कर्तुं व्रजेत्॥३७३४॥

विचारद्वारमाह—

**घोडेहि व धुत्तेहि व, अहवा वि जतीवियारभूमीए ।**
**जयणाए व करेउं, संठवणाए व वच्चेज्जा ॥ ३७३५ ॥**

घोडाः–चट्टाः धूर्ताः–द्यूतकारादयः, तैर्वसत्याः पुरोहडे गच्छन्त्यस्ता उपसर्ग्यन्ते ततस्तेषां सानुनयनिवारणार्थं गच्छेत् । अथवा यतीनां विचारभूमौ ताः समागच्छन्ति तन्निवारणार्थं गच्छति । अथवा यतनया तासां कायिकाभूमिं विचारभूमिं वा कर्तुं पूर्वकृताया वा संस्थापनानिमित्तं व्रजेत् ॥ ३७३५ ॥ पुत्रद्वारमाह—

**पुत्तो वा भाया वा, भगिणी वा होज्ज ताण कालगया ।**
**अज्जाएँ दुक्खियाए, अणुसट्ठीए वि गच्छेज्जा ॥ ३७३६ ॥**

पुत्रो वा भ्राता वा भगिनी वा तासां कालगता भवेत् ततो या तत्रार्यिका 'दुःखिता' शोकसा-

---

१ नदिपूरएण वसही ताभा० ॥

गराबगाढा भवति तस्या अनुशिष्ट्यर्थमपि सूरिः स्वयमेव गच्छेत् ॥ ३७३६ ॥

तस्याश्चेयमनुशिष्टिर्दातव्या—

**तेलोक्कदेवमहिया, तित्थयरा नीरया गया सिद्धिं ।**
**थेरा वि गया केई, चरणगुणपभावया धीरा ॥ ३७३७ ॥**

येऽपि तावत् 'त्रैलोक्यदेवमहिताः' भुवनत्रयवासिभिः सुरा-ऽसुरैरभ्यर्चितास्तीर्थकरास्तेऽपि भगवन्तः 'नीरजसः' सकलकर्मनिर्मुक्ताः 'गताः' प्राप्ताः सिद्धिम्, तथा 'स्थविरा अपि' **ऋषभसेन-गौतमादयः** केचित् चरमदेहधारिणो गताः सिद्धिम् । कथम्भूताः ? चरणगुणानां—मूलोत्तरगुणरूपाणां स्वयमेव चरणेनान्येषां चोपदेशद्वारेण प्रभावकाः—प्रकर्षेण स्फातिं नेतारश्चरणगुणप्रभावकाः, 'धीराः' परीषहोपसर्गैरक्षोभ्याः, यद्येवंविधा अपि महापुरुषाः कालगतास्ततः शेषजनैर्मरणे किमाश्चर्यम् ? इति भावः ॥ ३७३७ ॥ तथा—

**बंभी य सुंदरी या, अन्ना वि य जाउ लोगजेट्ठाओ ।**
**ताओ वि य कालगया, किं पुण सेसाउ अज्जाउ ॥ ३७३८ ॥**

ब्राह्मी च सुन्दरी च अन्या अपि च या लोकज्येष्ठा **आर्यचन्दना-मृगावती**प्रभृतय आर्यिकास्ता अपि कालगताः, किं पुनः शेषा आर्यिकाः ? ॥ ३७३८ ॥ ततः—

**न हु होइ सोइयव्वो, जो कालगओ दढो चरित्तम्मि ।**
**सो होइ सोतियव्वो, जो संजमदुब्बलो विहरे ॥ ३७३९ ॥**

'न हु' नैवासौ साधु-साध्वीजनः शोचितव्यो भवति, यश्चारित्रे 'दृढः' निःप्रकम्पः सन् भक्तप्रत्याख्यानादिविधिना कालगतः; किन्तु स वराकः शोचनीयो भवति यः पृथिव्याद्युपमर्दनमनेषणीयपिण्डादिग्रहणं वा कुर्वन् संयमेन दुर्बलो विहरति ॥ ३७३९ ॥ अपि च—

**लद्धूण माणुसत्तं, संजमसारं च दुल्लभं जीवा ।**
**आणाइ पमाएणं, दोग्गइभयवड्ढणा होंति ॥ ३७४० ॥**

'लब्ध्वा' प्राप्य मानुषत्वं तथा संयम एव सारः—प्रधानं मोक्षाङ्गं तं च 'दुर्लभं' महानीरधिनिमग्नानर्घ्यरत्नमिव दुःप्रापं लब्ध्वा ये जीवा भागवत्याः 'आज्ञायाः' विधि-प्रतिषेधरूपायाः प्रमादेन कालं गमयन्ति ते दुर्गतिभयवर्धना भवन्ति, आत्मनो देवादिदुर्गतिपरिभ्रमणजनितं भयं वर्द्धयन्तीति भावः । एवमनुशिष्टिस्तासां दातव्या ॥ ३७४० ॥ अथ **सङ्गमद्वार**माह—

**पुत्तो पिया व भाया, अज्जाणं आगओ तहिं कोई ।**
**घित्तूण गणहरो तं, वच्चति तो संजतीवसहिं ॥ ३७४१ ॥**

पुत्रः पिता वा भ्राता वा आर्याणां सम्बन्धी चिरप्रोषितस्तत्र कश्चिदागतो भवेत्, ततस्तं गृहीत्वा गणधरः संयतीवसतिं व्रजति, येन तासां तस्मिन् संज्ञातकसाधौ दृष्टे समाधिरुपजायते ॥ ३७४१ ॥ अथ संलेखन-व्युत्सर्जन-व्युत्सृष्ट-निष्ठितद्वाराणि युगपदाह—

**संलिहियं पि य तिविहं, वोसिरियव्वं च तिविह वोसट्ठं ।**

---

१ °**नां-लोकोत्तर**° ताटी० मो० ले० ॥ २ °**यमाचर**° भा० कां० ॥ ३ °**नस्य मर**° भा० कां० ॥ ४ **शोचनीयो भव**° भा० ॥

**कालगय त्ति य सोचा, सरीरमहिमाइ गच्छेज्जा ॥ ३७४२ ॥**

इहं संलेखितम् अपिशब्दात् संलेख्यमानं वस्तु त्रिधा—आहारः शरीरमुपकरणं च, यद्वोपधिः शरीरं कषायाश्चेति । व्युत्स्रष्टव्यमप्येवमेव त्रिविधम्, अनशनप्रतिपत्तिकाले एतदेव त्रयं व्युत्सर्जनीयमिति भावः । एवं व्युत्सृष्टमपि त्रिविधम् । एषु त्रिष्वपि तस्याः स्थिरीकरणार्थं सूरिणा गन्तव्यम् । यावत् 'कालगता सा संयती' इति वार्त्ता श्रुता, तां च श्रुत्वा तस्याः शरीरमहिमार्थं गणधरः स्वयमेव गच्छेत् ॥ ३७४२ ॥

**जाहे वि य कालगया, ताहे वि य दुन्नि तिन्नि वा दिवसे ।**
**गच्छेज्ज संजईणं, अणुसद्धिं गणहरो दाउं ॥ ३७४३ ॥**

यदापि च प्रवर्त्तिनीप्रभृतिका महानिनादसंयती कालगता भवति तदा द्वौ त्रीन् वा दिवसान् संयतीनामनुशिष्टिं प्रदातुं गणधरो गच्छेत् ॥ ३७४३ ॥

गतं "गम्यते कारणजाते" ( गा० ३७२१ ) इति मूलद्वारम् । अथ प्राघुणकद्वारमाह—

**अप्पबिति अप्पतितिया, पाहुणया आगया सउवचारा ।**
**सिज्जायर मामाए, पडिकुट्ठुद्देसिए पुच्छा ॥ ३७४४ ॥**

प्राघुणकाः साधव आत्मद्वितीया आत्मतृतीया वा तत्रागताः, तैश्च तत्र श्रुतम्, यथा—अत्र संयत्यस्तिष्ठन्ति; ततस्ते तासां वसतिं सोपचाराः प्रविशन्ति । सोपचारा नाम-त्रिषु स्थानेषु प्रयुक्तनैषेधिकीशब्दाः, यद्वा संयतीभिर्येषां वक्ष्यमाण उपचारः प्रयुक्तस्ते सोपचारा उच्यन्ते । तेषु समागतेषु प्रवर्तिनी यदि स्थविरा तत आत्मद्वितीया निर्गच्छति, अथ तरुणी तत आत्मतृतीया । या च तत्र स्थविरा सा पुरतस्तिष्ठति । ततः साधवः शय्यातरकुलं मामाककुलं प्रतिकुष्टकुलानि च–रजकादिसम्बन्धीनि औद्देशिकं च येषु कुलेषु क्रियते तानि प्रवर्त्तिन्याः समीपे पृच्छन्ति ॥ ३७४४ ॥ अथोपचारं व्याख्याति—

**आसंदग कट्ठमओ, भिसिया वा पीढगं व कट्ठमयं ।**
**तक्खणलंभे असई, पडिहारिग पेहऽभोगऽण्णे ॥ ३७४५ ॥**

यदि साधुषु समागतेषु तत्क्षणादेव काष्ठमय आसन्दकोऽशुषिरादिगुणोपेतः प्राप्यते, वृषिका वा काष्ठमयं वा पीठकं लभ्यते ततस्तदानीमेव तद् ग्रहीतव्यम् । अथ तत्क्षणादेवासन्दकादि न लभ्यते ततोऽनागतं प्रातिहारिकं गृहीत्वा स्थापयन्ति । "पेह" त्ति तच्चोभयसन्ध्यं प्रत्युपेक्षन्ते । "भोगऽन्ने" त्ति अकारप्रश्लेषादन्यो नाम–संयतीजनस्तस्य प्रातिहारिकस्य भोगं न करोति । ततस्ते तत्रोपविष्टाः संयतीनां निराबाधादिवार्त्तां पृष्ट्वा शय्यातरकुलादीनि पृच्छन्ति ॥ ३७४५ ॥

अथ केन विधिना ते पृच्छन्ति ? केन वा विधिना तास्तेषां दर्शयन्ति ? इत्युच्यते—

**बाहाइ अंगुलीइ व, लट्ठीइ व उज्जुअं ठिओ संतो ।**
**न पुच्छेज्जे न दाएज्जा, पच्चावाया भवे तत्थ ॥ ३७४६ ॥**

शय्यातरादिकुलं पृच्छन् दर्शयन् वा 'बाहया' बाहुं प्रसार्य, एवमङ्गुल्या वा यष्ट्या वा

---

१ °हं संलेखनायां संलेख्यं वस्तु भा० ॥ २ °ज्ज संजतीणं, अणुसट्ठिं वा भवे ताभा० ॥

गृहस्य 'ऋजुकं' सम्मुखं स्थितः सन् न पृच्छेद् न वा दर्शयेत् । कुतः ? इत्याह—यतस्तत्रैवं पृच्छ्यमाने दर्श्यमाने वा प्रत्यपाया बहवो भवन्ति ॥ ३७४६ ॥ तानेवाह—

**तेणेहिं[1] अगणिणा वा, जीवियववरोवणं व पडिणीए ।**
**खरए खरिया सुण्हा, नट्ठे वट्टक्खुरे संका ॥ ३७४७ ॥**

बाह्वादिकं प्रसार्य साधुना यद् गृहं पृष्टम् संयत्या वा दर्शितम् ततः स्तेनैः किञ्चिदपहृतं भवेत्, अग्निना वा तद् गृहं दग्धम्, प्रत्यनीकेन वा तस्मिन् गृहे कस्यापि जीवितव्यपरोपणं कृतम्, ( ग्रन्थाग्रम्[3]—२५४२० ) द्व्यक्षरको वा द्व्यक्षरिका वा केनचिदपहृता, स्नुषा वा केनचिद् धूर्त्तेन सह पलायिता, 'वृत्तखुरो वा' प्रधानस्तुरङ्गमो नष्टो भवेत् ततः साधु-साध्वीविषया शङ्का भवेत्—नूनमेतैरेवापहृतम् दग्धमित्यादि; ततो नाविधिना पृच्छेत् न वा दर्शयेत् ॥ ३७४७ ॥ तत्र चाऽऽसीनास्ते साधवो न हसन्ति न वा कन्दर्पं कुर्वन्ति, किन्तु—

**सेज्जायराण धम्मं, कहिंति अज्जाण देंति अणुसट्ठिं ।**
**धम्मम्मि य कहियम्मि य, सव्वे संवेगमावन्ना ॥ ३७४८ ॥**

शय्यातराणां धर्मं कथयन्ति, आर्याणां चोद्यतानां स्थिरीकरणार्थं सीदन्तीनां पुनरुद्यमनार्थमनुशिष्टिं प्रयच्छन्ति । धर्मे च कथिते 'सर्वे' श्राद्धाः संयत्यश्च संवेगमापन्ना भवन्ति, आत्मनश्च निर्जरा भवति ॥ ३७४८ ॥ प्राघुणकद्वारमेव प्रकारान्तरेण व्याचष्टे—

**अन्नो वि अ आएसो, पाहुणग अभासिया उ तेणभए ।**
**चिलिमिणिअंतरिया खलु, चाउस्साले वसेज्जा णं ॥ ३७४९ ॥**

अयम् 'अन्यः' अपर आदेशः प्राघुणकद्वारे समस्ति—ते प्राघुणकाः 'अभाषिकाः' द्रविडादिदेशोद्भवाः, ततस्तत्र तेषामुपाश्रयो दुर्लभः, अतस्तदर्थं संयत्यो वसतिं मार्गयन्ति । यदि ताभिरपि गवेषयन्तीभिर्न लब्धा ततो वृक्षमूलादिषु बहिर्वसन्ति । अथ बहिः स्तेनभयं ततो यत्रार्याः स्थिताः सन्ति तत् चतुःशालं भवेत्, तत्रान्यस्यां शालायां साधवश्चिलिमिलिकया अन्तरिता वसेयुः ॥ ३७४९ ॥ चतुःशालस्याभावे विधिमाह—

**कुड्डंतरस्स[4] असती, कडओ पुत्ती व अंतरे थेरा ।**
**तेसंतरिया खुड्डा, समणीण वि मग्गणा एवं ॥ ३७५० ॥**

अन्यस्या वसतेरभावे संयताः संयत्यश्चैकस्मिन् गृहे वसन्तः ◁ कुड्यान्तरिते वसन्ति । ▷ कुड्यान्तरस्याभावे कटकोऽपान्तराले दीयते । कटकस्याभावे पोतं—वस्त्रं तन्मयी ◁ [6]चिलिमिलिका । अथ ▷ चिलिमिलिकायाः स्तेनभयं ततो यस्मिन् पार्श्वे संयत्यस्ततः प्रथमं स्थविराः, तैरन्तरिताः क्षुल्लकाः, ततो मध्यमाः, ततस्तरुणा इति । एवं श्रमणीनामपि मार्गणा कर्त्तव्या, तद्यथा—स्थविरसाधूनामासन्ने क्षुल्लिकाः, ततः स्थविराः, ततो मध्यमाः, ततो दृढकुड्यासन्ने तरुण्यः स्थाप्यन्ते ॥ ३७५० ॥ तत्रस्थितानां विधिमाह—

---

१ °हिंऽगणि° ताभा० ॥ २ खर-पे(बे)खरिया ताभा० विना ॥ ३ °म्—९५०० ताटी० । °म्—५०० मो० ले० ॥ ४ °तरियस्सऽसती भा० ताभा० चूर्णौ विशेषचूर्णौ च ॥ ५ °न्तः 'कुड्यान्तरस्यासति' कुड्यान्तरस्याभावे त० ॥ ६ ◁ ▷ एतदन्तर्गतः पाठः भा० कां० एव वर्त्तते ॥ ७ ◁ ▷ एतदन्तर्गतः पाठः भा० एव वर्त्तते ॥

**अन्नाए आभोगं, नाएँ ससद्दं करेंति सज्झायं ।**
**अन्नुव्वाया व सुवे, अच्छंति व अन्नहिं दिवसं ॥ ३७५१ ॥**

यदि तत्र जनेनाज्ञाताः स्थितास्ततो रात्रौ 'आभोगम्' उपयोगं कुर्वते, तूष्णीका आसते इत्यर्थः । अथ ज्ञातास्ततः 'सशब्दं' महता शब्देन युक्तं स्वाध्यायं कुर्वन्ति । अथातीवोद्वाताः—परिश्रान्तास्ततः स्वपन्ति । कारणतश्चैकं द्वौ त्रीन् वा दिवसान् तत्रैव यदि स्थास्नवः ततो दिवसम् 'अन्यत्र' उद्यानादिषु स्थित्वा रात्रौ तत्र वसन्ति । कारणाभावे तु तत्रैकरात्रमुषित्वा प्रभाते व्रजन्ति ॥ ३७५१ ॥

**समणी समण पविट्ठे, निसंत उल्लावऽकारणे गुरुगा ।**
**पयला निद्द तुयट्टे, अच्छीमलणे गिही मूलं ॥ ३७५२ ॥**

श्रमणीजने श्रमणजने च कायिकां कृत्वा प्रविष्टे सति यद्येको वाऽनेके वा एकया वाऽनेकाभिर्वा संयतीभिः समं 'निशान्ते' निःसंचरवेलायामुल्लापम् 'अकारणे' आगाढकारणाभावे कुर्वन्ति ततश्चतुर्गुरुकम् । तथाऽन्यत्रोद्यानादिषु श्वापद-स्तेनादिभयाद् दिवाऽपि तत्रैव तिष्ठन्तो यदि प्रचलायन्ते निद्रायन्ते त्वग्वर्त्तयन्ति वा अक्षिणी वा मलयन्ति तत्र चतुर्गुरुकम् । अथ गृही प्रचलादि विदधानं तं दृष्ट्वा शङ्कां करोति—किमेष स्वाध्यायजागरेण खिन्नः प्रचलायते ? उत सागारिकजागरेण ? इत्यादि ततश्चतुर्गुरु । निःशङ्किते मूलम् ॥ ३७५२ ॥

**उच्चारं पासवणं, व अन्नहिं मत्तएसु व जयंति ।**
**अदिट्ठ पविट्ठा वा, अदिट्ठ णिंतेधरा भयिता ॥ ३७५३ ॥**

उच्चारं प्रश्रवणं वा संयतीकायिकाभूमिं विमुच्यान्यत्र कुर्वन्ति, मात्रकेषु वा कृत्वा बहिः परिष्ठापनीयां यतन्ते । तत्र च यदि गृहिभिरदृष्टाः ◁ प्रविष्टास्ततोऽदृष्टा एव निर्गच्छन्ति, अथ दृष्टाः ▷ प्रविष्टास्ततः 'भक्ताः' विकल्पिताः, दृष्टा अदृष्टा वा निर्गच्छन्तीति भावः ॥ ३७५३॥

**तत्थऽन्नत्थ व दिवसं, अच्छंता परिहरंति निद्दाई ।**
**जयणाए व सुविंती, उभयं पि य मग्गए वसहिं ॥ ३७५४ ॥**

तत्र रजन्यामुषित्वा दिवसतः 'तत्र वा' संयतीवसतौ 'अन्यत्र वा' उद्यानादिषु तिष्ठन्तो निद्रा-प्रचलादिकं परिहरन्ति, यवनिकान्तरिता वा यतनया स्वपन्ति यथा सागारिको न पश्यति । यदि ते तत्र कियन्तमपि कालं स्थातुकामास्ततः 'उभयमपि' साधवः साध्व्यश्चान्यां वसतिं मार्गयन्ति । लब्धायां च तत्र साधवस्तिष्ठन्ति ॥ ३७५४ ॥ गतं प्राघुणकद्वारम् । अथ गणधरद्वारमाह—

**अहिणा विसूइका वा, सहसा डाहो व होज्ज सासो वा ।**
**जति आगाढं अज्जाण होइ गमणं गणहरस्स ॥ ३७५५ ॥**

'अहिना' सर्पेण काचिदार्यिका दष्टा, अतिमात्रे वा भुक्ते विशूचिका कस्याश्चिदजनिष्ट, सहसा पित्तेनाग्निना वा 'दाहः' दाहज्वरो वाऽभवत्, श्वासो वा कस्याश्चिदकस्मादजनि, एवमादिकं यदि आगाढं कार्यमार्याणां भवति ततो दिवा रात्रौ वा गणधरस्य गमनमनुज्ञातम् ॥ ३७५५ ॥ अथवा—

---

१ °ना । यतस्तत्र यदि भा० कां० विना ॥ २ ◁ ▷ एतच्चिह्नगतः पाठः भा० कां० एव वर्त्तते ॥

**पडिणीय मेच्छ मालव, गय गोणा महिस तेणगाई वा ।**
**आसन्ने उवसग्गे, कप्पइ गमणं गणहरस्स ॥ ३७५६ ॥**

प्रत्यनीक-म्लेच्छ-मालवस्तेन-गज-गो-महिष-स्तेनकादयो वा संयतीनामुपसर्गं कर्त्तुमारब्धाः, यद्वा न तावत् ते उपसर्गयन्ति परं तेषामासन्न उपसर्गो वर्त्तते तत्क्षणादेव भावीत्यर्थः, ततः कल्पते गणधरस्यान्यस्य वा समर्थस्य तन्निवारणार्थं गमनम् ॥ ३७५६ ॥

गतं गणधरद्वारम् । अथ महर्द्धिकद्वारमाह—

**रायाऽमच्चे सेट्ठी, पुरोहिए सत्थवाह पुत्ते य ।**
**गामउडे रट्ठउडे, जे य गणहरे महिड्ढीए ॥ ३७५७ ॥**

'राजा' पृथिवीपतिः । 'अमात्यः' मन्त्री । अष्टादशानां प्रकृतीनां महत्तरः श्रेष्ठी । पौर-जनपदयुक्तस्य राज्ञो होमादिनाऽशिवाद्युपद्रवप्रशमनः पुरोहितः । यस्तु क्रयाणकजातं गृहीत्वा लाभार्थमन्यदेशं व्रजन् सार्थं वाहयति—योग-क्षेमचिन्तया पालयति स सार्थवाहः । पुत्रशब्दः प्रत्येकमभिसम्बध्यते, यथा—राजा राजपुत्र इत्यादि । तथा 'ग्रामकूटः' ग्राममहत्तरः, 'राजकूटः' राष्ट्रमहत्तरः, एते प्रव्रजिता इह गृह्यन्ते । यश्च गणधरो राजादिबहुमतो विद्यातिशयसम्पन्नो वा, एते सर्वेऽपि महर्द्धिका उच्यन्ते ॥ ३७५७ ॥

एतेषां संयतीवसतिं गच्छताममी गुणा भवन्ति—

**अज्जाण तेयजणणं, दुज्जण सेचमक्कारया य गोरवया ।**
**तम्हा समणुण्णायं, गणहर गमणं महिड्ढीए ॥ ३७५८ ॥**

आर्याणां 'तेजोजननं' माहात्म्योत्पादनम् । दुर्जनानां च 'सचमत्कारता' साशङ्कता भवति, न किञ्चित् प्रत्यनीकत्वं कुर्वन्तीत्यर्थः । लोके च आर्याणां गौरवमुपजायते । तस्माद् गणधरस्य 'महर्द्धिकस्य च' राजप्रव्रजितादेर्गमनमार्यिकाप्रतिश्रये समनुज्ञातम् ॥ ३७५८ ॥

ताश्चार्यिकास्तान् राजादिदीक्षितान् दृष्ट्वा इत्थं चिन्तयन्ति—

**संतविभवा जइ तवं, करेंति अवइज्झिऊण इड्ढीओ ।**
**सीयंतथिरीकरणं, तित्थविवड्ढी य वण्णो य ॥ ३७५९ ॥**

सद्विभवा अप्यमी यदि 'ऋद्धीः' राज्यादिसम्पदः 'अपोज्झ्य' परित्यज्य तपः कुर्वन्ति ततो वयमसतीं सम्पदं प्रार्थयमानाः किमेवं प्रमादमभ्यास्तिष्ठामः ? इत्येवं सीदन्तीनामार्यिकाणां स्थिरीकरणं कृतं भवति । स्थिरीकरणे च क्रियमाणे तीर्थस्य विवृद्धिः । तीर्थवृद्धौ च प्रवचनस्य 'वर्णः' यशःप्रवादः प्रभावितो भवति ॥ ३७५९ ॥

गतं महर्द्धिकद्वारम् । अथ 'प्रच्छादना च शैक्षे' इति द्वारमाह—

**वीसुंभिओ य राया, लक्खणजुत्तो न विज्जती कुमरो ।**
**पडिणीएहि व कहिए, आहावंती दवदवस्स ॥ ३७६० ॥**

कस्यापि नृपतेस्त्रयः पुत्राः सम्यग्दर्शनलब्धबुद्धयो दीक्षां कक्षीकृतवन्तः । कालान्तरेण च स राजा 'विश्वग्भूतः' शरीरात् पृथग्भूतः, कालगत इत्यर्थः । ततोऽमात्यादयः 'वयमराजकाः

---

१ गोणो म° ताभा० ॥ २ सचमकार° ताभा० ॥

सन्तोऽनाथाः' इति परिभाव्य राज्यलक्षणोपेतं कुमारं प्रयत्नेन गवेषितवन्तः, परं न विद्यते कोऽपि लक्षणयुक्तः कुमारः । ततः कथितं 'प्रत्यनीकैः' तच्चनिकादिभिः, यथा—येषां मध्ये-ऽस्यैव नृपतेः पुत्राः प्रव्रजिताः सन्ति ते साधवो विहरमाणा इहैवोद्याने सम्प्राप्ताः । ततस्ते-ऽमात्यादयः सम्यग् ज्ञात्वा छत्र-चामर-खड्गादिकं राजार्हं वस्तु गृहीत्वा द्रुतद्रुतम् 'आधावन्ति' साधूनां समीपमागच्छन्ति ॥ ३७६० ॥ अथ प्रत्यनीकाः केन कारणेन कथयन्ति ? इत्युच्यते—

अइ सिं जणम्मि वन्नो, य आयति इड्ढिमंतपूया य ।
रायसुयदिक्खिएणं, तित्थविवड्ढी य लद्धी य ॥ ३७६१ ॥

अमुना राजसुतेन दीक्षितेन 'सिं' अमीषां श्रमणानाम् 'अति' अतीव 'जने' लोके 'वर्णः' यशःप्रवादो विजृम्भते, यथा—अहो ! अमीषामेव धर्मः प्रतपति यत्रेदृशाः प्रव्रजन्ति । 'आय-तिश्च' सन्ततिरमीषामनेनाव्यवच्छिन्ना भविष्यति । ऋद्धिमन्तश्च–श्रेष्ठ्यादय एतत्प्रभावेणामीषां पूजां कुर्वन्ति । तथा 'राजसुतोऽत्र प्रव्रजितः' इति कृत्वाऽन्येऽपि बहव इभ्यपुत्रादयः प्रव्रज-न्तीति तीर्थवृद्धिः । लब्धिश्चाहार-वस्त्रादीनां प्रचुरा भवति । उत्प्रव्रजितेन पुनरमुना वर्णादयो न भविष्यन्तीति बुद्ध्या प्रत्यनीकाः कथयन्ति ॥ ३७६१ ॥

ततस्तानमात्यादीनुत्प्रव्राजनार्थमागच्छतः श्रुत्वा ते राजपुत्राः किं कुर्वन्ति ? इत्याह—

दट्ठूण य राइड्ढिं, परीसहपराइतो तहिं कोइ ।
आपुच्छइ आयरिए, सम्मत्ते अप्पमाओ हु ॥ ३७६२ ॥

तां राजसमृद्धिमागच्छन्तीं दृष्ट्वा तत्र कोऽपि राजपुत्रः परीषहपराजितः सन्नाचार्यानापृ-च्छते—भगवन् ! अशक्तोऽहं प्रव्रज्यामनुपालयितुम् । तत आचार्या भणन्ति—सौम्य ! सम्यक्त्वे भवता 'हुः' निश्चितमप्रमादः कर्त्तव्यः ॥ ३७६२ ॥

नाऊण य माणुस्सं, सुदुल्लभं जीवियं च निस्सारं ।
संघस्स चेतियाण य, वच्छल्लत्तं करेज्जाहि ॥ ३७६३ ॥

ज्ञात्वा 'मानुष्यं' मनुष्यभवं सुदुर्लभं जीवितं च निस्सारं मत्वा सङ्घस्य चैत्यानां च 'वत्स-लत्वं' भक्तिं कुर्या इति ॥ ३७६३ ॥ द्वितीयः पुनराह—

किं काहिंति ममेते, पडलग्गतणं व मे जढा इड्ढी ।
को वाऽनिट्ठफलेसुं, विभवेसु चलेसु रज्जेज्जा ॥ ३७६४ ॥

किं करिष्यन्ति मम 'एते' अमात्यादयः ? पटलग्नतृणमिव मया राज्यऋद्धिः "जढा" परित्यक्ता, अपि च राज्यादिविभवानां भुक्तानां ध्रुवं नरकपातः फलम्, चलाश्चामी सन्ध्याभ्ररागवत्, अतः को वाऽनिष्टफलेषु चलेषु च विभवेषु 'रज्येत' रागमनुबध्नीयात् ? । एवमुक्त्वा प्रकट एव प्रदेशे स्थितः सर्वानुपसर्गानभिभूय स संयममनुपालयति ॥ ३७६४ ॥

यस्तु तृतीयः स किं करोति ? इत्याह—

तइओ संजमअट्ठी, आयरिए पणमिऊण तिविहेणं ।
गेलन्नं नियडीए, अज्जाण उवस्सगमतीति ॥ ३७६५ ॥

---

१ इत्युच्यते भा० ॥

तृतीयो राजपुत्रः संयमार्थी स गुरुभिरभिहितः—आर्य ! संयतीप्रतिश्रये निलीयस्व । स प्राह—इच्छाम्यहं भगवद्वचनम्, निस्तारयत मां येन केनापि प्रकारेणास्मादुपसर्गसमुद्रात् । एवमुक्त्वा स आचार्यान् 'त्रिविधेन' मनो-वाक्-कायकर्मणा प्रणम्य निकृत्या ग्लानत्वं कृत्वाऽऽर्याणामुपाश्रयं प्रविशति ॥ ३७६५ ॥

**अंतद्धाणा असई, जइ मंसू लोय अंबिलीबीए ।**
**पीसित्ता देंति मुहे, अपगासें ठवेंति य विरेगो ॥ ३७६६ ॥**

यद्यन्तर्धानकारणमञ्जन-मन्त्रादि विद्यते ततः सोऽन्तर्हितः कृत्वा तत्रैव स्थाप्यते । अथ नास्त्यन्तर्धानकरणं ततः संयतीनेपथ्यं कारयित्वा तद्वसतिं नेतव्यः । यदि तस्य 'श्मश्रु' कूर्चं विद्यते ततो लोचः क्रियते । अम्लिनीबीजानि च पिष्ट्वा तस्य मुखे ददति, तैर्मुखमालिम्पन्तीत्यर्थः । अप्रकाशे च प्रदेशे संयतीवसतौ तं स्थापयन्ति । विरेकश्च विरेचनकारकौषधप्रयोगेण क्रियते ॥ ३७६६ ॥

**संथार कुसंघाडी, अमणुन्ने पाणए य परिसेओ ।**
**घंसण पीसण ओसह, अद्धिति खरकम्मि मा बोलं ॥ ३७६७ ॥**

संस्तारके स संयतः शाय्यते । मलिनां त्रुटितां च कुसङ्घाटीं स प्रावरणं कार्यते । 'अमनोज्ञं' दुर्गन्धि पानकं तेन तस्य परिषेकः क्रियते । तथा काश्चन संयत्यस्तत्र चन्दनस्य घर्षणम् अन्यास्तु पेषणं औषधस्य कुर्वन्ति । अपराः पुनः करतलपर्यस्तमुखा भूमिगतदृष्टयोऽधृतिं कुर्वाणास्तिष्ठन्ति, 'खरकर्मिकेषु च' राजपुरुषेषु समागतेषु भणन्ति—मा बोलं कुरुत, एषा प्रवर्त्तिनी ग्लाना न युष्मदीयं बोलं सहते । एवमसौ तत्र संयतीवेषेण तिष्ठन् सर्वाण्यपि स्थान-निषदनादीनि पदानि कुर्यात् ॥ ३७६७ ॥ गतं 'प्रच्छादना च शैक्षे' इति द्वारम् । अथ 'असहिष्णोश्चतुष्कभजना' इति द्वारं बिभावयिषुराह—

**दोन्नि वि सहू भवंती, सो वऽसहू सा व होज्ज ऊ असहू ।**
**दोण्हं पि उ असहूणं, तिगिच्छ जयणाय कायव्वा ॥ ३७६८ ॥**

यस्या ग्लानसाध्व्याश्चिकित्सा क्रियते यश्च तस्याः प्रतिचरकः तौ द्वावपि सहिष्णू भवतः, एष प्रथमो भङ्गः । "सो वऽसहु" त्ति साध्वी सहिष्णुः 'स च' साधुरसहिष्णुरिति द्वितीयः । "सा व होज्ज ऊ असहु" त्ति 'सा' साध्वी असहिष्णुः साधुः सहिष्णुः, एष तृतीयः । साध्वी साधुश्च द्वावप्यसहिष्णू इति चतुर्थः । एतेषु चतुर्षु भङ्गेषु यतनया चिकित्सा कर्त्तव्या ॥ ३७६८ ॥

तत्र प्रथमभङ्गं तावद् भावयति—

**सोऊण ऊ गिलाणं, पंथे गामे व भिक्खवेलाए ।**
**जइ तुरियं नागच्छइ, लग्गइ गुरुए चउम्मासे ॥ ३७६९ ॥**

श्रुत्वा ग्लानां संयतीं पथि वा परिभ्रमन् ग्रामे वा तिष्ठन् भिक्षावेलायां वा पर्यटन् यदि त्वरितं ग्लानासमीपं नागच्छति ततश्चतुरो मासान् गुरुकान् 'लगति' प्राप्नोति, अतो ग्लानां श्रुत्वा निर्जरामभिलषता सर्वेणाप्यक्षेपेणैव तस्याः समीपं गन्तव्यम् ॥ ३७६९ ॥

कथं पुनस्तस्याः श्रवणं भवति ? उच्यते—यत्र ग्रामे ग्लाना विद्यते तस्य बहिरदूरसमीपे

व्यतिव्रजन्तं संयतं गृहस्थः कोऽपि ब्रूते—युष्माकं ग्लानायाः प्रतिजागरणं क्रियते? न क्रियते? । साधुराह—सुष्ठु क्रियते? । गृही ब्रवीति—यद्येवं ततः—

**लोलंती छग-मुत्ते, सोउं घेत्तुं दवं तु आगच्छे ।**
**तूरंतो तं वसहिं, णिवेयणं छायणऽज्जाए ॥ ३७७० ॥**

एकाकिनी संयती 'छगण-मूत्रे' आत्मीय एव पुरीष-प्रश्रवणे 'लोलन्ती' विलुठन्ती अत्र ग्रामे तिष्ठति । एवं श्रुत्वा तत एव 'द्रवं' पानकं गृहीत्वा त्वरमाणः संयतीवसतिमागच्छति । ततो बहिः स्थित्वा शय्यातरीपार्श्वादार्यिकाया निवेदनं कारयति, यथा—बहिः साधुरागतोऽस्तीति । सा च शय्यातरी तस्या आर्यिकाया दुर्निवसितगात्राणां छादनं कुर्यात् । अथ सा न करोति तत आत्मनाऽपि यतनया तां छादयति ॥ ३७७० ॥

ततः स साधुस्तस्या इत्थं स्थिरीकरणं करोति—

**आसासो वीसासो, मा भाहि इति थिरीकरण तीसे ।**
**धुविउं चीरऽत्थुरणं, तीसेऽप्पण बाहि कप्पो य ॥ ३७७१ ॥**

'आश्वासो नाम' धीरा भव, अहं ते सर्वमपि वैयावृत्त्यं करिष्ये । 'विश्वासस्तु' त्वं मम माता भगिनी दुहिता वा अतो मा भैषीः, एवं वयोऽनुरूपमविरुद्धं वचनं ब्रवीति । इत्थं तस्याः स्थिरीकरणं कृत्वा छगण-मूत्रलुलितां तां धावित्वा तस्या एवौपग्रहिकाणि चीवराणि तेषामभावे आत्मीयान्यपि संस्तारके आस्तृणाति तां वा परिधापयति । ततः खरण्टितचीवराणां प्रतिश्रयाद् बहिः कल्पो दातव्यः । भूमेरपि तस्या उपलेपनं कर्त्तव्यम् ॥ ३७७१ ॥

अथ प्रवेशविधिं विशेषत आह—

**एएहिँ कारणेहिं, पविसंते ऊ णिसीहिया तिन्नि ।**
**ठिच्चाणं कायव्वा, अंतर दूरे पवेसे य ॥ ३७७२ ॥**

'एतैः' ग्लानत्वादिभिः कारणैः संयतीवसतौ प्रविशता तिस्रो नैषेधिक्यः कर्त्तव्याः । कथम्? इत्याह—'स्थित्वा' प्रथमनैषेधिकीकरणानन्तरं कियन्तमपि कालं प्रतीक्ष्य द्वितीया नैषेधिकी, ततो द्वितीयानन्तरं तृतीयाऽप्येवमेव कर्त्तव्या । तथा प्रथमा नैषेधिकी 'दूरे' अग्रद्वारे, द्वितीया 'अन्तरे' मध्यभागे, तृतीया 'प्रवेशे' मूलद्वारे विधातव्या ॥ ३७७२ ॥ ततः—

**पडिहारिए पवेसो, तकज्जसमाणणा य जयणाए ।**
**गेलण्णे चिट्ठणादी, परिहरमाणो जतो खिप्पं ॥ ३७७३ ॥**

शय्यातरीभिः 'प्रतिहारिते' आर्याया ज्ञापिते सति प्रवेशः कर्त्तव्यः । प्रविष्टेन च तस्य-विवक्षितस्य ग्लानकार्यस्य पूर्वोक्तया वक्ष्यमाणया च यतनया समापना कर्त्तव्या । एवं ग्लानत्वे तत्र स्थानादीनि पदानि कुर्यात् । तथा ग्लानकृत्यान्युत्सर्गतोऽशुद्धं परिहरन् करोति । अथ शुद्धं न प्राप्यते ततः "जउ" त्ति अनागाढे पञ्चकहान्या 'यतः' यतमानः करोति, "खिप्पं" ति आगाढे क्षिप्रमेव करोति । अथवाऽऽत्म-परोभयसमुत्थदोषान् परिहरमाणो ग्लानकृत्यं करोति, कुतः? इत्याह—"जतो खिप्पं" ति यत आत्मसमुत्थादिदोषान् अपरिहरतः क्षिप्रमेव संयमवि-

१ °रणा क्रि° भा० कां० ॥ २ °नं कारयेत् । अ° भा० कां० ॥

राधना भवति ॥ ३७७३ ॥ कीदृशः पुनस्तां प्रतिजागर्ति ? इत्युच्यते—

पियधम्मो दढधम्मो, मियवादी अप्पकोतुहल्लो य ।
अज्जं गिलाणियं खलु, पडिजग्गति एरिसो साहू ॥ ३७७४ ॥

प्रियः—इष्टो धर्मो यस्य स प्रियधर्मा । धर्मे यः दृढः—निश्चलो दृढधर्मा, राजदन्तादित्वाद् दृढशब्दस्य पूर्वनिपातः । मितं—परिमिताक्षरं वदितुं शीलमस्येति मितवादी । अल्पशब्दस्य इह अभाववचनत्वाद् अल्पम्—अविद्यमानं कौतूहलं स्त्रीरूपदर्शनादिषु यस्य सोऽल्पकौतूहलः । ईदृशः साधुरार्यां ग्लानां प्रतिजागर्ति ॥ ३७७४ ॥

सो परिणामविहिण्णू, इंदियदारेहिँ संवरियदारो ।
जं किंचि दुब्भिगंधं, सयमेव विगिंचणं कुणति ॥ ३७७५ ॥

'सः' वैयावृत्त्यकरः 'वर्ण-गन्धादिभिः शुभा अपि भावा भूयोऽप्यशुभा भवन्ति, अशुभा अपि च संस्कारविशेषतो विश्रसया वा शुभा जायन्ते' इत्येवं पुद्गलानां परिणामविधिं जानातीति परिणामविधिज्ञः । तथा इन्द्रियद्वारेभ्यः संवृतद्वारः, इह "गम्ययपः कर्माधारे" ( सिद्ध० २–२–७४ ) इत्यनेन पञ्चमी, ततोऽयमर्थः—इन्द्रियरूपाणि द्वाराण्यधिकृत्य संवृतद्वारः, न पुनर्बाह्यद्वाराणि । ईदृशः साधुर्यत् किञ्चिदार्यिकायाः संज्ञादिकं दुरभिगन्धं तस्य स्वयमेव 'विवेचनं' स्फेटनं परिष्ठापनं वा करोति ॥ ३७७५ ॥

संवृतद्वारपदस्य सफलीकरणार्थमाह—

गुज्झंग-वदण-कक्खोरुअंतरे तह थणंतरे दट्ठुं ।
साहरति ततो दिट्ठिं, न य बंधति दिट्ठिए दिट्ठिं ॥ ३७७६ ॥

गुह्याङ्गस्य वदनस्य कक्षाया ऊर्वोश्च यान्यन्तराणि—अवकाशास्तानि तथा स्तनान्तराणि च दृष्ट्वा 'संहरति' भास्करादिव ततो दृष्टिं निवर्त्तयति, 'न च' नैव आर्यिकाया दृष्टौ दृष्टिं 'बध्नाति' मीलयतीत्यर्थः ॥ ३७७६ ॥ अथ 'यत् किञ्चिद् दुरभिगन्धम्' इत्यादि व्याचष्टे—

उच्चारे पासवणे, खेले सिंघाणए विगिंचणया ।
उव्वत्तण परियत्तण, णंतग णिल्लेवण सरीरे ॥ ३७७७ ॥

उच्चारस्य प्रश्रवणस्य खेलस्य सिङ्घानस्य च विवेचनं करोति । उद्वर्त्तनं नाम—तस्या उत्तानायाः पार्श्वतः करणम्, तत इतरस्यां दिशि स्थापनं परिवर्त्तनम्, ते अपि करोति । 'नन्तकं' वस्त्रं तथा शरीरं च यदि संज्ञया मूत्रेण वा लिप्तं ततस्तदपि निर्लेपयितव्यम् ॥ ३७७७ ॥

किरियातीतं णाउं, जं इच्छति एसणाएँ जं तत्थ ।
सद्धावणा परिण्णा, पडियरण कहा णमोकारो ॥ ३७७८ ॥

क्रियायां क्रियमाणायामपि या न प्रगुणीभवति सा क्रियातीता, तां ज्ञात्वा सा प्रष्टव्या—केन भवत्याः समाधिरुत्पद्यते ? । ततो यद् द्रव्यमिच्छति तदेषणया शुद्धं शुद्धस्यालाभे पञ्चकहानियतनयाऽपि गृहीत्वा दातव्यम् । ततः सा तथा श्रद्धाप्यते यथा 'परिज्ञाम्' अनशनं प्रतिपद्यते । अनशनप्रतिपन्नायाश्च सर्वप्रयत्नेन प्रतिचरणम् । धर्मकथा च तथा कर्त्तव्या यथा सम्यगु-

---

१ °स्याभावे पञ्च° भा० ॥

समार्थमाराधयति । नमस्कारश्च तस्या मरणवेलायां दातव्य इति ॥ ३७७८ ॥

क्रियासाध्याया विधिमाह—

दव्वं तु जाणियव्वं, समाधिकारं तु जस्स जं होति ।
णायम्मि य दव्वम्मि, गवेसणा तस्स कायव्वा ॥ ३७७९ ॥

यस्य रोगस्य यद् द्रव्यं पथ्यं यस्या वा ग्लानाया यत् समाधिकारकं तत् प्रथमत एव ज्ञातव्यम् । ज्ञाते च तस्मिन् द्रव्ये सर्वप्रयत्नेन तस्य गवेषणा कर्त्तव्या ॥ ३७७९ ॥

सयमेव दिट्ठपाढी, करेति पुच्छति अजाणओ वेज्जं ।
दीवण दव्वादिम्मि य, उवदेसे ठाति जा लंभो ॥ ३७८० ॥

वैद्यकशास्त्ररूपो दृष्टः पाठो येन स एवंविधः स्वयमेव चिकित्सां करोति । अथ 'अज्ञः' वैद्यकशास्त्राभिप्रायं न जानाति ततो वैद्यं पृच्छति । तस्य च वैद्यस्य दीपनं करोति, यथा—अहं कारणत एकाकी सञ्जातः, अतो मा अपशकुनं गृह्णध्वम् । ततो वैद्येन द्रव्य-क्षेत्र-काल-भावभेदात् चतुर्विधे उपदेशे दत्ते सति ब्रवीति—यदि वयमेतन्न लभामहे ततः किं प्रयच्छामः ? । एवं पृष्टे भूयो द्रव्यान्तरे उपदिष्टे ब्रूते—यद्येतदपि न लभामहे ततः किं कर्त्तव्यम् ? । एवं तावत् पृच्छति यावद् यस्य द्रव्यस्य ध्रुवो लाभः । तदुपदेशे च पृच्छा 'तिष्ठति' उपरमत इत्यर्थः ॥ ३७८० ॥ अथ रात्रौ विधिमाह—

अब्भासे व वसेज्जा, संबद्ध उवस्सगस्स वा दारे ।
आगाढे गेलण्णे, उवस्सए चिलिमिणिविभत्ते ॥ ३७८१ ॥

संयतीप्रतिश्रयस्य 'अभ्यासे' समीपे यदसम्बद्धमन्यगृहं तत्र वसेत्, तस्याभावे सम्बद्धेऽप्यन्यगृहे, तदभावे उपाश्रयस्य वा द्वारे । अथागाढं ग्लानकार्यं भवति तत उपाश्रयेऽपि चिलिमिलिकाविभक्ते वसति ॥ ३७८१ ॥ किमर्थं पुनरुपाश्रयस्यान्तर्वसति ? इत्याह—

उव्वत्तण परियत्तण, उभयविगिंचट्ठ पाणगट्ठा वा ।
तक्करभय भीरू अथ, णमोकारट्ठा वसे तत्थ ॥ ३७८२ ॥

तस्या उद्वर्त्तनं परिवर्त्तनं वा कर्त्तुम्, उभयस्य वा—कायिकी-संज्ञालक्षणस्य विवेचनार्थम्, तृष्णार्त्ताया वा रात्रौ पानकदानार्थम्, यद्वा तत्र तस्करभयं सा च संयती स्वभावेनैव भीरुः ततो भयरक्षणार्थम्[2], 'अथ' इति अथवा मरणवेलायाः प्रत्यासन्नत्वाद् नमस्कारदानार्थं वा तत्र रात्रौ वसेत् ॥ ३७८२ ॥

धिइ-बलजुत्तो वि मुणी, सेज्जातर-सण्णि-सिज्झगा[3]दिजुतो ।
वसति परपच्चयट्ठा, सलाहणट्ठा य अवराणं ॥ ३७८३ ॥

यद्यपि स मुनिः सहिष्णुत्वाद् धृति-बलयुक्तस्तथापि शय्यातरेण संज्ञिना वा—श्रावकेण[4] सिज्झकेन वा—सहवासिना युतः—सहितः संयतीप्रतिश्रये वसति । तं च शय्यातरादिकमित्थं भणति—न वर्त्तते ममैकाकिनः संयतीप्रतिश्रये रात्रौ वस्तुम्, अतो मम द्वितीयेन भवता

१ °रू य ब ताभा० ॥ २ °म्, मरण° भा० कां० ॥ ३ सिज्झगा° ताभा० विना ॥ ४ °ण 'सिज्झकेन सिज्झकेन वा' सह° भा० ॥

भवितव्यम् । अथ किमर्थमेवं करोति? इति चेद्[1] इत्याह—'परप्रत्ययार्थं' परेषाम्—अगारिणां प्रतीत्युत्पादननिमित्तम्, यथा—नैष विरुद्धाभिप्रायेणात्र वसति । 'अपरेषां च' साधूनां श्लाघनार्थम्, धन्या अमी येषामेवंविधः सुदृष्टो धर्म इति ॥ ३७८३ ॥

**सो निज्जराएँ वट्टति, कुणति य आणं अणंतणाणीणं ।**
**स बितिज्जओ कहेती, परियट्टेगागि वसमाणो ॥ ३७८४ ॥**

'सः' साधुरेवं कुर्वन् विपुलायां निर्जरायां वर्त्तते, आज्ञां च 'अनन्तज्ञानिनां' तीर्थकृतां करोति । स च सद्वितीयो वसन् तस्य द्वितीयस्य धर्मं कथयति, अथैकाकी वसति ततः सर्वामपि रात्रिं परिवर्त्तयति ॥ ३७८४ ॥

**पडिजग्गिया य खिप्पं, दोण्ह सहूणं तिगिच्छ जतणाए ।**
**तत्थेव गणहरो अण्णहिं व जयणाएँ तो नेइ ॥ ३७८५ ॥**

एवं तेन साधुना प्रतिजागरिता सा 'क्षिप्रं' शीघ्रं प्रगुणीभवेत् । इत्थं द्वयोः सहिष्ण्वोर्यतनया चिकित्साकरणमुक्तम् । तां च प्रगुणीभूतां गृहीत्वा यदि तस्या गणधरः 'तत्रैव' आसन्ने समस्ति ततस्तं गाढं खरण्टयित्वा तस्य समर्पयति । अथ 'अन्यत्र' दूरदेशे ततः सार्थेन सह तां तत्र प्रस्थापयति, स्वयं वा यतनया तत्र नयति ॥ ३७८५ ॥ कथम्? इत्याह—

**निक्कारणिगिं चमढण, कारणिगिं णेति अहव अप्पाहे ।**
**गमणित्थि मिस्स संबंधि वज्जिते असति एगागी ॥ ३७८६ ॥**

यदि सा ग्लाना संयती निष्कारणं गणाद् निष्क्रम्यैकाकिनी भूता ततस्तां 'चमढयति' निर्भर्त्सयतीत्यर्थः । अथ कारणिका ततस्तां स्वयं नयति, येषां वा आचार्याणां सा संयती तेषां सन्दिशति, यथा—युष्माकं संयती साम्प्रतमत्र तिष्ठति, अस्या आनयनकृते सङ्घाटकः प्रहेयः । यदा पुनः स स्वयं नयति तदा इयं यतना—"गमणित्थि" इत्यादि । स्त्रीसार्थेन सम्बन्धिना समं प्रथमतो नयति, ◁[2] ततः स्त्रीसार्थेनैवासम्बन्धिमिश्रेण, ▷ ततः स्त्रीसार्थेनैवासम्बन्धिना । ततः पुरुषमिश्राभिरपि स्त्रीभिः—प्रथमं सम्बन्धिपुरुषयुक्ताभिः, ◁ ततो[3]ऽसम्बन्धिमिश्रपुरुषयुक्ताभिः, ▷ ततोऽसम्बन्धिपुरुषयुक्ताभिरपि । ततः पुरुषैरेव केवलैः—प्रथमं सम्बन्धिभिः, ततोऽसम्बन्धिमिश्रैः, ततोऽसम्बन्धिभिरपि समं नयति । एषां प्रकाराणामभावे स साधुरेकाक्यपि तां नयति, तत्र चात्मना पुरतो गच्छति, संयती तु नासन्ने नातिदूरे पृष्ठतः स्थिता आगच्छति ॥ ३७८६ ॥ गतः प्रथमो भङ्गः । अथ द्वितीयं भङ्गं विभावयिषुराह—

**न वि य समत्थो सव्वो, हवेज्ज एतारिसम्मि कज्जम्मि ।**

---

१ °द् उच्यते—'पर° कां० ॥

२-३ ◁ ▷ एतच्चिह्नान्तर्गतः पाठः भा० एव वर्त्तते । चूर्णिरप्येतत्पाठसंवादिनी, तथा च तत्पाठः—"निक्कारणिए गाधा कण्ठ्या । इत्थिसत्थेण संबंधिणा समं णेति, असइ इत्थीसत्थेण चेव असंबंधिमीसेणं, असति इत्थिसत्थेण चेव असंबंधिणा । एवं पुममीसाहिं वि थीहिं तिगं, पुरिसेहिं पि तिगं । अण्णे भणंति—इत्थिसत्थेण समं णेति, असति इत्थिमीसेणं, असति संबंधेयपुरिसेहिं समं । असति 'वज्जिते' त्ति असंबंधेएहिं समं । असतीते तेसिं सत्थाणं एगागी वि णेति ॥" इति ॥

**कायव्वो पुरिसकारो, समाहिसंधाणणट्ठाए[1] ॥ ३७८७ ॥**

'साध्वी सहिष्णुः साधुरसहिष्णुः' इत्ययं भङ्गो भाव्यते—'नापि च' नैव सर्वोऽपि साधुः 'एतादृशे' स्त्रियाः स्पर्शादावपि मनोनिग्रहात्मके कार्ये समर्थो भवेत् ततः किं सा ग्लाना सती तेन परित्यक्तव्या ? न इत्याह—ज्ञान-दर्शन-चारित्राणां यः समाधिः—अन्योऽन्याविरोधेनैकत्रावस्थानं तस्य संन्धानार्थं[2] तथा साधुना पुरुषकारः कर्त्तव्यः यथा तस्याश्चिकित्सा क्रियते आत्मनश्च शीलखण्डना न भवति ॥ ३७८७ ॥ स पुनः साधुः कथमसहिष्णुर्भवति ? इत्युच्यते—

**सोऊण य पासित्ता, संलावेणं तहेव फासेणं ।**
**एतेहि असहमाणे, तिगिच्छ जयणाइ कायव्वा ॥ ३७८८ ॥**

स्त्रियाः शब्दं श्रुत्वा रूपं वा तदीयं दृष्ट्वा तया सार्द्धं वा यः संलापो यो वा तस्याः स्पर्शस्तेन वा तस्य मोहोद्भवः समुल्लसति । एतैः प्रकारैः 'असहमानः' इन्द्रियनिग्रहं कर्त्तुमक्षमो यस्तेन यतनया चिकित्सा कर्त्तव्या । तद्यथा—प्रथमं सा ग्लाना प्रष्टव्या—आर्ये ! भवती किं सहिष्णुः ? उतासहिष्णुः ? । सा च गीतार्था वा भवेदगीतार्था वा ॥ ३७८८ ॥ तत्र—

**अविकोविया उ पुट्ठा, भणाइ किं मं न पाससी णियए ।**
**छग-मुत्ते लोलंतिं, तो पुच्छसि किं सहू असहू ॥ ३७८९ ॥**

'अविकोविदा' अगीतार्था पृष्टा इदं भणति—किं मां न पश्यसि निजके छगण-मूत्रे लोलन्तीम् ? तत एवं पृच्छसि किं सहिष्णुः ? असहिष्णुः ? इति ॥ ३७८९ ॥ साधुराह—

**पासामि णाम एतं, देहावत्थं तु भगिणि ! जा तुज्झं ।**
**पुच्छामि धितिबलं ते, मा बंभविराहणा होज्जा ॥ ३७९० ॥**

'नाम' इति कोमलामन्त्रणे, भगिनि ! पश्याम्यहमेनां देहावस्थां या साम्प्रतं तव वर्त्तते, परमहं 'ते' तव धृतिबलं पृच्छामि, मा मम तव च ब्रह्मव्रतविराधना भवेदिति कृत्वा ॥३७९०॥ ततः साध्वी ब्रूते—

**इहरा वि ताव सद्दे, रूवाणि य बहुविहाणि पुरिसाणं ।**
**सोऊण व दट्ठूण व, ण मणक्खोभो महं कोति ॥ ३७९१ ॥**

'इतरथाऽपि' नीरोगाया अपि मम तावत् पुरुषाणां गीतादीन् शब्दान् श्रुत्वा रूपाणि च 'बहुविधानि' विशिष्टनेपथ्यालङ्कृतानि दृष्ट्वा 'कोऽपि' मनागपि न मनःक्षोभो भवति ॥३७९१॥ किञ्च—

**संलवमाणी वि अहं, ण यामि विगतिं ण संफुसित्ताणं ।**
**हट्ठा वि किन्तु एण्हिं, तं पुण णियगं धितिं जाण ॥ ३७९२ ॥**

अहं सकलमपि दिवसं पुरुषेण सह संलपन्ती 'विकृतिं' विकारं न यामि, न वा पुरुषस्य हस्ताद्यवयवं[3] संस्पृश्यापि विकारं गच्छामि । तदेवं 'हृष्टाऽपि' नीरोगाऽप्यहमेवं सहिष्णुः, किं पुनः 'इदानीं' ग्लानाद्यवस्थां प्राप्ता ? त्वं पुनः 'निजकाम्' आत्मीयां धृतिं जानीहि ॥३७९२॥

---

१ संधारणट्ठाए भा० । एतदनुसारेणैव भा० टीका । दृश्यतां टिप्पणी २ ॥ २ सन्धारणार्थं भा० ॥ ३ °यवसंस्पृष्टाऽपि भा० ॥

एवमुक्ते स किं करोति ? इत्याह—

**सो मग्गति साहम्मिं, सण्णि अहाभद्दिगं व सूइं वा ।**
**देति य से वेदणगं, भत्तं पाणं व पाउग्गं ॥ ३७९३ ॥**

'सः' असहिष्णुः साधुस्तत्रान्यत्र वा ग्रामे 'साधर्मिकीं' संयतीं मार्गयति, तत्र च प्रथमं संविग्नां गीतार्थाम्, तदभावे संविग्नामगीतार्थाम्, तदलाभे पार्श्वस्थां गीतार्थाम्, तदप्राप्तौ पार्श्वस्थामेवागीतार्थाम् । अथ संयती न प्राप्यते ततः 'संज्ञिनीं' श्राविकाम्, तामपि प्रथमं गृहीताणुव्रताम्, ततो दर्शनश्राविकामपि; तदप्राप्तौ यथाभद्रिकामपि गवेषयति । तदलाभे 'सूतिकां' नवप्रसूतस्त्रीसूतिकर्मकारिणीं मार्गयति । सा च धर्मकथया प्रज्ञाप्यते यथा मुधिकयैव संयत्या वैयावृत्त्यं करोति । अथासौ मुधिकया नेच्छति ततो वेतनमपि तस्यै भक्तं पानं वा प्रायोग्यं ददाति ॥ ३७९३ ॥

**एयासिं असतीए, ण कहेति जहा अहं खु मिं असहू ।**
**सद्दादीजयणं पुण, करेमो एसा खलु जिणाणा ॥ ३७९४ ॥**

'एतासाम्' अनन्तरोक्तस्त्रीणामभावे स साधुस्तस्याः पुरतो नैवं कथयति, यथा—अहमसहिष्णुरस्मि; परमेवं स्वचेतसि निश्चिनोति, यथा—शब्दादिविषयां यतनां कुर्मः । एषा 'खलु' निश्चितं जिनानामाज्ञा ॥ ३७९४ ॥ यतनामेवाह—

**सद्दम्मि हत्थ-वत्थादिएहिं [2]दिट्ठिम्मि चिलिमिणंतरिओ ।**
**संलावम्मि परम्मुहो, गोवालगकंचुतो फासे ॥ ३७९५ ॥**

यद्यसौ साधुः शब्देऽसहिष्णुस्ततस्तां ग्लानां भणति—मा वचनेन मां व्यापारयेः, किन्तु हस्तेन वा वस्त्रेण वा अङ्गुल्या वा संज्ञां कुर्याः । यस्तु दृष्टिक्लीबः स सर्वमपि वैयावृत्त्यं चिलिमिलिकया अन्तरितः करोति । अथासौ संलापक्लीबस्ततोऽवश्यसंलपनीये पराङ्मुखः संलापं करोति । स्पर्शक्लीबस्तु गोपालककञ्चुकमात्मना प्रावृत्य तस्याः सर्वमप्युद्वर्तनादिकृत्यं करोति ॥ ३७९५ ॥

गतो द्वितीयभङ्गः । अथ तृतीय-चतुर्थभङ्गयोरतिदेशमाह—

**एसेव गमो नियमा, निग्गंथीए वि होति असहूए ।**
**दोण्हं पि हु असहूणं, तिगिच्छ जयणाएँ कायव्वा ॥ ३७९६ ॥**

'एष एव' द्वितीयभङ्गोक्तः 'गमः' प्रकारो नियमाद् निर्ग्रन्थ्यामप्यसहिष्णौ कर्त्तव्यः । नवरं यां शब्दादियतनामसावात्मना कृतवान् तां सा संयती कारयितव्या । 'द्वयोरपि च' संयती-संयतयोरसहिष्ण्वोः 'यतनया' द्वितीय-तृतीयभङ्गोक्तया चिकित्सा कर्त्तव्या ॥ ३७९६ ॥

◁ [3]प्रगुणीभूता च काचिदिदं ब्रूयात्— ▷

**आयंकविप्पमुक्का, हट्ठा बलिया य णिव्वुया संती ।**
**अज्जा भणेज्ज काई, जेट्ठज्जा ! वीसमामो ता ॥ ३७९७ ॥**

---

१ परं शब्दादिविषयां यतनां करोति । एषा° भा० ॥ २ दिट्ठीऍ चि° ताभा० ॥ ३ ◁ ▷ एतदन्तर्गतमवतरणं भा० नास्ति ॥

आतङ्केन—रोगेण विप्रमुक्ता सती हृष्टा सञ्जाता, तथा बलिका—उपचितमांस-शोणिता, निर्वृता—स्वस्थीभूतेन्द्रिया, एवंविधा सती काचिदार्यिका ब्रूयात्—ज्येष्ठार्य ! चिरं संयमभाग-कान्तावावाम् अत एनं भारं परित्यज्य यथासुखं किञ्चित् कालं तावद् 'विश्राम्यावः' विश्रामं गृह्णीवः ॥ ३७९७ ॥ किञ्च—

**दिट्ठं च परामुट्ठं, च रहस्सं गुज्झ एक्कमेक्कस्स ।**
**तं वीसमामों अम्हे, पच्छा वि[1] तवं चरिस्सामो ॥ ३७९८ ॥**

'रहस्यम्' एकान्तयोग्यं यद् गुह्यं तद् मदीयं भवता मयाऽपि भवदीयमुद्वर्त्तन-परिवर्त्तनादि-क्रियासु बहुश एकैकस्य दृष्टं परामृष्टं च, 'तत्' तस्माद् विश्राम्यावः किञ्चित् कालं 'पश्चात्' पश्चिमे काले तपश्चरिष्यावः ॥ ३७९८ ॥

**तं सोच्चा सो भगवं, संविग्गोऽवज्जभीरू दढधम्मो ।**
**अपरिमियसत्तजुत्तो, णिक्कंपो मंदरो चेव ॥ ३७९९ ॥**

'तत्' तस्या आर्यिकाया वचनं श्रुत्वा स भगवान् 'संविग्नः' मोक्षाभिलाषी, अवद्यं—पापं ततो भीरुः—चकितः, 'दृढधर्मा' चारित्रे स्थिरः, अपरिमितम्—इयत्तारहितं यत् सत्त्वं—धृतिबलं तेन युक्तः, अत एव निष्कम्पः 'मन्दर इव' मेरुगिरिरिव । यथा हि मन्दरो वायुना न कम्प्यते एवं परिभोगनिमन्त्रणवायुना स भगवान् न कम्पितवान् ॥ ३७९९ ॥ किन्तु—

**उद्धंसिया य तेणं, सुट्ठु वि जाणाविया य अप्पाणं ।**
**चरसु तवं निस्संका[2], उ सासियं सो उ चेतेइ ॥ ३८०० ॥**

'उद्धर्षिता' खरण्टिता गाढं तेन भगवता सा संयती, यथा—निर्धर्मे ! ईदृशं दुःखमनुभूय भवत्या वैराग्यमपि न सञ्जातम्, मयाऽपि साधर्मिकेति कृत्वा भवती चिकित्साकरणेन प्रगुणी-कृता, इतरथा मृता अभविष्यत् । एवं 'सुष्ठु अतीव ज्ञापिता सा 'आत्मानं' आत्मनो निरभिला-पतामित्यर्थः । ततश्च चर सम्प्रति निःशङ्का तपःकर्म, एवं तां शासित्वा 'सः' साधुः आवश्यकीं 'चेतयति' गमनं करोतीत्यर्थः ॥ ३८०० ॥ अथ द्वितीयपदमाह—

**बिइयपयमणप्पज्झे, पविसे अविकोविए व अप्पज्झे ।**
**तेण-ऽगणि-आउसंभम, बोहिकतेणेसु जाणमवि ॥ ३८०१ ॥**

द्वितीयपदे संयतीवसतौ 'अनात्मवशः' क्षिप्तचित्तादिको नैषेधिकीत्रयकरणमन्तरेणापि प्रविशेत् । आत्मवशो वा यः 'अविकोविदः' शैक्षः सोऽप्यविधिना प्रविशेत् । यद्वा स्तेना-ऽग्न्यप्कायसम्भ्रमेषु बोधिकस्तेनेषु वा 'जानन्नपि' गीतार्थोऽपि सहसा प्रविशेत् ॥ ३८०१ ॥

सूत्रम्—

**नो कप्पइ निग्गंथीणं निग्गंथउवस्सयंसि चिट्ठित्तए वा जाव काउस्सग्गं वा ठाणं ठाइत्तए २ ॥**

---

[1] वि वयं चरि° ताभा० ॥ [2] °का, तु सासितुं सो ताभा० ॥

अस्य सम्बन्धमाह—

**पडिवक्खेणं जोगो, तासिं पि ण कप्पती जतीणिलयं।**
**णिक्कारणगमणादी, जं जुज्जति तत्थ तं णेयं ॥ ३८०२ ॥**

"पडिवक्खेणं" ति भावप्रधानत्वाद् निर्देशस्य प्रतिपक्षतया 'योगः' सम्बन्धः क्रियते—यथा निर्ग्रन्थानां निर्ग्रन्थ्युपाश्रये गमनादिकं कर्तुं न कल्पते तथा 'तासामपि' निर्ग्रन्थीनां 'यतिनिलये' निर्ग्रन्थोपाश्रये निष्कारणे गमनादिकं कर्तुं न कल्पते। एतदर्थप्रतिपादनार्थमिदं सूत्रमारभ्यते। अत्र च 'यत्' प्रायश्चित्त-दोषजालादि पूर्वसूत्रोक्तं 'यत्र' निष्कारणगमनादौ युज्यते तत्र तद् 'ज्ञेयं' स्वबुद्ध्याऽभ्यूह्य ज्ञातव्यम् ॥ ३८०२ ॥

अनेन सम्बन्धेनायातस्यास्य व्याख्या प्राग्वत् ॥ अथ भाष्यम्—

**एसेव गमो णियमा, पण्णवण-परूवणासु अज्जाणं।**
**पडिजग्गती गिलाणं, साहुं जतणाएँ अज्जा वि ॥ ३८०३ ॥**

'एष एव' पूर्वसूत्रोक्तो गमो नियमात् प्रज्ञापना-प्ररूपणयोरार्याणामपि मन्तव्यः। प्रज्ञापना नाम—निष्कारणेऽविधिना प्रविशतीत्याद्युल्लेखेन चतुर्भङ्ग्याः सामान्यतः कथनम्। प्ररूपणा—पृथगेकैकभङ्गकस्य स्वरूपनिरूपणम्। तथा साधुं ग्लानमार्याऽपि यतनया तथैव प्रतिजागर्त्ति ॥ ३८०३ ॥ नवरम्—

**सा मग्गइ साधम्मिं, सण्णि अहाभद्द संवरादी वा।**
**देति य से वेदणयं, भत्तं पाणं च पायोग्गं ॥ ३८०४ ॥**

द्वितीय-तृतीय-चतुर्थभङ्गेषु 'सा' संयती 'साधर्मिकं' साधुं मार्गयति, तदप्राप्तौ 'संज्ञिनं' श्रावकम्, तदलाभे यथाभद्रकम्, तदभावे [1]संवरं—स्नानिकाशोधकम्, आदिशब्दादन्यमपि तथाविधं मार्गयति। यदि चासौ मुधिकया नेच्छति ततस्तस्य वेतनकमपि ददाति। भक्तं पानं च तस्य ग्लानस्य प्रायोग्यमुत्पादयति ॥ ३८०४ ॥

**॥ निर्ग्रन्थ्युपाश्रयप्रवेशप्रकृतं समाप्तम् ॥**

---

## चर्मप्रकृतम्

सूत्रम्—

**नो कप्पइ निग्गंथीणं सलोमाइं चम्माइं अहिट्ठित्तए ३ ॥**

अथास्य सूत्रस्य कः सम्बन्धः? इत्याह—

**बंभवयपालणट्ठा, अण्णोण्णउवस्सयं ण गच्छंति।**
**उवकरणं पि ण इच्छति, जहिँ पीला तस्स जोगोऽयं ॥ ३८०५॥**

---

१ पूर्वोक्तो भा० ॥ २ "संवरो ण्हाणितासोधओ" इति चूर्णौ विशेषचूर्णौ च ॥ ३ जोगेसो भा०। एतदनुसारेणैव भा० टीका। दृश्यतां पत्रं १०५१ टिप्पणी १ ॥

ब्रह्मव्रतपालनार्थं निर्ग्रन्था निर्ग्रन्थ्यश्चान्योऽन्योपाश्रयं न गच्छन्ति । अत उपकरणमपि तादृशं साधुः साध्वी वा नेच्छति ग्रहीतुम्, यत्र गृहीते 'तस्य' ब्रह्मचर्यस्य पीडा भवति । अयं 'योगः' सम्बन्धः ॥ ३८०५ ॥

**सतिकरणादी दोसा, अण्णोण्णउवस्सगाभिगमणेण ।**
**सतिकरण-कोउहल्ला, मा होज्ज सलोमए अहवा ॥ ३८०६ ॥**

स्मृतिकरण-कौतुकादयो दोषा अन्योऽन्योपाश्रयाभिगमनेन भवन्ति । अतः सलोमनि चर्मणि गृहीते संयतीनां स्मृतिकरण-कौतूहले मा भूतामिति प्रकृतं सूत्रमारभ्यते । 'अथवा' इत्ययमपरः सम्बन्धः ॥ ३८०६ ॥

अनेन सम्बन्धनायातस्यास्य व्याख्या—नो कल्पते निर्ग्रन्थीनां सलोमानि चर्माणि 'अधिष्ठातुं' निषदनादिना परिभोक्तुमिति सूत्रार्थः ॥ अथ भाष्यविस्तरः—

**चम्मम्मि सलोमम्मि, णिग्गंथीणं उवेसमाणीणं ।**
**चउगुरुगाऽऽयरियादी, तत्थ वि आणादिणो दोसा ॥ ३८०७ ॥**

सलोमनि चर्मणि निर्ग्रन्थीनामुपविशन्तीनां चतुर्गुरुकाः । अत एवाचार्य एतत् सूत्रं प्रवर्त्तिन्या न कथयति चतुर्गुरवः, प्रवर्त्तिनी श्रमणीनां न कथयति चतुर्गुरुकाः, श्रमण्यो न प्रतिशृण्वन्ति मासलघु । 'तत्रापि' अकथनेऽश्रवणे सलोमचर्मोपवेशने चाज्ञादयो दोषाः ॥३८०७॥

अथानन्तरोक्तमेव प्रायश्चित्तं विशेषयन्नाह—

**गहणे चिट्ठ णिसीयण, तुयट्टणे य गुरुगा सलोमम्मि ।**
**णिल्लोमे चउलहुगा, समणीणारोवणा चम्मे ॥ ३८०८ ॥**

सलोमचर्मणो ग्रहणं कुर्वन्ति चतुर्गुरुकाः तपसा कालेन च लघवः । गृहीत्वा तत्र 'स्थानम्' ऊर्ध्वस्थानरूपं कुर्वन्ति चतुर्गुरुकाः तपसा लघवः कालेन गुरवः, निषदनं कुर्वन्ति चतुर्गुरुकाः तपसा गुरवः कालेन लघवः, त्वग्वर्त्तनं कुर्वन्ति तपसा कालेन च गुरवः। निर्लोमचर्मणि तु चतुर्लघुकाः । एवमेव चतुर्षु स्थानेषु तपः-कालविशेषिता एषा श्रमणीनां 'चर्मणि' चर्मविषयाऽऽरोपणा मन्तव्या ॥ ३८०८ ॥ अत्र दोषान् दर्शयति—

**कुंथु-पणगाइ संजमे, कंटग-अहि-विच्छुगाइ आयाए ।**
**भारो भयभुत्तियरे, पडिगमणाई सलोमम्मि ॥ ३८०९ ॥**

सलोमचर्मणि कुन्थु-पनकादयो वर्षासु सम्मूर्च्छेयुः, तेषु स्थान-निषदनादिना विराध्यमानेषु संयमविराधना । कण्टकेन अहिना वृश्चिकादिना वा तत्रोपविष्टाः सुप्ता वा यद् उपघातमाप्नुवन्ति सा आत्मविराधना । भारश्च मार्गे गच्छन्तीनां तस्य महान् भवति । भयं च स्तेनादिभ्यस्तद्विषयं भवति । भुक्तभोगिनीनां च स्मृतिकरणम् इतरासां तु कौतुकमुपजायते । ततश्च प्रतिगमनं—भूयोऽपि गृहवासाश्रयणम्, आदिशब्दादन्यतीर्थिकगमनादि वा कुर्युः ॥ ३८०९ ॥

अथैनामेव निर्युक्तिगाथां व्याख्यानयति—

**तसपाणविराहणया, चम्म सलोमे उ होति अहिकरणं ।**

---

१ एषः 'यो' भा० ॥ २ "निर्युक्ति विस्तरः—चम्मम्मि गाहा" इति चूर्णौ विशेषचूर्णौ च ॥

**णिल्लोमे तसपाणा, संकुयमाणे य करणं वा ॥ ३८१० ॥**

सलोमनि चर्मणि संसक्तानां कुन्थुप्रभृतीनां त्रसप्राणिनां विराधना भवति। तच्चातिरिक्तोपकरणत्वादधिकरणं[1] भवति। निर्लोमन्यपि चर्मणि परिभुज्यमाने त्रसप्राणिनो विराध्यन्ते। सङ्कुचति च तस्मिन् 'करणं' पादकर्म संयती कुर्यात् ॥ ३८१० ॥

**अविदिण्णोवधि पाणा, पडिलेहा वि य ण सुज्झति सलोमे।**
**वासासु य संसजति, पतावमपतावणे दोसा ॥ ३८११ ॥**

तीर्थकरैः अवितीर्णः—अदत्तोऽयं सलोमचर्मलक्षण उपधिः। शुषिरतया च तत्र रोमान्तरेषु प्राणिनः सम्मूर्च्छन्ति, प्रत्युपेक्षणाऽपि च न शुध्यति। वर्षासु च कुन्थु-पनकादिभिस्तत् चर्म संसज्यते। यदि संसजनभयात् प्रतापयति ततोऽग्निविराधना, अथ न प्रतापयति ततस्त्रसप्राणिनः संसजन्ति, एवमुभयथाऽपि दोषा भवन्ति ॥ ३८११ ॥

**आगंतु तदुब्भूया, सत्ताऽझुसिरे वि गिण्हितुं दुक्खं।**
**अह उज्झति तो मरणं, सलोम-णिल्लोमचम्मेयं ॥ ३८१२ ॥**

'आगन्तुकास्तदुद्भूताश्च[2]' कुन्थु-पनकादयः सत्त्वा अशुषिरेऽपि ग्रहीतुं दुःखेन शक्यन्ते किं पुनः शुषिरे सलोमचर्मणि?। ततो यत् तेषां भूयोभूयः सङ्घट्यमानानां परितापनं तन्निष्पन्नं प्रायश्चित्तम्। अथ तदुद्भवान् जन्तूनुज्झति ततस्तेषां मरणं भवेत्। एतत् सलोम चर्माश्रित्योक्तम्। अथ सलोम-निर्लोम्नोरुभयोरपि दोषा उच्यन्ते ॥ ३८१२ ॥

**भारो भय परितावण, मारण अहिकरणमेव अविदिण्णे।**
**तित्थकर-गणहरेहिं, सतिकरणं भुत्तभोगीणं ॥ ३८१३ ॥**

सलोम्ना निर्लोम्ना वा चर्मणा मार्गे गच्छन्तीनां भारो भयं चोत्पद्यते। कुन्थु-पनकादिजीवानां परितापनं मारणं वा भवति। अथैतद्दोषभयात् परित्यजति ततोऽसंयतैर्गृहीतेऽधिकरणम्। तीर्थकर-गणधरैश्च 'अवितीर्णः' अदत्तोऽयमुपधिः। सलोमनि च परिभुज्यमाने स्मृतिकरणं भुक्तभोगिनीनाम्, इतरासां कौतुकमुपजायते ॥ ३८१३ ॥ कथम्? इत्याह—

**जइ ता अचेतणम्मि, अयिणे फरिसो उ एरिसो होति।**
**किमुया सचेतणम्मि, पुरिसे फरिसो[3] उ गमणादी ॥ ३८१४ ॥**

यदि तावदचेतने 'अजिने' चर्मणि ईदृशः स्पर्शो भवति ततः किं पुनः सचेतनस्य पुरुषस्य स्पर्शो भवति?। एवं विचिन्त्य काचिदार्यिका 'गमनम्' अवधावनं कुर्यात्, आदिशब्दाद् वैहायसमरणं वा प्रतिपद्यते[4] ॥ ३८१४ ॥ द्वितीयपदमाह—

**बिइयपय कारणम्मि, चम्मुव्वलणं तु होति णिल्लोमं।**
**आगाढ कारणम्मि, चम्म सलोमं पि जतणाए ॥ ३८१५ ॥**

द्वितीयपदे कारणे चर्मापि गृह्णीयात्। कथम्? इत्याह—'उद्वलनम्' अभ्यङ्गनं कस्याश्चिदार्यिकायाः कर्त्तव्यं तदर्थं निर्लोम चर्म गृह्यते। अथागाढं कारणं ततः सलोमचर्मणोऽपि

---

१ °णं मन्तव्यम्। नि° भा० ॥ २ °श्च सत्त्वाः शुषिरेऽपि ग्रहीतुं दुःखेन शक्यन्ते ततो यत् भा० ॥ ३ फासो कां० ॥ ४ °पद्येत भा० कां० ॥

यतनया परिभोगः कर्त्तव्य इति ॥ ३८१५ ॥ अथैनामेव निर्युक्तिगाथां विवृणोति—

उड्डम्मि वातम्मि धणुग्गहे वा, अरिसासु सूले व विमोइते वा ।
एगंग-सव्वंगगए व वाते, अब्भंगिता चिट्ठति चम्मऽलोमे ॥ ३८१६ ॥

यस्याः संयत्याः प्राचुर्येणोर्द्ध्ववात उच्छलति, 'धनुर्ग्रहोऽपि' वातविशेषो यः शरीरं कुब्जीकरोति स वा यस्या अजनिष्ट, अर्शांसि वा सञ्जातानि, शूलं वा अमीक्ष्णमुद्धावति, पाणिपाद्याङ्गं वा 'विमोचितं' स्वस्थानात् चलितम्, एकाङ्गगतो वा सर्वाङ्गगतो वा कस्याश्चिद् वातः समुत्पन्नः सा निर्लोमचर्मणि अभ्यङ्गिता तिष्ठति ॥ ३८१६ ॥

अथ सलोमविषयं विधिमाह—

तरच्छचम्मं अणिलामइस्स, कडिं व वेढेंति जहिं व वातो ।
एरंड-ऽणेरंडसुणेण डक्कं, वेढेंति सोविंति व दीविचम्मे ॥ ३८१७ ॥

'अनिलामयी' वातरोगिणी तस्याः कटीं तरक्षचर्मणा वेष्टयन्ति । 'यत्र वा' हस्तादौ वातो भवति तं वेष्टयन्ति । एरण्डेन वा—हडक्कितेन अनेरण्डेन वा शुना या दष्टा तां वा चर्मणा वेष्टयन्ति, द्वीपिचर्मणि वा तां स्वापयन्ति ॥ ३८१७ ॥

पुया व घस्संति अणत्थुयम्मि, पासा व घस्संति व[1] थेरियाए ।
लोहारमादीदिवसोवभुत्ते, लोमाणि काउं अह संपिहंति ॥ ३८१८ ॥

स्थविरायाः संयत्या अनास्तृते प्रदेशे उपविशन्त्याः पुतौ घृष्येते, सुप्ताया वा पार्श्वौ घृष्येते, ततः सलोम चर्मापि यद् दिवसतो लोहारादिभिरुपविशद्भिरुपभुक्तं तत् प्रातिहारिकं दिने दिने मार्गयित्वा लोमान्यधः कृत्वा 'सम्पिदधति' परिभुञ्जते इत्यर्थः ॥ ३८१८ ॥

दिवसे दिवसे व दुल्लभे, उच्चत्ता घेत्तुं तमाइणं[2] ।
लोमेहिं उण संविजोअए, मउअट्ठा व न ते समुद्धरे ॥ ३८१९ ॥

अथ प्रातिहारिकं दिवसे दिवसे गवेष्यमाणं दुर्लभं—न लभ्यते इत्यर्थः, ततः 'उच्चतया' निर्देजत्वेन "णं" इति तदजिनं गृहीत्वा रोमभिः 'संवियोजयेत्' रोमाण्युत्खनेदिति भावः । अथ तेषूत्खातेषु तदजिनं परुषस्पर्शं भवति ततो मृदुतार्थं न 'तानि' रोमाणि समुद्धरेत् ॥३८१९॥

सूत्रम्—

**कप्पइ निग्गंथाणं सलोमाइं चम्माइं अहिट्ठित्तए, से वि य परिभुत्ते नो चेव णं अपरिभुत्ते, से वि य पडिहारिए नो चेव णं अप्पडिहारिए, से वि य एगराईए नो चेव णं अणेगराईए ४ ॥**

कल्पते निर्ग्रन्थानां सलोमानि चर्माणि 'अधिष्ठातुं' परिभोक्तुम् । तत्रापि यत् चर्म परि-

---

१ व सोवियाए मो० ले० ॥　२ अत्र वृत्तिकृतां "णमाइणं" इति पाठोऽभिमतः, न चासौ क्वचिदपि भाष्यपुस्तकादर्शे दृश्यते ॥

भुक्तं तदेव ग्राह्यं नापरिभुक्तम् । तदपि च प्रातिहारिकं नाप्रातिहारिकम् । तदपि चैकरात्रिकं नैवानेकरात्रिकमिति सूत्रार्थः । एतद् निर्ग्रन्थानामपवादसूत्रम् ॥

अत्र शिष्यः प्राह—निर्ग्रन्थीनां किं कारणं न कल्पते ? सूरिराह—

**दोसा तु जे होंति तवस्सिणीणं, लोमाइणे ते ण जतीण तम्मि ।**
**तं कप्पती तेसि सुतोवदेसा, जं कप्पती तासि ण तं जतीणं ॥३८२०॥**

ये 'दोषाः' स्मृतिकरणादयस्तपस्विनीनां लोमयुक्तेऽजिने–चर्मणि भवन्ति ते यतीनां 'तस्मिन्' सलोमचर्मणि न भवन्ति । अतस्तत् कल्पते तेषां 'श्रुतोपदेशात्' प्रस्तुतसूत्रवचनात् । यच्च निर्लोम चर्म तासां कल्पते न तद् यतीनाम्, स्मृतिकरणादिदोषप्रसङ्गादिति ॥ ३८२० ॥ सलोमापि चर्म निर्ग्रन्थानामुत्सर्गतो न कल्पते, यत आह—

**निग्गंथाण सलोमं, ण कप्पती झुसिर तं तु पंचविहं ।**
**पोत्थग-तणपण दूसं, दुविहं चम्मम्मि पणगं च ॥ ३८२१ ॥**

सलोम चर्म निर्ग्रन्थानां न कल्पते, शुषिरं जीवाश्रयस्थानमिति कृत्वा । अथ कतिविधं शुषिरम् ? इति प्रश्नावकाशमाशङ्क्याह—'तत्तु' शुषिरं पञ्चविधम्, तद्यथा—पुस्तकपञ्चकं तृणपञ्चकं दूष्यं–वस्त्रं तत्पञ्चकं 'द्विविधं' अप्रत्युपेक्ष्यदूष्यपञ्चकं दुःप्रत्युपेक्ष्यदूष्यपञ्चकं च चर्मपञ्चकं चेति ॥ ३८२१ ॥ एतान्येव यथाक्रमं व्याचष्टे—

**गंडी कच्छिति मुट्ठी, छिवाडि संपुडग पोत्थगा पंच ।**
**तिण सालि-वीहि-कोद्दव-रालग-आरण्णगतणं च ॥ ३८२२ ॥**

गण्डीपुस्तकः कच्छपीपुस्तकः मुष्टिपुस्तकः सम्पुटफलकपुस्तकः छेदपाटीपुस्तकश्चेति पञ्च पुस्तकाः । एतेषां च स्वरूपमित्थमुक्तं पूर्वसूरिभिः—

बाहुल्ल-पुहत्तेहिं, गंडीपोत्थो उ तुल्लगो दीहो ।
कच्छवि अंते तणुओ, मज्झे पिहुलो मुणेयव्वो ॥
चउरंगुलदीहो वा, वट्टागिइ मुट्ठिपुत्थगो अहवा ।
चउरंगुलदीहो च्चिय, चउरंसो होइ विन्नेओ ॥
संपुडगो दुगमाई, फलगा वोच्छं छिवाडिमेत्ताहे ।
तणुपत्तूसियरूवो, होइ छिवाडी बुहा बिंति ॥
दीहो वा हस्सो वा, जो पिहुलो होइ अप्पबाहुल्लो ।
तं मुणियसमयसारा, छिवाडिपोत्थं भणंतीह ॥

तथा शालीनां १ व्रीहीणां २ कोद्रवस्य ३ रालकस्य च ४ यानि पलालप्रायाणि तृणानि यच्च 'आरण्यकतृणं' श्यामाकादि, एतत् तृणपञ्चकम् ॥ ३८२२ ॥[2]

अथ दूष्यपञ्चकद्वयं चर्मपञ्चकं चाह—

**कोयव पावारग दाढिआलि पूरी तधेव विरली य ।**
**एयं दुपेहपणयं, इणमण्णं अपडिलेहाणं ॥ ३८२३ ॥**

---

१ °च्छभ मु° ताभा० ॥ २ एतदन्ते ग्रन्थाग्रम्—१००० ताटी० मो० ले० ॥

**उवहाण तूलि आलिंगणी उ गंडोवहाण य मसूरा ।**
**गो-माहिस-अय-एलग-रण्णमियाणं च चम्मं तु ॥ ३८२४ ॥**

'कोयविर्नाम' रूतपूरितः पटः, या लोके 'माणिकी' इति प्रसिद्धा। 'प्रावारकः' नेपालादिरुल्वणरोमा बृहत्कम्बलः। "दाढिगालि" त्ति यथा मुखमध्ये यमलितोभयदन्तपङ्क्तिरूपा दाढिकालिः—दन्तावलिर्निरीक्ष्यते एवं धौतपोतिकाऽपि द्विजसत्कसदृशवस्त्रपरिधानरूपा दृश्यमाना दाढिकालिरिव प्रतिभातीति कृत्वा दाढिकालिरुच्यते। पूर्यते—स्तोकैरपि तन्तुभिः पूर्णीभवतीति पूरिका—स्थूलशणगुणमयपटात्मिका, यया धान्यगोणिकाः क्रियन्ते हस्त्याद्यास्तरणानि वा। विरलिका नाम—द्विसरसूत्रपाटी। एतानि पञ्चापि सम्यक् प्रत्युपेक्षितुं न शक्यन्त इति दुःप्रत्युपेक्ष्यदूष्यपञ्चकमुच्यते। इदमन्यद् 'अप्रत्युपेक्ष्याणां' सर्वथाऽपि प्रत्युपेक्षितुमशक्यानां दूष्याणां पञ्चकं भवति ॥ ३८२३ ॥ तद्यथा—

'उपधानं' हंसरोमादिपूर्णमुच्छीर्षकम्। 'तूली' संस्कृतरूतादिभृता अर्कतूलादिभृता वा प्रतीता। आलिङ्गनिका पुरुषप्रमाणा, या शयानैर्जानु-कूर्परादिषु दीयते। 'गण्डोपधानं' गल्लमसूरिका। 'मसूरकं नाम' चर्मकृतं वस्त्रकृतं वा वृत्तं बूयादिपूर्णं चक्कल-गद्दिकादि। चर्मपञ्चकं पुनरिदम्—गोचर्म, माहिषचर्म, अजाः—छगलिकास्तासां चर्म, एडकाः—अजविशेषास्तच्चर्म, आरण्यकाश्च ये मृगाः—हरिण-शशकादयः तेषां चर्म पञ्चमं ज्ञातव्यम् ॥ ३८२४ ॥

अथात्रैव प्रायश्चित्तमाह—

**जहिँ गुरुगा तहिँ लहुगा, जहिं लहुगा चउगुरू तहिं ठाणे ।**
**दोहिँ लहू कालगुरू, तवगुरुगा दोहि वी गुरुगा ॥ ३८२५ ॥**

'यत्र' सलोमचर्मणि पुरुषतुल्यस्पर्शत्वाद् निर्ग्रन्थीनां चतुर्गुरुकाः प्रायश्चित्तमुक्तं तत्र निर्ग्रन्थानां चतुर्लघुकाः। 'यत्र तु' निर्लोमचर्मणि निर्ग्रन्थीनां चतुर्लघुकाः तत्र निर्ग्रन्थानां चतुर्गुरुकाः, स्त्रीतुल्यस्पर्शत्वात्। परमुभयेऽपि प्रथमे ग्रहणाख्ये स्थाने द्वाभ्यां लघवः, तपसा कालेन चेत्यर्थः। ऊर्द्धस्थाने कालगुरवः। निषदने तपोगुरवः। त्वग्वर्तने 'द्वाभ्यामपि' तपः-कालाभ्यां गुरवः। पुस्तकपञ्चके तृणपञ्चके दूष्यपञ्चकद्वये च निर्ग्रन्थानां निर्ग्रन्थीनां च चतुर्लघवः। आह च **चूर्णिकृत्**—

"पोत्थग-तण-दूसेसु चउलहुगा।" ॥ ३८२५ ॥

अथ पुस्तकपञ्चके तावद् दोषानुपदर्शयति—

**संघंस अपडिलेहा, भारो अहिकरणमेव अविदिण्णं ।**
**संकामण पलिमंथो, पमाय परिकम्मणा लिहणा ॥ ३८२६ ॥**

पुस्तकादिकं[3] ग्रामान्तरं नयतः स्कन्धे सङ्घर्षः स्यात्, ततश्च व्रणोत्पत्त्यादयो दोषाः। शुषिरत्वाच्च तत्र प्रत्युपेक्षणा न शुध्यति। भारो मार्गे गच्छतां भवेत्। अधिकरणं च कुन्थु-

---

१ द्विसर° भा० ॥ २ ताटी० भा० विनाऽन्यत्र—बूयादि° मो० ले०। बूयादि° त० डे० कां० ॥
३ °कं वहतः स्क° भा०। "खंधे संघंसो भवति वहंतस्स" इति **चूर्णौ**। "खंधंतेण वहंतस्स संघंसो भवति" इति **विशेषचूर्णौ** ॥

पनकादिसंसक्तिलक्षणं भवति; यद्वा तत् पुस्तकं स्तेनैरपह्रियेत ततोऽधिकरणम् । तीर्थकरैरदत्तश्चायमुपधिः । स्थानान्तरे च पुस्तकं सङ्क्रामयतः पलिमन्थः । 'प्रमादो नाम' पुस्तके लिखितमस्तीति कृत्वा न गुणयति, अगुणनाच्च सूत्रनाशादयो दोषाः । परिकर्मणायां च सूत्रार्थपरिमन्थो भवति । अक्षरलेखनं च कुर्वतः कुन्थुप्रभृतित्रसप्राणव्यपरोपणेन कृकाटिकादिबाधया च संयमा-ऽऽत्मविराधना ॥ ३८२६ ॥ किञ्च—

**पोत्थग जिण दिट्ठंतो, वग्गुर लेवे य जाल चक्के य ।**
**लोहित लहुगा आणादि मुयण संघट्टणा बंधे ॥ ३८२७ ॥**

पुस्तके शुषिरतया यो जन्तूनामुपघातस्तत्र 'जिनैः' तीर्थकृद्भिर्वागुरया लेपेन जालेन चक्रेण च दृष्टान्तः कृतः । "लोहिय" त्ति यदि तेषां पुस्तकान्तर्गतानां जन्तूनां 'लोहितं' रुधिरं भवेत् ततः पुस्तकबन्धनकालेऽक्षराणि परिस्पृश्य तद् रुधिरं परिगलेत् । "लहुग" त्ति यावतो वाराँस्तत् पुस्तकं बध्नाति मुञ्चति वा अक्षराणि वा लिखति तावन्ति चतुर्लघूनि, आज्ञादयश्च दोषाः । पुस्तकस्य मोचने बन्धे च सङ्घट्टनम्, उपलक्षणत्वात् परितापनमपद्रावणं वा यद् आपद्यते तन्निष्पन्नं प्रायश्चित्तमिति निर्युक्तिगाथासमासार्थः ॥ ३८२७ ॥ साम्प्रतमेनामेव विवृणोति—

**चउरंगवग्गुरापरिवुडो वि फिट्टेज्ज अवि मिगो रण्णे ।**
**छीर खउर लेवे वा, पडिओ सउणो पलाएज्जा ॥ ३८२८ ॥**

चतुरङ्गसेनारूपा[1] या वागुरा तया परिवृतोऽपि—समन्ताद् वेष्टितोऽपि मृगः, 'अपि' इति सम्भावनायाम्, सम्भाव्यते अयमर्थः—यत् तथाविधदक्षतादिगुणोपेतो मृगोऽरण्ये तादृशादपायात् स्फिटेत्, न पुनः पुस्तकपत्रान्तरप्रविष्टा जीवाः स्फिटेयुः । तथा 'शकुनः' पक्षी, स चेह मक्षिकादिः, 'क्षीरे वा' दुग्धे 'खपुरे वा' चिक्कणद्रव्ये 'लेपे वा' अवश्रावणादौ पतितोऽपि पलायेत, न पुनः पुस्तकजीवास्ततः पलायितुं शक्नुयुः ॥ ३८२८ ॥

**सिद्धत्थगजालेण व, गहितो मच्छो वि णिप्फिडेज्जा हि ।**
**तिलकीडगा व चक्के, तिला व ण य ते ततो जीवा ॥ ३८२९ ॥**

सिद्धार्थकाः—सर्षपास्तेऽपि येन जालेन गृह्यन्ते तत् सिद्धार्थकजालम् तेनापि गृहीतो मत्स्यः कदाचिद् निःस्फिटेत् । तथा 'चक्रे' तिलपीडनयन्त्रे प्रविष्टास्तिलकीटका वा तिला वा निर्गच्छेयुः, न च ते जीवाः 'ततः' पुस्तकाद् निर्गन्तुं शक्नुयुः ॥ ३८२९ ॥

**जइ तेसिं जीवाणं, तत्थगयाणं तु लोहियं होज्जा ।**
**पीलिज्जंते धणियं, गलेज्ज तं अक्खरे फुसितं[2] ॥ ३८३० ॥**

यदि तेषां 'तत्रगतानां' पुस्तक-पत्रान्तरस्थितानां 'जीवानां' कुन्थुप्रभृतीनां लोहितं भवेत् ततः पुस्तकबन्धनकाले तेषां 'धणियं' गाढतरं पीड्यमानानां 'तद्' अनन्तरोक्तं रुधिरमक्षराणि स्पृष्ट्वा बहिः परिगलेत ॥ ३८३० ॥ अत एव—

**जत्तियमेत्ता वारा, उ मुंचई बंधई व जति वारा ।**
**जति अक्खराणि लिहति व, तति लहुगा जं च आवज्जे ॥ ३८३१ ॥**

---

१ °रूपया वागुरया 'परि° भा० कां० ॥ २ °सितुं भा० कां० ताटी० ॥

यावन्मात्रान् वारान् पुस्तकं 'मुञ्चति' छोटयति, यति वारांश्च बध्नाति, 'यति वा' यावन्ति अक्षराणि लिखति 'तति' तावन्ति चतुर्लघूनि । यच्च कुन्थु-पनकादीनां सङ्घट्टनं परितापनमपद्रावणं वा आपद्यते तन्निष्पन्नं प्रायश्चित्तम् ॥ ३८३१ ॥ अथ तृणपञ्चकादिषु दोषानाह—

**तणपणगम्मि वि दोसा, विराहणा होंति संजमा-ऽऽताए ।**
**सेसेसु वि पणगेसुं, विराहणा संजमे होति ॥ ३८३२ ॥**

तृणपञ्चकेऽपि 'दोषाः' आज्ञाभङ्गादयो भवन्ति, विराधना च संयमा-ऽऽत्मविषया । 'शेषेष्वपि' दूष्यपञ्चकादिषु संयमविषया विराधना भवति ॥ ३८३२ ॥ इदमेव भावयति—

**अहि-विच्छुग-विसकंडगमादीहि खयं व होज्ज आयाए ।**
**कुंथादि संजमम्मि, जति उव्वत्तादि तति लहुगा ॥ ३८३३ ॥**

तृणादिषु शुषिरत्वादहिर्वा वृश्चिको वा विषकण्टको वा भवेद् एतैः आदिशब्दात् मत्कोटकादिभिश्च तत्र शयान आसीनो वोपद्रूयेत, क्षतं वा दर्भादिषु सुप्तस्य भवेत्, एषाऽऽत्मविराधना । कुन्थु-पनकादिप्राणिव्यपरोपणं तु संयमविराधना । तृणेषु च प्रसुप्तः 'यति' यावतो वारानुद्वर्त्तनं परिवर्त्तनमाकुञ्चनं प्रसारणं वा करोति 'तति' तावन्तश्चतुर्लघुकाः ॥३८३३॥

अत्र परः प्राह—

**दिट्ठ सलोमे दोसा, णिल्लोमं णाम कप्पती घेत्तुं ।**
**गिण्हणे गुरुगा पडिलेह पणग तसपाण सतिकरणं ॥ ३८३४ ॥**

सलोमचर्मणि यतो दोषा दृष्टाः अतो निर्ग्रन्थानां निर्लोम चर्म 'नाम' इति सम्भावयामः कल्पते ग्रहीतुम् । सूरिराह—यदि निर्लोमचर्मणो ग्रहणं करोति ततश्चतुर्गुरुकाः, यतस्तत्र प्रत्युपेक्षणा न शुध्यति, पनकत्रसप्राणिनो वा सम्मूर्च्छन्ति, सुकुमारतया भुक्तभोगिनः स्मृतिकरणं भवति अभुक्तभोगिनस्तु कौतुकम् ॥ ३८३४ ॥ इदमेव स्पष्टयति—

**भुत्तस्स सतीकरणं, सरिसं इत्थीण एयफासेणं ।**
**जति ता अचेयणम्मिं, फासो किमु चेयणे इतरे ॥ ३८३५ ॥**

भुक्तभोगिनः स्मृतिकरणं भवति—अहो ! स्त्रीणां सम्बन्धी यः स्पर्शोऽस्माभिरनुभूतपूर्वः तेन सदृशमेतत् ᐊ चर्मानुभूयते । अभुक्तभोगिनः कौतुकम्, यथा—यदि तावदचेतनेऽपि ᐅ चर्मण्येतादृशः सुखस्पर्शोऽनुभूयते किं पुनः सचेतने 'इतरस्मिन्' स्त्रीशरीरे भविता ? । एवं विचिन्त्य प्रतिगमनादीनि कुर्युः । यत एते दोषा अतो ᐊ[3]निर्लोमापि न ग्रहीतव्यम् ॥३८३५॥

आह यदि ᐅ निर्लोम ग्रहीतुं न कल्पते तर्हि मा कल्पताम्, यत्तु सलोमकं तत् तावत् सूत्रेणानुज्ञातम्, भवद्भिस्तु तदपि प्रतिषिद्धम् तदेतत् कथम् ? इति अत्रोच्यते—

**सुत्तनिवाओ वुड्ढे, गिलाण तद्दिवस भुत्त जतणाए ।**
**आगाढ गिलाणे मक्खणट्ठ, घट्ठे भिण्णे व अरिसाउ ॥ ३८३६ ॥**

सूत्रनिपातो वृद्धे ग्लाने वा भवति, वृद्धस्य ग्लानस्य वा परुषस्पर्शमसहिष्णोरास्तरणार्थं सलोम चर्म ग्राह्यमिति भावः । तच्च 'तद्दिवसभुक्तं' कुम्भकारादिभिस्तस्मिन्नेव दिवसे परिभुक्तम्,

---

१ °शमिदं भा० ॥ २-३ ᐊ ᐅ एतच्चिह्नान्तर्गतः पाठः भा० कां० एव वर्तते ॥

तत्र हि त्रसादयः प्राणिनो न भवन्ति, तच्च गृहीत्वा 'यतनया' रोमाण्युपरि कृत्वा परिभोक्तव्यम्। आगाढे च ग्लानत्वे यत् तैलेन म्रक्षणं तदर्थम्, यस्य वा गुदादिपार्श्वाणि घृष्टानि, यो वा साधुर्भिन्नकुष्ठी, यस्य वा अर्शांसि समुद्भूतानि तदर्थं वा निर्लोम चर्म ग्रहीतव्यमिति सङ्ग्रहगाथासमासार्थः ॥ ३८३६ ॥ अथैनामेव विवृणोति—

**संथारट्ठ गिलाणे, अमिलादीचम्म घेप्पति सलोमं ।**
**वुड्ढा-ऽसहु-बालाण व, अच्छुरणट्ठा वि एमेव ॥ ३८३७ ॥**

ग्लानस्य संस्तारकार्थममिलादिसम्बन्धि सलोम चर्म गृह्यते। वृद्धा-सहिष्णु-बालानामप्यास्तरणार्थम् 'एवमेव' सलोम चर्म ग्राह्यम् ॥ ३८३७ ॥ तच्च कीदृशम्? इत्याह—

**कुम्भार-लोहकारेहिँ दिवसमलियं तु तं तसविहूणं ।**
**उवरिं लोमे काउं, सोत्तुं गोसे समप्पेंति ॥ ३८३८ ॥**

कुम्भकार-लोहकारादिभिः स्वस्वकर्म कुर्वाणैर्यद् दिवसतो 'मलितं' परिभुक्तं तत् त्रसविहीनं भवति। अतः सन्ध्यासमये[1] तेषु उत्थितेषु तत् प्रातिहारिकं गृहीत्वा लोमान्युपरि कृत्वा रात्रौ तत्र सुप्त्वा 'गोसे' प्रभाते प्रत्यर्पयन्ति ॥ ३८३८ ॥

**अवताणगादि णिल्लोम तेल्ल वम्मट्ठ घेप्पती चम्मं ।**
**घट्ठा व जस्स पामा, गलंतकोढेऽरिसासुं वा ॥ ३८३९ ॥**

अवयाणादितैलेन वा ग्लानस्याभ्यङ्गे विधातव्ये निर्लोम चर्म ग्रहीतव्यम्। अध्वानादौ वा वर्मार्थम्, यस्य वा पार्श्वाणि घृष्टानि तस्यास्तरणार्थम्, यो वा गलत्कुष्ठः साधुस्तस्य परिधानार्थमास्तरणार्थं वा, अर्शांसि वा यस्य समुत्पन्नानि तस्योपवेशनार्थं निर्लोम चर्म गृह्यते ॥३८३९॥

**सोणिय-पूयालित्ते, दुक्खं धुवणा दिणे दिणे चीरे ।**
**कच्छुल्ल किडिभिल्ले, छप्पतिगिल्ले व णिल्लोमं ॥ ३८४० ॥**

शोणितेन पूयेन वा आलिप्तस्य चीवरस्य दिने दिने धावना दुष्करा, अतः कच्छूवतः किटिभवतश्च निर्लोम चर्म कल्पते। कच्छूः-पामा, किटिभं—शरीरैकदेशभावी कुष्ठभेदः। तथा यस्य षट्पदिकाः प्राचुर्येण सम्मूर्च्छन्ति स षट्पदिकावान् निर्लोमचर्मपरिधानं गृह्णाति ॥ ३८४० ॥[2]

**जह कारणे निल्लोमं, तु कप्पती तह भवेज्ज इयरं पि ।**
**आगाढि सलोमं आदिकाउ जा पोत्थए गहणं ॥ ३८४१ ॥**

यथा कारणे निर्लोम चर्म कल्पते तथा 'इतरदपि' शुषिरमपि ग्रहीतुं कल्पते। किं बहुना? आगाढे कारणे सलोम चर्म आदौ कृत्वा पश्चानुपूर्व्या तावद् नेतव्यं यावत् पुस्तकस्यापि ग्रहणं कर्त्तव्यम् ॥ ३८४१ ॥ एतदेव स्पष्टयति—

**भत्तपरिण्ण गिलाणे, कुसमाइ खराऽसती तु झुसिरा वि ।**
**अप्पडिलेहियदूसाऽसती य पच्छा तणा होंती ॥ ३८४२ ॥**

---

१ °मये तत् मो० ले०। °मये तेषां तत् त० डे० ॥
२ अत्र शिष्यः प्रश्नयति इत्यवतरणं भा०। न चैतत् सम्यक्सङ्गतिमत् ॥

'भक्तपरिज्ञावतः' प्रतिपन्नानशनस्य तथा ग्लानस्यास्तरणार्थं कुशादीन्यशुषिरतृणानि गृह्यन्ते। अथ तानि 'खराणि' कर्कशानि न वा तानि प्राप्यन्ते ततः शुषिराण्यपि तृणानि ग्रहीतव्यानि। अथवा भक्तप्रत्याख्यानिनो ग्लानस्य वा सुखशयनार्थं प्रथमतः 'अप्रत्युपेक्ष्यदूष्यम्' उपधान-तूल्यादि ग्रहीतव्यम्, तदभावे यथाक्रममशुषिर-शुषिराणि पश्चात् तृणानि भवन्ति, तानि प्रस्तीर्यन्त इत्यर्थः ॥ ३८४२ ॥

दुप्पडिलेहियदूसे, अद्धाणादी विवित्त गेण्हंति ।
घेप्पति पोत्थगपणगं, कालिय-णिज्जुत्तिकोसट्ठा ॥ ३८४३ ॥

अध्वादौ 'विविक्ताः' मुषिताः सन्तो यथोक्तमुपधिमलभमानाः 'दुष्प्रत्युपेक्ष्यदूष्याणि' कोयवि-प्रावारप्रभृतीनि गृह्णन्ति। तथा मति-मेधादिपरिहाणिं विज्ञाय कालिकश्रुतस्य उपल-क्षणत्वाद् उत्कालिकश्रुतस्य वा निर्युक्तीनां चाऽऽवश्यकादिप्रतिबद्धानां दान-ग्रहणादौ कोश इव—भाण्डागारमिवेदं भविष्यतीत्येवमर्थं पुस्तकपञ्चकमपि गृह्यते ॥ ३८४३ ॥

सूत्रम्—

**नो कप्पइ निग्गंथाण वा निग्गंथीण वा कसिणाइं चम्माइं धारित्तए वा परिहरित्तए वा ५ ॥**

अस्य सम्बन्धमाह—

चम्मं चेवाहिकयं, तस्स पमाणमिह मिस्सिए सुत्ते ।
अपमाणं पडिसिज्झति, ण उ गहणं एस संबंधो ॥ ३८४४ ॥

इह पूर्वसूत्रे चर्मैव तावदधिकृतम् अतः 'तस्य' चर्मणः प्रमाणमिह 'मिश्रिते' निर्ग्रन्थ-निर्ग्र-न्थीप्रतिबद्धे सूत्रे प्ररूप्यते, 'अप्रमाणं' प्रमाणातिरिक्तं तत् प्रतिषिध्यते, न पुनः सर्वथा चर्मणो ग्रहणम्। एष सम्बन्धः ॥ ३८४४ ॥

अहवा अच्छुरणट्ठा, तं वुत्तमिदं तु पादरक्खट्ठा ।
तस्स वि य वण्णमादी, पडिसेहेती इहं सुत्ते ॥ ३८४५ ॥

अथवा 'तत्' पूर्वसूत्रोक्तं चर्म आस्तरणार्थमुक्तम्, 'इदं तु' प्रस्तुतसूत्रे पादरक्षार्थमुच्यते। 'तस्यापि च' चर्मणो ये वर्णादयो गुणास्तदुक्तमिह सूत्रे प्रतिषेधयतीति ॥ ३८४५ ॥

अनेन सम्बन्धेनायातस्यास्य व्याख्या—नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा 'कृत्स्नानि' वर्ण-प्रमाणादिभिः प्रतिपूर्णानि चर्माणि धारयितुं वा परिहर्तुं वेति सूत्रार्थः ॥

अथ भाष्यविस्तरः—

सगल प्पमाण वण्णे, बंधणकसिणे य होइ णायव्वे ।
अकसिणमट्ठारसगं, दोसु वि पासेसु खंडाइं ॥ ३८४६ ॥

कृत्स्नं चतुर्धा—सकलकृत्स्नं १ प्रमाणकृत्स्नं २ वर्णकृत्स्नं ३ बन्धनकृत्स्नं ४ चेति भवति ज्ञातव्यम्। एतच्चतुर्विधमपि न कल्पते प्रतिग्रहीतुम्। परः प्राह—यद्येवं ततो यद् अकृत्स्नं

---

१ च देवयेकादिप्र° ताटी० ॥ २ °णगादी मा० कां० विना ॥

चर्म तद् 'अष्टादशकम्' अष्टादशभिः खण्डैः कर्त्तव्यमित्यर्थः । तानि च खण्डानि द्वयोरपि पार्श्वयोः परिघातव्यानि इति सङ्ग्रहगाथासमासार्थः ॥ ३८४६ ॥ अथैनामेव विवरीषुराह—

**एगपुड सकलकसिणं, दुपुडादीयं पमाणतो कसिणं ।**
**खल्लग खउसा वग्गुरि, कोसग जंघऽद्धजंघा य ॥ ३८४७ ॥**

'एकपुटम्' एकतलं चर्म सकलकृत्स्नमुच्यते । 'द्विपुटादिकं' द्वि-त्रिप्रभृतितलं तु प्रमाणतः कृत्स्नम् । तथा खल्लका द्विधा—अर्धखल्लका समस्तखल्लका च । या पादार्द्धं छादयति साऽर्धखल्लका, या पुनरुपानत् सम्पूर्णं पादं स्थगयति सा समस्तखल्लका । या तु घुण्टकं पिदधाति सा खपुसा । या पुनरङ्गुलीश्छादयित्वा पादावप्युपरि च्छादयति सा वागुरा । यत्र तु 'पाषाणादिषु प्रतिस्फलिताः पादनखाः मा भज्यन्ताम्' इति बुद्ध्या अङ्गुल्योऽङ्गुष्ठो वा प्रक्षिप्यन्ते स कोशकः । या तु सम्पूर्णां जङ्घां पिदधाति सा जङ्घा । जङ्घार्धपिधायिनी सैवार्धजङ्घा । एतान्यपि प्रमाणकृत्स्नानि ॥ ३८४७ ॥ अथैतदेव स्पष्टयति—

**पायस्स जं पमाणं, तेण पमाणेण जा भवे कमणी ।**
**मज्झम्मि तु अक्खंडा, अण्णत्थ व सकलकसिणं तु ॥ ३८४८ ॥**

पादस्य यत् प्रमाणं तेन प्रमाणेन या युक्ता क्रमणिका मध्यप्रदेशेऽन्यत्र वाऽखण्डा भवति तदेतत् सकलकृत्स्नमुच्यते ॥ ३८४८ ॥

**दुपुडादि अद्धखल्ला, समत्तखल्ला य वग्गुरी खपुसा ।**
**अद्धजंघ समत्ता य, पमाणकसिणं मुणेयव्वं ॥ ३८४९ ॥**

'द्विपुटादिका' द्वि-त्रिप्रभृतितलोपेता या उपानद् या वाऽर्धखल्ला समस्तखल्ला वागुरा खपुसा अर्धजङ्घा समस्तजङ्घा चेति सर्वमप्येतत् प्रमाणकृत्स्नं ज्ञातव्यम् ॥ ३८४९ ॥

तत्रैव कानिचिद् विषमपदानि व्याचष्टे—

**उवरिं तु अंगुलीओ, जा छाए सा तु वग्गुरी होति ।**
**खपुसा य खलुगमेत्तं, अद्धं सव्वं च दो इयरे ॥ ३८५० ॥**

या पादयोरङ्गुलीश्छादयित्वोपर्यपि छादयति सा वागुरा भवति । खलुकः—घुण्टकः तन्मात्रं यावदाच्छादयन्ती खपुसा । 'इतरे तु द्वे' जङ्घा-ऽर्धजङ्घालक्षणे अर्धां सर्वां च जङ्घां यथासंख्यं छादयत इति ॥ ३८५० ॥ गतं प्रमाणकृत्स्नम्, अथ वर्णकृत्स्न-बन्धनकृत्स्ने प्रतिपादयति—

**वण्णड्ढ वण्णकसिणं, तं पंचविहं तु होइ नायव्वं ।**
**बहुबंधणकसिणं पुण, परेण जं तिण्ह बंधाणं ॥ ३८५१ ॥**

यत् चर्म वर्णेन आढ्यम्—उज्ज्वलमित्यर्थः तद् वर्णकृत्स्नम् । तच्च कृष्णादिवर्णभेदात् पञ्चविधं ज्ञातव्यम् । यत्तु त्रयाणां बन्धानां 'परतः' बहुभिर्बन्धैर्बद्धं तद् बन्धनकृत्स्नमुच्यते ॥ ३८५१ ॥ अथैतेष्वेव प्रायश्चित्तमाह—

**लहुओ लहुगा दुपुडादिएसु गुरुगा य खल्लगादीसु ।**

---

१ खल्ल-ऽद्धखल्ल-खउसा, वग्गुरि-जंघ-ऽद्धजंघा य ताभा० ॥ २ अत्रैव भा० कां० ॥ ३ खलुकः भा० ॥ ४ °गादि ख° ताभा० विना ॥

**आणादिणो य दोसा, विराहणा संजमा-ऽऽदाए ॥ ३८५२ ॥**

सकलकृत्स्नं गृह्णतां लघुमासः । द्विपुटादिषु चत्वारो लघवः । 'खल्लकादिषु' समस्ता-ऽर्धखल्लका-खपुसा-वागुरा-जङ्घा-ऽर्धजङ्घासु चत्वारो गुरुकाः । आज्ञादयश्च दोषाः, विराधना च संयमा-ऽऽत्मविषया भवति । ◁ तत्र क्रमणिकादिभिः पिनद्धाभिः कीटिकादिव्यपरोपणात् संयमविराधना, आत्मविराधना तु बन्धे छिन्ने सति प्रस्खलनं भवेत् प्रमत्तं वा देवता छलयेत् ▷ ॥३८५२॥

**◁ अंगुलिकोसे पणगं, सगले सुक्के य खल्लगे लहुओ ।**
**बंधण वण्ण पमाणे, लहुगा तह पूरपुण्णे य ॥ ३८५३ ॥**

अङ्गुलिकोशे अङ्गुष्ठकोशके च पञ्चकम् । सकलकृत्स्ने 'शुष्के च' पूरपूरणविरहिते खल्लके मासलघु । बन्धनकृत्स्ने वर्णकृत्स्ने 'प्रमाणकृत्स्ने च' द्विपुटादिरूपे पूरपूर्णे च खल्लके चतुर्लघवः ॥ ३८५३ ॥ अर्धखल्लकादिषु यत् पूर्वं चतुर्गुरुकमुक्तं तदेव विशेषयन्नाह—

**अद्धे समत्त खल्लग, वग्गुरि खपुसा य अद्धजंघा य ।**
**गुरुगा दोहि विसिट्ठा, वग्गुरिए अण्णतरएणं ॥ ३८५४ ॥ ▷**

'अर्द्धखल्लकायाम्' उपानहि यच्चतुर्गुरु तत् तपसा कालेन च लघुकम् । समस्तखल्लकायां कालगुरुकम् । वागुरिकायाम् 'अन्यतरेण' तपसा कालेन वा गुरुकम् । खपुसायां तपोगुरुकम् । अर्धजङ्घायां समस्तजङ्घायां च तपसा कालेन च गुरुकम् ॥ ३८५४ ॥ किञ्च—

**जत्तियमित्ता वारा, तु बंधते मुंचते व जति वारा ।**
**सट्ठाणं तति वारे, होति विवड्ढी य पच्छित्ते ॥ ३८५५ ॥**

यावन्मात्रान् वारान् अङ्गुलीकोश-सकलकृत्स्नादिकं बध्नाति, मुञ्चति वा 'यति' यावतो वारान् तति तावन्तो वाराः स्वस्थानं मन्तव्यम् । 'स्वस्थानं नाम' यद् यत्र पञ्चकादिचतुर्गुरुकान्तं प्रायश्चित्तमुक्तम् । तथाऽऽज्ञाभङ्गे चतुर्गुरु, अनवस्थायां चतुर्लघु, मिथ्यात्वे चतुर्लघु, आत्मविराधनायां चतुर्गुरु, संयमविराधनायां कायनिष्पन्नम्, एवमाज्ञादिभिः पदैरभीक्ष्णसेवा-निष्पन्ना वा प्रायश्चित्तस्य विवृद्धिर्भवति ॥ ३८५५ ॥ अथोपानहोर्दोषप्रदर्शनार्थमिदमाह—

**गव्वो णिम्मद्दवता, णिरवेक्खो णिद्दतो णिरंतरता ।**
**भूताणं उवघाओ, कसिणे चम्मम्मि छद्दोसा ॥ ३८५६ ॥**

उपानहोः पिनद्धयोर्गर्वो निर्मार्दवता च भवेत्, जीवेषु निरपेक्षो निर्दयश्चासौ भवति, 'निरन्तरता' निरन्तरभूमिस्पर्शिता, 'भूतानां तु' प्राणिनामुपघातश्चोपजायते । एवं कृत्स्ने चर्मणि षड् दोषा भवन्तीति द्वारगाथासङ्क्षेपार्थः ॥ ३८५६ ॥ साम्प्रतमेनामेव प्रतिपदं विवृणोति—

**आसगता हत्थिगतो, गव्विजइ भूमितो य कमणिल्लो ।**
**पादो उ समाउक्को, कमणीउ खरा अवि य भारो ॥ ३८५७ ॥**

'अश्वगताद्' अश्वारूढाद् हस्तिगतः पुरुषो यथा गर्वायते एवं भूमिगतात् क्रमणिकावान् गर्वं करोति—अहो ! अहं सोपानत्को व्रजामीति । तथा पादः स्वभावेनैव समार्दवस्ततः स न

१ ◁ ▷ एतच्चिह्नमध्यगतः पाठः भा० नास्ति ॥ २ बद्धे छि° ताटी० कां० ॥ ३ ◁ ▷ एतच्चिह्नान्तर्गतः पाठः ताटी० मो० ले० डे० नास्ति ॥ ४ च' पूरणवि° त० ॥ ५ अथैनामेव भा० ॥

तथा जीवोपघातं करोति यथा क्रमणिकाः 'खराः' कर्कशस्पर्शा जीवोपघातं कुर्वन्ति । अपि च भारस्तासां महान् भवति, ततस्तदाक्रान्ता बहवो जीवा विनाशमश्नुवते ॥ ३८५७ ॥

निरपेक्षद्वारमाह—

**कंटाई देहंतो, जीवे वि हु सो तहेव देहिज्जा ।**
**अस्थि महं ति य कमणी, णावेक्खइ कंटएण जिए ॥ ३८५८ ॥**

अनुपानत्को गच्छन् कण्टकादीन् मार्गे प्रेक्षते, ततस्तान् प्रेक्षमाणो जीवानपि तथैवासौ प्रेक्षेत । सोपानत्कस्तु गच्छन् विद्येते मम क्रमणिके इति कृत्वा निरपायत्वादात्मनो न कण्टकादिकमपेक्षते, ततश्चासौ जीवेष्वपि निरपेक्षो भवति ॥ ३८५८ ॥ अथ निर्दयद्वारमाह—

**पुव्विं अदया भूएसु होति बंधति कमेसु तो कमणी ।**
**जायति हु तदब्भासा, सुदयालुस्सावि णिद्दयया ॥ ३८५९ ॥**

पूर्वं तावद् 'अदया' निर्दयत्वं भूतेषु मनसि सञ्जातं भवति, ततः क्रमयोः क्रमणिके बध्नाति । तदभ्यासाच्च सुदयालोरपि प्रायो निर्दयतैव भवति ॥ ३८५९ ॥ निरन्तरद्वारमाह—

**अवि यऽम्बखुज्जपादेण पेल्लितो अंतरंगुलगतो वा ।**
**मुच्चेज्ज कुलिंगादी, ण य कमणीपेल्लितो जियती ॥ ३८६० ॥**

कुशब्दस्येषदर्थवाचकतया असम्पूर्णानि लिङ्गानि—इन्द्रियाणि यस्यासौ कुलिङ्गी—विकलेन्द्रियः स आदिशब्दाद् मण्डूक्यादिश्च अनुपानत्कस्य पादेन प्रेरितः, 'अपि' इति सम्भावनायाम्, सम्भाव्यतेऽयमर्थः—यदाम्रकुब्जं पादतलमध्यं तत्र तथा अन्तराङ्गुलम्—अङ्गुलीनामङ्गुष्ठस्य चापान्तरालं तत्र वा गतः सन् 'मुच्येत' न म्रियेत, सोपानत्कस्य तु निरन्तरभूमिस्पर्शिनीभिः क्रमणीभिः प्रेरितः—आक्रान्तो न जीवति, अवश्यं मरणमाप्नोतीत्यर्थः ॥ ३८६० ॥

भूतोपघातद्वारमाह—

**किह भूयाणुवघातो, ण होहिती पगतिपेलवतणूणं ।**
**सभराहि पेल्लियाणं, कक्खडफासाहिँ कमणीहिँ ॥ ३८६१ ॥**

'कथं' केन प्रकारेण 'भूतानां' प्राणिनां प्रकृत्या—स्वभावेनैव पेलवतनूनाम्—अदृढशरीराणां 'सभाराभिः' पुरुषभाराक्रान्ताभिः कर्कशस्पर्शाभिः क्रमणीभिः प्रेरितानामुपघातो न भविष्यति ? भविष्यत्येवेत्यर्थः । यत एते दोषा अतः क्रमणिका न परिधातव्याः । कारणे तु प्राप्ते परिदध्यादपि ॥ ३८६१ ॥ किं पुनस्तत् कारणम् ? इत्याह—

**विह अतराऽसहु संभम, कोट्टाऽरिस चक्खुदुब्बले बाले ।**
**अज्जा कारणजाते, कसिणग्गहणं अणुण्णायं ॥ ३८६२ ॥**

विहं—अध्वा, अतरः—ग्लानः, असहिष्णुर्नाम—राजादिदीक्षितः सुकुमारपादः, सम्भ्रमः—चौर-श्वापदादिसंक्षोभः, कुष्ठरोगी अर्शोरोगी चक्षुषा वा दुर्बलः कश्चिद् भवति, बालो वा यदि यत्र तत्र पादौ निक्षिपति, आर्या वा अध्वानं नीयन्ते, कारणजातं वा—कुल-गण-सङ्घविषयमुपस्थितम् । एतेषु कृत्स्नस्य चर्मणो ग्रहणमनुज्ञातमिति द्वारगाथासमासार्थः ॥ ३८६२ ॥

१ °त्यपि च्यर्था° मो० ले० ॥

अमुमेवार्थं विवृणोति—

कंटा-ऽहि-सीयरक्खट्टता विहे खवुसमादि जा गहणं ।
ओसहपाण गिलाणे, अहुणुट्ठियभेसयट्ठा वा ॥ ३८६३ ॥

'विहे' अध्वनि प्रतिपद्यमाने कण्टकस्य अहेः शीतस्य च रक्षार्थमङ्गुलिकोशकं खल्लकादि वा गृह्णन्ति । किं बहुना ? खपुसामादौ कृत्वा यावदर्धजङ्घा-समस्तजङ्घयोरपि ग्रहणम् । तथा ग्लान औषधपानं कृत्वा वैद्योपदेशेन पृथिव्यां पादौ न स्थापयति । अधुनोत्थितो वा ग्लानः क्रमशः क्रमणिके आविध्यति, मा शीतानुभावेन भक्तं न जरिष्यतीति कृत्वा । ग्लानस्य वा भेषजार्थं त्वरितं ग्रामान्तरं गन्तव्यम् ततः क्रमणिकाः पिनद्धव्याः ॥ ३८६३ ॥

अरिसिल्लस्स व अरिसा, मा खुब्भे तेण बंधते कमणी ।
असहुमबंताहरणं, पादो घट्ठो तु गिरिदेसे ॥ ३८६४ ॥

अर्शोवतः पादतलदौर्बल्यादर्शांसि मा क्षुभ्येरन्निति कृत्वा क्रमणिके असौ बध्नाति । असहिष्णुर्नाम—मार्गे गच्छन्नुपानद्भिर्विना गन्तुं न शक्नोति, यदि गच्छति ततः पादाभ्यां रुधिरं परिगलति; अत्र अवन्तीसुकुमारोदाहरणं भवति, तच्चाऽऽवश्यकाद् (हारि० वृत्तिः पत्र ६७० ) विज्ञेयम्; स क्रमणिके बध्नीयात् । उदका-ऽग्नि-स्तेन-श्वापदादौ वा सम्भ्रमे क्रमणिकाः परिभोक्तव्याः । गिरिदेशे वा पर्यटतः कस्यापि पादतलं घृष्टं तत उपानहौ पिनह्य पर्यटति ॥ ३८६४ ॥

कुट्ठिस्स सक्करादीहि वा वि भिण्णो कमो मधूला वा ।
बालो असंफरो पुण, अज्जा विहि दोच्च पासादी ॥ ३८६५ ॥

कुष्ठिनः सम्बन्धी शोणित-पूयेन 'भिन्नः' स्फटितः क्रमः शर्करा-कण्टकादिभिराक्रान्तो महतीं पीडामुपजनयति, 'मधूला वा' पादगण्डं कस्यापि समजनि ततः क्रमणिके बध्नाति । बालो वा कश्चिद् 'असंस्करः' असंवृतो यत्र तत्र पादं मुञ्चन् कण्टकादिभिरुपद्रूयेत, अतोऽसौ क्रमणिके परिधाप्यते । आर्या वा 'विधम्' अध्वानं नेतव्याः, तत्र च "दोच्च" त्ति चौरादिभयम्, ततो वृषभाः क्रमणिकाः पिनह्य पन्थानं मुक्त्वा पार्श्वस्थिता गच्छन्ति, आदिशब्दात् सर्वाणि वा तत्रोत्पथेन व्रजन्ति । यो वा चक्षुषा दुर्बलः स वैद्योपदेशेनोपानहौ पिनह्यति, यतः पादयोरभ्यञ्जनोपानद्बन्धनादिपरिकर्म यत् क्रियते तत् चक्षुष उपकाराय परिणमते । यत उक्तम्—

दन्तानामञ्जनं श्रेष्ठं, कर्णानां दन्तधावनम् ।
शिरोऽभ्यङ्गश्च पादानां, पादाभ्यङ्गश्च चक्षुषोः ॥　　॥ ३८६५ ॥

कारणजातद्वारमाह—

कुलमाइकज्ज दंडिय, पासादी तुरियधावणट्ठा वा ।
कारणजाते बऽण्णे, सागारमसागरे जतणा ॥ ३८६६ ॥

कुलादिषु—कुल-गण-सङ्घविषयेषु कार्येषु दण्डिकावलगनार्थम्, पार्श्वस्थितैः आदिशब्दात् पुरः पृष्ठतो वा गच्छद्भिः, त्वरितं वा धावनार्थम्, कारणजाते वा 'अन्यस्मिन्' आगाढे समु-

१ °रक्खाए वा विहे ताभा० ॥ २ अहेर्वातस्य मो० ले० । अहेर्वानस्य त० डे० । नेदं लेखकलिपिभ्रमविषयं पाठभेदयुगलं समीचीनमिति ॥ ३ °दर्शांस्यक्षोभो मा भूदिति भा० ॥

त्पन्ने उपानहः परिभोक्तव्याः । तत्र च सागारिका-ऽसागारिकविषया यतना, यत्र सागारिक-दोषो नास्ति तत्र नास्ति यतनाक्रमः, यत्र पुनः सागारिका उड्डाहं कुर्वन्ति तत्र ग्रामादिषु क्रमणिका अपनीय प्रविशन्तीति भावः ॥ ३८६६ ॥

एवमध्वादिषु कारणेषु कृत्स्नचर्मणो ग्रहणे प्राप्ते विधिमाह—

**पंचविहम्मि वि कसिणे, किण्हग्गहणं तु पढमतो कुज्जा ।**
**किण्हम्मि असंतम्मि, विवण्णकसिणं तहिं कुज्जा ॥ ३८६७ ॥**

पञ्चविधे वर्णकृत्स्ने प्रथमतः कृष्णवर्णकृत्स्नग्रहणं कुर्यात् । ततः कृष्णे वर्णकृत्स्ने 'असति' अलभ्यमाने लोहितादिवर्णकृत्स्नमपि गृह्णीयात् । तच्च कृत्स्नमूष-तैलादिभिः 'विवर्णं' विरूपवर्णं कुर्याद् यथा लोको नोड्डाहं कुरुते आत्मनो वा न तत्र रागो भवति ॥ ३८६७ ॥

**किण्हं पि गेण्हमाणो, झुसिरग्गहणं तु वज्जए साहू ।**
**बहुबंधणकसिणं पुण, वज्जेयव्वं पयत्तेणं ॥ ३८६८ ॥**

कृष्णवर्णमपि गृह्णन् शुषिरग्रहणं साधुः प्रयत्नतो वर्जयेत् । अत्र **पाठान्तरम्**—"कसिणं पि गिण्हमाणो" त्ति, 'कृत्स्नं' सकलकृत्स्नं प्रमाणकृत्स्नं वा द्वितीयपदे गृह्णन् शुषिरग्रहणं साधुर्वर्जयेत् । यत्तु बहुबन्धनकृत्स्नं तत् प्रयत्नतो वर्जयितव्यम् ॥ ३८६८ ॥

अथ किं तद् बन्धनम् ? इत्याशङ्क्याह—

**दोरेहि व वज्झेहि व, दुविहं तिविहं व बंधणं तस्स ।**
**अणुमोदण कारावण, पुव्वकतम्मि अधीकारो ॥ ३८६९ ॥**

दवरकैर्वा वध्रैर्वा द्विविधं त्रिविधं वा बन्धनं तस्य चर्मणो भवति, द्वौ वा त्रयो वा बन्धा दातव्या इत्यर्थः । एवंविधं बन्धनकृत्स्नमनुज्ञातम्, न चतुरादिबहुबन्धनबद्धम् । तथा कृत्स्नमकृत्स्नं वा चर्म साधुना स्वयं न कर्त्तव्यम्, अन्येन न कारापयितव्यम्, अन्यस्य कुर्वतो नानुमोदना कर्त्तव्या, किन्तु यत् पूर्वमेव गृहस्थैर्यथाभावेन कृतं तस्मिन् 'अधिकारः' प्रयोजनम्, तस्य ग्रहणं कर्त्तव्यमिति भावः ॥ ३८६९ ॥ अथ द्वौ त्रयो वा बन्धाः कुत्र भवन्ति ? इति उच्यते—

**खुलए एगो बंधो, एगो पंचंगुलस्स दोण्णेते ।**
**खुलए एगो अंगुट्ठ बितिय चउरंगुले ततितो ॥ ३८७० ॥**

'खुलके' घुण्टके एको वध्रबन्धो भवति, 'एकस्तु' द्वितीयो बन्धः 'पञ्चाङ्गुलस्य' चतसृणामङ्गुलीनामङ्गुष्ठस्य चेत्यर्थः, एतौ द्वौ बन्धौ मन्तव्यौ । यदा तु त्रयो बन्धा भवन्ति तदा खुलके एकः अङ्गुष्ठे द्वितीयः चतसृणामङ्गुलीनां तृतीयः ॥ ३८७० ॥

अथ स्वयङ्करणादिषु प्रायश्चित्तमाह—

**सयकरणे चउलहुगा, परकरणे मासियं अणुग्घायं ।**
**अणुमोदणे वि लहुओ, तत्थ वि आणादिणो दोसा ॥ ३८७१ ॥**

स्वयं यदि चर्म करोति तदा चतुर्लघवः । अथ परेण कारयति तदा मासिकमनुद्घातम्,

---

१ °णं पि य, व° ताभा० ॥ २ भा० विनाऽन्यत्र—**कृष्णवर्णमकृष्णमपि** को० । **कृत्स्नवर्णकृष्णमपि** मो० ले० । **कृत्स्नवर्णकृत्स्नमपि** ताटी० त० डे० ॥ ३ °**न्धा भवन्ति द्व**° भा० ॥

मासगुरुकमित्यर्थः । अनुमोदनायां मासलघु । तत्रापि स्वयङ्करणादावाज्ञादयो दोषा उड्डाहश्च भवति, तथाहि—तं संयतं स्वयमेव चर्म कुर्वाणं दृष्ट्वा लोको ब्रवीति—अहो ! चर्मकरोऽयमिति । अथ पूर्वकृतं न लभ्यते ततोऽनुमोदनया गृह्णीयात् । कथम् ? इति चेद् उच्यते—यदि कोऽपि ब्रूयात्—अहं ते उपानहौ करोमि ? ततः प्रतिशृणुयात् तूष्णीको वा तिष्ठेत् । अथाऽनुमोदनया न प्राप्यते ततोऽन्येन कारयेत् । एवमप्यलाभे आत्मनाऽपि यतनया कुर्यात् ॥ ३८७१ ॥

सूत्रम्—

**कप्पइ निग्गंथाण वा निग्गंथीण वा अकसिणाइं**
**चम्माइं धारित्तए वा परिहरित्तए वा ६ ॥**

◁ [1]कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा [ अकृत्स्नानि ] चर्माणि धारयितुं वा परिहर्तुं वा इति सूत्रार्थः ॥ ▷ अथ भाष्यम्—

**अकसिणचम्मग्गहणे, लहुओ मासो उ दोस आणादी ।**
**बितियपद घेप्पमाणे, अट्ठारस जाव उक्कोसा ॥ ३८७२ ॥**

यद्यपि सूत्रेऽनुज्ञातं तथापि न कल्पते अकृत्स्नचर्म प्रतिग्रहीतुम् । यदि गृह्णाति ततो लघुको मासः प्रायश्चित्तम्, आज्ञादयश्च दोषाः । 'द्वितीयपदे तु' पूर्वोक्तैरध्वादिभिः कारणैरकृत्स्ने गृह्यमाणे विधिरभिधीयते । तत्र नोदकः प्राह—यद्यकृत्स्नं ग्रहीतुं कल्पते ततो द्वयोरुपानहोरुत्कर्षतोऽष्टादश खण्डानि यावत् कर्त्तव्यानि ॥ ३८७२ ॥ इदमेव व्याचष्टे—

**अकसिणमट्ठारसगं, एगपुड विवण्ण एगबंधं च ।**
**तं कारणम्मि कप्पति, णिक्कारण धारणे लहुओ ॥ ३८७३ ॥**

अकृत्स्नं नाम 'अष्टादशकम्' अष्टादशभिः खण्डैः कृतम् १ तदपि 'एकपुटम्' एकतलं २ 'विवर्णं' न वर्णाढ्यं ३ 'एकबन्धं च' न द्व्यादिबन्धनोपेतम् ४, एभिश्चतुर्भिः पदैर्यथाक्रमं सकल-प्रमाण-वर्ण-बन्धनैः कृत्स्नता परिहृता । तदेवंविधमकृत्स्नं चर्म कारणे धारयितुं कल्पते । अथ निष्कारणे धारयति ततो लघुमासः । एषा पुरातना गाथा ॥३८७३॥ अथैनां व्याख्याति—

**जइ अकसिणस्स गहणं, भाए काउं कमेण अट्ठदस ।**
**एगपुड-विवण्णेहि य, तहिं तहिं बंधते कज्जे ॥ ३८७४ ॥**

यद्यकृत्स्नस्य चर्मणो ग्रहणं कर्त्तव्यं तत उपानहावष्टादश भागान् वक्ष्यमाणक्रमेण कृत्वा तैः खण्डैरेकपुटैर्विवर्णैः चशब्दादेकबन्धैश्च यत्र यत्र पादप्रदेशे आबाधा तत्र तत्र कार्ये समुत्पन्ने बध्नीयात् ॥ ३८७४ ॥ कथं पुनरष्टादश खण्डानि भवन्ति ? इत्युच्यते—

**पंचंगुल पत्तेयं, अंगुट्ठमज्झे य छट्ठ खण्डं तु ।**
**सत्तममग्गतलम्मी, मज्झऽट्ठम पण्हिया णवमं ॥ ३८७५ ॥**

१ ◁ ▷ एतदन्तर्गतः पाठः भा० नास्ति ॥ २ अत्र भा° भा० ॥ ३ °कृष्णव° भा० ॥ ४ ततो मासलघु प्रा° कां० ॥ ५ °कृष्णे गृ° भा० कां० त० ॥ ६ °कृष्णं प्र° भा० ॥

इहैकस्य पादस्य पञ्चानामङ्गुलीनां बन्धनाय प्रत्येकमेकैकं खण्डं कर्त्तव्यम्, अङ्गुष्ठस्य चाधः षष्ठं खण्डम्, अग्रतले सप्तमम्, मध्यतलेऽष्टमम्, पार्ष्णिकायां नवमम्, एवं द्वितीयस्याप्युपानहो नव खण्डानि, सर्वाण्यप्येवमष्टादश खण्डानि भवन्ति ॥ ३८७५ ॥

एवं परेणोक्ते सति सूरिराह—

**एवइयाणं गहणे, मासो मुच्चंति होति पलिमंथो ।**
**बितियपद घेप्पमाणे, दो खंडा मज्झपडिबंधा ॥ ३८७६ ॥**

एतावतां खण्डानां ग्रहणे मासलघु प्रायश्चित्तम्, असामाचारीनिष्पन्नमित्यर्थः । मुच्यमानेषु चैतावत्सु खण्डेषु महान् सूत्रा-ऽर्थयोः परिमन्थो भवति । आह—यद्येवं ततः कियन्ति खण्डानि क्रियन्ते ? इत्याह—द्वितीयपदे यदा चर्म गृह्यते तदा मध्यप्रतिबद्धे द्वे खण्डे कर्त्तव्ये, मध्यभागात् त्रोटयित्वा खण्डद्वयं विधाय मध्ये वर्ध्रादिना बन्धनीयमित्यर्थः । ◁ अत्र पूर्वार्द्धस्येदं पाठान्तरम्—"मुच्चंते पलिमंथो, जत्तियमित्तं तु तत्तिए गहणं ।" अष्टादश खण्डानि मुञ्चति साधोर्महान् पलिमन्थः, ततो यावन्मात्रमपरिमन्थाय भवति तावन्मात्रं ग्रहीतव्यम् । उत्तरार्द्धं प्राग्वत् ▷ ॥ ३८७६ ॥ अथाष्टादशानां खण्डानां करणे कीदृशः परिमन्थो भवति ? इत्याह—

**पडिलेहा पलिमंथो, णदिमादुदए य मुंच-बंधंते ।**
**सत्थफिडणेण तेणा, अंतरवेधो य डंकणता ॥ ३८७७ ॥**

यावदष्टादश खण्डानि द्विसन्ध्यं प्रत्युपेक्षते तावत् सूत्रार्थयोः परिमन्थो भवति । नद्यादुदकमवतितीर्षुश्च यावदष्टादश खण्डानि मुञ्चति उत्तीर्णश्च यावत् तानि भूयोऽपि बध्नाति तावत् सार्थात् स्फिटति, स्फिटितश्च स्तेनानां गम्यो भवति । बहूनां खण्डानामन्तरेषु च कण्टकैर्विध्येत । बहुबन्धघर्षेण वा पादयोर्डङ्को भवेत् । यत एवमतः पूर्वोक्तनीत्या खण्डद्वयं विधेयम् ॥ ३८७७ ॥ कथं पुनस्तद् बन्धनीयम् ? इत्याह—

**तज्जायमतज्जायं, दुविहं तिविहं व बंधणं तस्स ।**
**तज्जायम्मि वि लहुओ, तत्थ वि आणादिणो दोसा ॥ ३८७८ ॥**

'तस्य' चर्मखण्डद्वयस्य तज्जातं वा बन्धनं भवति अतज्जातं वा बन्धनं भवति । तज्जातं नाम तस्मिन्—चर्मणि जातम् वर्ध्रादिबन्धनमित्यर्थः, तद्विपरीतं दवरकादिकमतज्जातम् । एतच्च द्विविधं त्रिविधं वा भवति, द्वौ वा त्रयो वा बन्धा दातव्या इति भावः । अत्र प्रथममतज्जातेन दवरकादिना बन्धनीयम् । यदि तज्जातेन वर्ध्रादिना बध्नाति ततो मासलघु, तत्राप्याज्ञादयो दोषा भवन्ति ॥ ३८७८ ॥

## ॥ चर्मप्रकृतं समाप्तम् ॥

---

१ ◁ ▷ एतदन्तर्गतः पाठः भा० नास्ति ॥

## कृत्स्नाकृत्स्नप्रकृतम्

सूत्रम्—

**नो कप्पइ निग्गंथाण वा निग्गंथीण वा कसिणाइं वत्थाइं धारित्तए वा परिहरित्तए वा ।**
**कप्पइ निग्गंथाण वा निग्गंथीण वा अकसिणाइं वत्थाइं धारित्तए वा परिहरित्तए वा ७ ॥**

अस्य सम्बन्धमाह—

**पडिसिद्धं खलु कसिणं, चम्मं वत्थकसिणं पि णेच्छामो ।**
**अववादियं तु चम्मं, ण वत्थमिति जोगणाणत्तं ॥ ३८७९ ॥**

प्रतिषिद्धं खल्वनन्तरसूत्रे चर्मकृत्स्नम्, यथा च तन्न कल्पते तथा वस्त्रकृत्स्नमपि नेच्छामः प्रतिग्रहीतुम् । यद्वा पूर्वसूत्रे चर्म आपवादिकमुक्तम्, इदं तु वस्त्रं नापवादिकं किन्तु सदैव साधुभिः परिभुज्यमानत्वेनौत्सर्गिकम्, अत इदं प्रतिपक्षतया सूत्रमारभ्यते इति योगस्य—सम्बन्धस्य नानात्वं—प्रकारान्तरतेत्यर्थः ॥ ३८७९ ॥

अनेन सम्बन्धेनायातस्यास्य व्याख्या—◁[1] "नो कप्पइ" त्ति आर्षत्वादेकवचनम्, नो कल्पन्ते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा ▷ 'कृत्स्नानि' सकल[2]कृत्स्नादिरूपाणि वस्त्राणि 'धारयितुं वा' परिग्रहे धर्तुं 'परिहर्तुं वा' परिभोक्तु[3]म्, अकृत्स्नानि तु कल्पन्त इति सूत्रसङ्क्षेपार्थः ॥

अथ **निर्युक्ति-भाष्यविस्तरः**—

**कसिणस्स उ वत्थस्सा, णिक्खेवो छव्विहो तु कातव्वो ।**
**नामं ठवणा दविए, खेत्ते काले य भावे य ॥ ३८८० ॥**

कृत्स्नस्य वस्त्रस्य निक्षेपः षड्विधः कर्त्तव्यः । तद्यथा—नामकृत्स्नं १ स्थापनाकृत्स्नं २ द्रव्यकृत्स्नं ३ क्षेत्रकृत्स्नं ४ कालकृत्स्नं ५ भावकृत्स्नं ६ चेति । तत्र नाम-स्थापने गतार्थे ॥३८८०॥

द्रव्यकृत्स्नमाह—

**दुविहं तु दव्वकसिणं, सकलकसिणं पमाणकसिणं च ।**
**एतेसिं दोण्हं पी, पत्तेय परूवणं वोच्छं ॥ ३८८१ ॥**

'द्विविधं' द्विप्रकारं द्रव्यकृत्स्नम्, तद्यथा—सकलकृत्स्नं प्रमाणकृत्स्नं चेति । एतयोर्द्वयोरपि 'प्रत्येकं' पृथक् प्ररूपणां वक्ष्ये ॥ ३८८१ ॥ प्रतिज्ञातमेव निर्वाहयति—

**घण मसिणं णिरुवहयं, जं वत्थं लब्भते सदा[4]सियागं ।**
**एतं तु सकलकसिणं, जहण्णगं मज्झिमुक्कोसं ॥ ३८८२ ॥**

---

१ ◁ ▷ एतदन्तर्गतः पाठः भा० नास्ति ॥ २ भा० ताटी० विनाऽन्यत्र—°लरूपा° त० डे० मो० ले० । °लकृत्स्नरूपा° कां० ॥ ३ °कुं न कल्पते(न्ते), अकृ° मा० ॥ ४ °सिगायं भा० ॥

'घनं' तन्तुभिः सान्द्रं 'मसृणं' सुकुमारस्पर्शं 'निरुपहतम्' अञ्जन-खञ्जनादिदोषरहितम्, एवंविधं यद् वस्त्रं सदशाकं लभ्यते एतत् सकलकृत्स्नमुच्यते। तच्च जघन्यं मध्यममुत्कृष्टं वा ज्ञातव्यम्। जघन्यं मुखपोतिकादि, मध्यमं पटलकादि, उत्कृष्टं कल्पादि ॥ ३८८२ ॥

**वित्थारा-ऽऽयामेणं, जं वत्थं लब्भए समतिरेगं।**
**एयं पमाणकसिणं, जहण्णयं मज्झिमुक्कोसं ॥ ३८८३ ॥**

विस्तारश्च–पृथुत्वं आयामश्च–दैर्घ्यं विस्तारा-ऽऽयामम्, द्वन्द्वैकवद्भावः, तेन, यद् वस्त्रं यथोक्तप्रमाणतः समतिरिक्तं लभ्यते एतत् प्रमाणकृत्स्नं भण्यते। तच्च जघन्य-मध्यमोत्कृष्टभेदात् त्रिविधं प्राग्वद् द्रष्टव्यम् ॥ ३८८३ ॥ क्षेत्रकृत्स्नमाह—

**जं वत्थ जम्मि देसम्मि[1] दुल्लहं अच्चियं व जं जत्थ।**
**तं खित्तजुयं कसिणं, जहण्णयं मज्झिमुक्कोसं ॥ ३८८४ ॥**

यद् वस्त्रं यस्मिन् देशे[2] दुर्लभम्, यत्र वा यद् 'अर्चितं' सुमहार्घम्, यथा—पूर्वदेशजं वस्त्रं लाटविषयं प्राप्य महार्घ्यम्, तत् क्षेत्रयुतं कृत्स्नमुच्यते, क्षेत्रकृत्स्नमित्यर्थः। तदपि जघन्य-मध्यमोत्कृष्टभेदात् त्रिविधम् ॥ ३८८४ ॥ कालकृत्स्नमाह—

**[3]जं वत्थ जम्मि कालम्मि अग्घितं दुल्लभं व जं जत्थ।**
**तं कालजुतं कसिणं, जहण्णयं मज्झिमुक्कोसं ॥ ३८८५ ॥**

यद् वस्त्रं यस्मिन् काले 'अर्घितं' बहुमूल्यम्, यच्च यत्र दुर्लभम्, यथा—ग्रीष्मे काषायिकादि, शिशिरे प्रावारादि, वर्षासु कुङ्कुमखचितादि, तदेतत् कालकृत्स्नम्। एतदपि जघन्य-मध्यमोत्कृष्टभेदात् त्रिविधम् ॥ ३८८५ ॥ भावकृत्स्नमाह—

**दुविहं च भावकसिणं, वण्णजुतं चेवं होति मोल्लजुयं।**
**वण्णजुयं पंचविहं, तिविहं पुण होइ मोल्लजुतं ॥ ३८८६ ॥**

द्विविधं च भावकृत्स्नम्, तद्यथा—वर्णयुतं मूल्ययुतं च, वर्णतो मूल्यतश्चेत्यर्थः। तत्र वर्णयुतं 'पञ्चविधं' कृष्णादिवर्णभेदात् पञ्चप्रकारम्। मूल्ययुतं पुनः 'त्रिविधं' जघन्यादिभेदात् त्रिप्रकारम् ॥ ३८८६ ॥ इदमेव स्पष्टयति—

**पंचण्हं वण्णाणं, अण्णतराएण जं तु वण्णड्ढं।**
**तं वण्णजुयं कसिणं, जहण्णयं मज्झिमुक्कोसं ॥ ३८८७ ॥**

'पञ्चानां' कृष्णादीनां वर्णानामन्यतरेण वर्णेन यद् आढ्यं–समृद्धं तदेतद् वर्णयुतं कृत्स्नमुच्यते। इदमपि जघन्यं मध्यममुत्कृष्टं चेति। मूल्ययुतं सभेदमप्युपरि वक्ष्यते ॥ ३८८७ ॥

अथानन्तरोक्तकृत्स्नेषु प्रायश्चित्तमाह—

**चाउम्मासुक्कोसे, मासो मज्झे य पंच य जहण्णे।**
**तिविहम्मि वि वत्थम्मि, तिविधा आरोवणा भणिया ॥ ३८८८ ॥**

---

१ °म्मि अच्चियं दुल्लहं व जं भा०। एतदनुसारेणैव भा० टीका। दृश्यतां टिप्पणी २ ॥ २ °शेऽर्चितं यत्र वा यद् 'दुर्लभं' सुम° भा० ॥ ३ जं जं तु जम्मि ताभा० ॥ ४ °व तह य मो° ताभा० ॥ ५ °मृद्धं तद् व° भा० कां० ताटी० विना ॥

'उत्कृष्टे' कल्पादौ कृत्स्ने चतुर्लघवः । 'मध्यमे' पटलकादौ लघुमासः । 'जघन्ये' मुखवस्त्रिकादौ पञ्चरात्रिन्दिवानि । एवं त्रिविधेऽपि कृत्स्नवस्त्रे यथाक्रमं त्रिविधा आरोपणा भणिता ॥३८८८॥

**दव्वाइतिविहकसिणे, एसा आरोवणा भवे तिविहा ।**
**एसेव वण्णकसिणे, चउरो लहुगा व तिविधे वि ॥ ३८८९ ॥**

एषा च त्रिविधाऽप्यारोपणा द्रव्यादौ त्रिविधकृत्स्ने ◁[1]भवति, द्रव्यकृत्स्ने▷ क्षेत्रकृत्स्ने कालकृत्स्ने चेत्यर्थः । एषैव च वर्णकृत्स्नेऽपि मन्तव्या । अथवा वर्णकृत्स्ने जघन्यादिभेदात् त्रिविधेऽपि चतुर्लघुकमेव । नवरं तपः-कालविशेषोऽत्र क्रियते—उत्कृष्टे यत् चतुर्लघु तत् तपसा कालेन च गुरुकम्, मध्यमे तदेव तपोगुरुकम्, जघन्ये कालगुरुकम्; यद्वा उत्कृष्टे द्वाभ्यां गुरुकम्, मध्यमेऽन्यतरगुरुकम्, जघन्ये द्वाभ्यामपि लघुकम् ॥३८८९॥ अथ मूल्ययुतं व्याख्यानयति—

**मुल्लजुयं पि य तिविहं, जहण्णगं मज्झिमं च उक्कोसं ।**
**जहण्णेणऽट्ठारसगं, सतसाहस्सं च उक्कोसं ॥ ३८९० ॥**

मूल्ययुतमपि कृत्स्नं त्रिविधम्—जघन्यं मध्यममुत्कृष्टं च । यस्य रूपकाणामष्टादशकं मूल्यं तद् जघन्यम्, शतसहस्ररूपकमूल्यमुत्कृष्टम्, शेषमष्टादशकादूर्द्ध्वं शतसहस्रादर्वाग्मूल्यलभ्यं सर्वमपि मध्यमम् ॥ ३८९० ॥ अथ कतमेन रूपकेणेदं प्रमाणं निरूप्यते ? इत्याह—

**दो साभरगा दीविच्चगा तु सो उत्तरापथे एक्को ।**
**दो उत्तरापहा पुण, पाडलिपुत्तो हवति एक्को ॥ ३८९१ ॥**

'द्वीपं नाम' सुराष्ट्राया दक्षिणस्यां दिशि समुद्रमवगाह्य यद् वर्त्तते तदीयौ द्वौ 'साभरकौ' रूपकौ स उत्तरापथे एको रूपको भवति । द्वौ च उत्तरापथरूपकौ पाटलिपुत्रक एको रूपको भवति ॥ ३८९१ ॥ अथवा—

**दो दक्खिणावहा[3] तु, कंचीए णेलओ स दुगुणो य ।**
**एगो कुसुमणगरगो, तेण पमाणं इमं होति ॥ ३८९२ ॥**

दक्षिणापथौ द्वौ रूपकौ काञ्चीपुर्या द्रविडविषयप्रतिबद्धाया एकः 'नेलकः' रूपको भवति । 'सः' काञ्चीपुरीरूपको द्विगुणितः सन् कुसुमनगरसत्क एको रूपको भवति । कुसुमपुरं पाटलिपुत्रमभिधीयते । 'तेन च' रूपकेणेदमनन्तरोक्तमष्टादशकादिप्रमाणं प्रतिपत्तव्यं भवति ॥ ३८९२ ॥ अथ मूल्यवृद्ध्या प्रायश्चित्तवृद्धिमुपदर्शयति—

**अट्ठारस वीसा या, अगुणापण्णा य पंच य सयाइं ।**
**एगूणगं सहस्सं, दस पण्णासं सतसहस्सं ॥ ३८९३ ॥**
**चत्तारि छच्च लहु गुरु, छेदो मूलं च होइ बोद्धव्वं ।**
**अणवट्ठप्पो य तहा, पावति पारंचियं ठाणं ॥ ३८९४ ॥**

अष्टादशरूपकमूल्यं वस्त्रं गृह्णाति चत्वारो लघवः । विंशतिरूपकमूल्ये चत्वारो गुरवः । एकोनपञ्चाशन्मूल्ये षड्लघवः । पञ्चशतमूल्ये षड्गुरवः । एकोनसहस्रमूल्ये ◁[4]छेदः । दशसहस्र-

१ ◁ ▷ एतदन्तर्गतः पाठः भा० कां० एव वर्त्तते ॥ २ °रावहो ए° ताभा० ॥ ३ °हा वा, कंचीए णेलओ हवइ एक्को ताभा० ॥ ४ ◁ ▷ एतदन्तर्गतः पाठः भा० कां० एव वर्त्तते ॥

मूल्ये ▷ मूलम् । पञ्चाशत्सहस्रमूल्येऽनवस्थाप्यम् । शतसहस्रमूल्ये पाराञ्चिकं स्थानं प्राप्नोति ॥ ३८९३ ॥ ३८९४ ॥ प्रकारान्तरेणात्रैव प्रायश्चित्तमाह—

**अट्ठारस वीसा या, सयमड्ढाइज्ज पंच य सयाइं ।**
**सहस्सं च दससहस्सा, पण्णास तधा सतसहस्सं ॥ ३८९५ ॥**
**लहुगो लहुगा गुरुगा, छम्मासा होंति लहुग गुरुगा य ।**
**छेदो मूलं च तहा, अणवट्ठप्पो य पारंची ॥ ३८९६ ॥**

अष्टादशरूपकमूल्ये वस्त्रे गृह्यमाणे लघुमासः । विंशतिमूल्ये चतुर्लघवः । शतमूल्ये चतुर्गुरवः । अर्धतृतीयशतमूल्ये षड्लघवः । पञ्चशतमूल्ये षड्गुरवः । सहस्रमूल्ये छेदः । दशसहस्रमूल्ये मूलम् । पञ्चाशत्सहस्रमूल्येऽनवस्थाप्यम् । शतसहस्रमूल्ये पाराञ्चिकम् ॥ ३८९५ ॥ ३८९६ ॥

अथवा—

**अट्ठारस वीसा या, पण्णास तधा सयं सहस्सं च ।**
**पण्णासं च सहस्सा, तत्तो य भवे सयसहस्सं ॥ ३८९७ ॥**
**चउगुरुग छच्च लहु गुरु, छेदो मूलं च होति बोद्धव्वं ।**
**अणवट्ठप्पो य तहा, पावति पारंचियं ठाणं ॥ ३८९८ ॥**

अष्टादशरूपकमूल्ये चतुर्गुरवः । विंशतिमूल्ये षड्लघवः । पञ्चाशन्मूल्ये षड्गुरवः । शतमूल्ये छेदः । सहस्रमूल्ये मूलम् । पञ्चाशत्सहस्रमूल्येऽनवस्थाप्यम् । शतसहस्रमूल्ये पाराञ्चिकम् ॥ ३८९७ ॥ ३८९८ ॥ प्रकारान्तरेण भावकृत्स्नमुपदर्शयति—

**अहवा रागसहगतो, वत्थं धारेति दोससहितो वा ।**
**एवं तु भावकसिणं, तिविहं परिणामणिप्फण्णं ॥ ३८९९ ॥**

अथवा 'अहो ! रमणीयं वस्त्रम्' इत्येवं रागसहगतो यद्वा 'अहो ! मे मलिनं कुथितं वस्त्रम्' इत्येवं द्वेषसहितो यद् वस्त्रं धारयति तदेतद् भावकृत्स्नं मन्तव्यम् । इदं च परिणामनिष्पन्नं त्रिविधम्, तद्यथा—जघन्येन राग-द्वेषपरिणामेन जघन्यम्, मध्यमेन मध्यमम्, उत्कृष्टेनोत्कृष्टम् ॥ ३८९९ ॥ अथ द्रव्यादिकृत्स्नेषु दोषानाह—

**भारो भय परियावण, मारण अहिगरण दव्वकसिणम्मि ।**
**पडिलेहाऽऽणालोवो, मणसंतावो उवायाणं ॥ ३९०० ॥**

प्रमाणातिरिक्तं वस्त्रं वहत आत्मन एव भारो भवति, अध्वप्रपन्नानां सकलकृत्स्नादौ स्तेनेभ्यो भयं भवेत्, ते च साधूनां बन्धनादिरूपं परितापनं मारणं वा कृत्वा तादृशं वस्त्रमपहरेयुः, अविरतकैश्च गृहीतेऽधिकरणं भवेत्, एते द्रव्यकृत्स्ने गृह्यमाणे दोषाः । तथा 'क्षेत्र-कालकृत्स्नोपाधिं मा सागारिको द्राक्षीत्' इति कृत्वा यदि न प्रत्युपेक्षन्ते तत उपधिनिष्पन्नं तीर्थकृतां चाज्ञालोपः कृतो भवति । अथ प्रत्युपेक्षन्ते ततः स्तेनास्तादृशं वस्त्रं दृष्ट्वा हरेयुः, पन्थानं वा बद्ध्वा तिष्ठेयुः । हृते च तस्मिन् महान् मनःसन्तापो भवति । यद्वा तत् कृत्स्नं वस्त्रं शैक्षस्योत्प्रव्रजितुकामस्योपादानं भवति, तदपहृत्योत्प्रव्रजेदित्यर्थः ॥ ३९०० ॥

---

१ पडिलेही नालोगो, मणसंतावो य आयाणं ताभा० ॥

साधु-साध्वीजनलक्षणे ज्ञातव्यः ॥ ४०७९ ॥ तत्र स्थविरकल्पिकानां चतुर्दशविध ओघोपधिः प्रागनन्तरसूत्र एवोक्तः, अथार्याणां पञ्चविंशतिविधं तमेवाह—

**पत्तं पत्ताबंधो, पायट्ठवणं च पायकेसरिया ।**
**पडलाइँ रयत्ताणं, च गोच्छओ पायनिज्जोगो ॥ ४०८० ॥**
**तिण्णेव य पच्छाया, रयहरणं चेव होइ मुहपोत्ती ।**
**तत्तो य मत्तए खलु, चोद्दसमे कमढए होति ॥ ४०८१ ॥**
**उग्गहणंतग पट्टो, अड्ढोरुअ चलणिया य बोधव्वा ।**
**अब्भितर-बाहिणियंसणी य तह कंचुए चेव ॥ ४०८२ ॥**
**उक्कच्छिय वेकच्छिय, संघाडी चेव खंधकरणी य ।**
**ओहोवहिम्मि एते, अज्जाणं पण्णवीसं तु ॥ ४०८३ ॥**

पात्रकादीनि त्रयोदशोपकरणानि साधूनामिव द्रष्टव्यानि । चतुर्दशं तु चोलपट्टकस्थाने तासां कमठकं भवति, तच्चाष्टकमयमेकैकं संयतीनां निजोदरप्रमाणेन विज्ञेयम् १४ । तथाऽवग्रहानन्तकं १५ पट्टः १६ अर्द्धोरुकं १७ चलनिका च बोद्धव्या १८, अभ्यन्तरनिवसनी १९ बहिर्निवसनी २० तथा कञ्चुकश्चैव २१ औपकक्षिकी २२ वैकक्षिकी २३ सङ्घाटी २४ स्कन्धकरणी २५ । एवमेतान्योघोपधौ आर्यिकाणां पञ्चविंशतिरुपकरणानि भवन्तीति ॥ ४०८० ॥ ४०८१ ॥ ४०८२ ॥ ४०८३ ॥ अथैतान्येव विवृणोति—

**नावनिभो उग्गहणंतओ उ सो गुज्झदेसरक्खट्ठा ।**
**सो य पमाणेणेक्को, घण-मसिणो देहमासज्ज ॥ ४०८४ ॥**

इह 'अवग्रहः' इति योनिद्वारस्य सामयिकी संज्ञा, तस्यानन्तकं—वस्त्रमवग्रहानन्तकम्, गाथायां पुंस्त्वं प्राकृतत्वात्, तच्च 'नौनिभं' मध्यभागे विशालं पर्यन्तभागयोस्तु तनुकं गुह्यदेशरक्षार्थं क्रियते । तच्च गणनया एकम्, आर्त्तव-बीजपातसंरक्षणार्थं च घनं—घनवस्त्रेण, पुरुषसमानकर्कशस्पर्शपरिहरणार्थं च मसृणं—मसृणवस्त्रेण क्रियते । प्रमाणेन च 'देहं' स्त्रीशरीरमासाद्य तद् विधीयते, देहो हि कस्याश्चित् तनुः कस्याश्चित्तु स्थूलः ततस्तदनुसारेण विधेयमित्यर्थः ॥४०८४॥

**पट्टो वि होइ एक्को, देहपमाणेण सो उ भइयव्वो ।**

( सर्वग्रन्थाग्रम्—२७००० )

**छादंतोग्गहणंतं, कडिबद्धो मल्लकच्छा वा ॥ ४०८५ ॥**

पट्टोऽपि गणनयैको भवति । स च पर्यन्तभागवर्त्तिवीटकबन्धबद्धः, पृथुत्वेन चतुरङ्गुलप्रमाणः समतिरिक्तो वा, दैर्घ्येण तु स्त्रीकटीप्रमाणः । स च देहप्रमाणेन भक्तव्यः, पृथुलकटीभागाया दीर्घः सङ्कीर्णकटीभागायास्तु ह्रस्व इत्यर्थः । स चावग्रहानन्तकमुभयान्तयोराच्छादयन् कटीबद्धः सन् मल्लकक्षावद् ज्ञायते ॥ ४०८५ ॥

**अड्ढोरुगो वि ते दो, वि गिण्हिउं छादए कडीभागं ।**
**जाणुप्पमाण चलणी, असिव्विया लंखियाए व ॥ ४०८६ ॥**

---

१ एतदग्रे ग्रन्थाग्रम् ११५०० ताटी० । ग्रन्थाग्रम् २५०० मो० ले० ॥

अर्धोरुकोऽपि 'तौ द्वावपि' अवग्रहानन्तक-पट्टावुपरिष्टाद् गृहीत्वा सर्वं कटीभागमाच्छादयति, स च मल्लचलनाकृतिः केवलमूर्वोरन्तरे ऊरुद्वये च कसाबद्धः । चलनिकाऽप्येवमेव, नवरमधो जानुप्रमाणा अस्यूता लङ्खिकापरिधानवत्–वंशाग्रनर्त्तकीचलनकवदसौ मन्तव्या ॥ ४०८६ ॥

**अंतोनियंसणी पुण, लीणतरा जाव अद्धजंघातो ।**
**बाहिर खुलगपमाणा, कडीय दोरेण पडिबद्धा ॥ ४०८७ ॥**

अन्तर्निवसनी पुनरुपरि कटीभागादारभ्याधोऽर्धजङ्घा यावद् भवति । सा च परिधानकाले लीनतरा परिधीयते, मा मूँदनावृता जनोपहास्येति । बहिर्निवसनी पुनरुपरि कटीभागादारभ्याधः 'खुलकप्रमाणा' चरणगुल्फं यावदित्यर्थः, कट्यां च दवरकेण प्रतिबद्धा ॥ ४०८७ ॥

इदमधःशरीरस्य षड्विधमुपकरणमुक्तम् । अथोर्द्धकायोपयोगि कञ्चुकादिकं व्याख्याति—

**छादेति अणुक्कुयिते, उरोरुहे कंचुओ असिव्वितओ ।**
**एमेव य उक्कच्छी, सा णवरं दाहिणे पासे ॥ ४०८८ ॥**

दैर्घ्यमाश्रित्य स्वहस्तेनार्धतृतीयहस्तप्रमाणः पृथुत्वेन तु हस्तमानः 'असीवितः' उभयतः कटीदेशे कसावबद्धः कञ्चुकः क्रियते । स च उरोरुहौ छादयति, किम्भूतौ ? 'अनुत्कुचितौ' [अ]श्लथौ; गाढपरिधाने हि विविक्तविभागौ भवेताम् । कक्षायाः समीपमुपकक्षम्, तत्र भवा औपकक्षिकी, अध्यात्मादित्वादिकण्प्रत्ययः, 'एवमेव च' कञ्चुकवत् तस्या अपि स्वरूपं वक्तव्यम् । सा नवरं दक्षिणे पार्श्वे समचतुरस्रा स्वहस्तेन सार्धहस्तप्रमाणा उरोभागं पृष्ठं च प्रच्छादयन्ती वामस्कन्धे वामपार्श्वे च वीटकबद्धा परिधीयते ॥ ४०८८ ॥

**वेगच्छिया उ पट्टो, कंचुकमुकच्छियं च छादेति ।**
**संघाडीओ चउरो, तत्थ दुहत्था उ वमधीए ॥ ४०८९ ॥**
**दुन्नि तिहत्थायामा, भिक्खट्ठा एग एग उच्चारे ।**
**ओसरणे चउहत्थाऽनिसन्नपच्छाइणी मसिणा ॥ ४०९० ॥**

औपकक्षिकीविपरीतो वैकक्षिकीनामकः पट्टः कञ्चुकमौपकक्षिकीं च छादयन् वामपार्श्वे परिधीयते । तथोपरि परिभोग्याः सङ्घाटिकाश्चतस्रो भवन्ति—एका द्विहस्ता, द्वे त्रिहस्ते, एका च चतुर्हस्ता; दैर्घ्येण चतस्रोऽपि सार्धहस्तत्रयप्रमाणाश्चतुर्हस्ता वा मन्तव्याः । तत्र 'द्विहस्ता' द्विहस्तविस्तृता सङ्घाटिका वसत्यां परिधीयते, न तां विहाय प्रकटदेहया कदाचिदासितव्यमिति भावः ॥ ४०८९ ॥

ये च द्वे 'त्रिहस्तायामे' त्रिहस्तविस्तृते तयोर्मध्ये एका भिक्षार्थं गच्छन्त्या प्राव्रियते, एका उच्चारभूमिं व्रजन्त्या । तथा 'समवसरणे' व्याख्यानश्रवणादौ गच्छन्ती चतुर्हस्तां प्रावृणोति, सा च प्राक्तनसङ्घाटीभ्यो बृहत्तरप्रमाणा अनिषण्णप्रच्छादनार्थं क्रियते; यतो न तत्र संयतीभिरुपवेष्टव्यम्, किन्तूर्द्धस्थिताभिरनुयोगश्रवणादि विधेयम्, ततस्तया स्कन्धादारभ्य पादौ यावद् वपुः प्रच्छाद्य तिष्ठन्ति । एताश्च पूर्वप्रावृतवेषप्रच्छादनार्थं प्रवचनवर्णप्रभावनार्थं च मसृणाः

१ °लमुपरि ऊरु° भा० कां० ताटी० ॥ २ °वत् सा म° मो० ले० ॥ ३ °तरी जा° ताभा० ॥
४ °भूदुत्सृता जनो° भा० कां० ताटी० ॥

क्रियन्ते। चतस्रोऽपि च गणनाप्रमाणेनैकमेव रूपं गण्यते, युगपत् परिभोगाभावात् ॥४०९०॥

**खंधकरणी उ चउहत्थवित्थरा वायविहुतरक्खट्ठा।**
**खुज्जकरणी उ कीरति, रूववतीणं[१] कुडुहहेउं ॥ ४०९१ ॥**

स्कन्धकरणी चतुर्हस्तविस्तरा समचतुरस्रा प्रावरणस्य वातविधुतरक्षणार्थं चतुष्फला स्कन्धे कृत्वा प्राव्रियते। रूपवतीनां च संयतीनां कुडुभहेतोः कुब्जकरण्यपि क्रियते, पृष्ठदेशे संवर्त्तितया औपकक्षिकी-वैकक्षिकीनिबद्धया तया विरूपतापादनाय कुडुभं विधीयत इति भावः ॥ ४०९१ ॥ उपसंहरन्नाह—

**संघातिमेतरो वा, सव्वोऽवेसो समासओ उवधी।**
**पासगबद्धमझुसिरो, जं चाऽऽइण्णं तगं णेयं ॥ ४०९२ ॥**

सर्वोऽपि 'एषः' अनन्तरोक्त उपधिः समासतो द्विधा—सङ्घातिम इतरश्च। द्विन्यादिखण्डानां मीलनेन निष्पन्नः सङ्घातिमः, 'इतरः' तद्विपरीतोऽसङ्घातिमः। अयं च 'पाशकबद्धः' कसाबद्धः तथा 'अशुषिरः' गृहिसीवनिकारहितः प्रतिथिग्गलवर्जितो वा। यच्चात्र द्रव्य-क्षेत्र-काल-भावेषु संविग्नगीतार्थैः पूर्वसूरिभिराचीर्णं तत् सर्वमपि 'ज्ञेयं' सम्यगुपादेयतया मन्तव्यम् ॥ ४०९२ ॥ अथ जिनकल्पिकादीनामुपधेरुत्कृष्टादिविभागमाह—

**उक्कोसओ जिणाणं, चउव्विहो मज्झिमो वि य तहेव।**
**जहण्णो चउव्विहो खलु, एत्तो थेराण वोच्छामि ॥ ४०९३ ॥**

त्रयः कल्पाः प्रतिग्रहश्चेति जिनकल्पिकानामुत्कृष्ट उपधिश्चतुर्विधः। एवं मध्यमोऽपि रजोहरण-पटलक-पात्रबन्ध-रजस्त्राणभेदात् चतुर्विधः। जघन्योऽपि मुखपोतिका-पादकेसरिका[३]-गोच्छक-पात्रस्थापनभेदात् चतुर्विधः। इत ऊर्द्ध्वं स्थविरकल्पिकानां वक्ष्यामि ॥ ४०९३ ॥

**उक्कोसो थेराणं, चउव्विहो छव्विहो य मज्झिमओ।**
**जहण्णो चउव्विहो खलु, एत्तो अज्जाण वोच्छामि ॥ ४०९४ ॥**

उत्कृष्टो जघन्यश्च जिनकल्पिकानामिव द्रष्टव्यः। नवरं मध्यमः षड्विध इत्थम्—रजोहरणं पटलकानि पात्रकबन्धो रजस्त्राणं मात्रकं चोलपट्टकश्चेति। [ इत ऊर्द्ध्वमार्याणां वक्ष्यामि ] ॥ ४०९४ ॥

**उक्कोसो अट्ठविहो, मज्झिमओ होइ तेरसविहो उ।**
**जहण्णो चउव्विहो खलु, एत्तो उ उवग्गहं वोच्छं ॥ ४०९५ ॥**

आर्याणामुत्कृष्ट उपधिरष्टविधः—त्रयः कल्पाः ३ प्रतिग्रहः ४ अभ्यन्तरनिवसनी ५ बहिर्निवसनी ६ सङ्घाटिका ७ स्कन्धकरणी ८ चेति। मध्यमस्त्रयोदशविधो भवति, तद्यथा—रजोहरणं १ पटलकानि २ पात्रकबन्धः ३ रजस्त्राणं ४ मात्रकं ५ कमठकम् ६ अवग्रहानन्तकं ७ पट्टः ८ अर्धोरुकः ९ कञ्चुकः १० चलनिका ११ औपकक्षिकी १२ वैकक्षिकी १३ चेति। जघन्यश्चतुर्विधः—मुखपोतिका पात्रकेसरिका[४] गोच्छकः पात्रस्थापनं चेति। इत ऊर्द्ध्वमतिरिक्तो

१ °णी व की° ताभा० ॥ २ °तीए कु° ताभा० ॥ ३ °पात्रके° मो० ॥ ४ पादके° भा० का० तादी० ॥

य उपधिः स उपग्रहोपधिरुच्यते, तमपि जघन्यादिविभागनिरूपणेनाहं वक्ष्ये ॥ ४०९५ ॥

तत्र जघन्यं तावदाह—

**पीढग णिसिज्ज दंडगपमज्जणी घट्टए डगलमादी ।**
**पिप्पलग सूयि णहरणि, सोहणगदुगं जहण्णो उ ॥ ४०९६ ॥**

पीठकं काष्ठमयं छगणमयं वा । निषद्या रजोहरणस्य सौत्रिकी और्णिकी चेति द्विविधा । 'दण्डकप्रमार्जनी नाम' यया वसतिः प्रमार्ज्यते । 'घट्टकः' लिप्तपात्रमसृणताकारकः पाषाणः । डगलकाः—पुतप्रोञ्छनोपयोगिनो लेष्टवः, आदिशब्दात् कुटमुख-क्षारादिपरिग्रहः । 'पिप्पलकः' क्षुरप्रः । 'सूची' यया वस्त्रं सीव्यते । 'नखहरणी' यया नखा उद्ध्रियन्ते । 'शोधनकद्विकं तु' कर्णशोधनं दन्तशोधनं चेति । एष जघन्य औपग्रहिकोपधिः ॥४०९६॥ अथ मध्यममाह—

**वासत्ताणे[1] पणगं, चिलिमिणिपणगं दुगं च संथारे ।**
**दंडादीपणगं पुण, मत्तगतिग पादलेहणिया ॥ ४०९७ ॥**
**चम्मतिगं पट्टदुगं, णायव्वो मज्झिमोवही एसो ।**
**अज्जाण वारए पुण, मज्झिमए होति अतिरित्तो ॥ ४०९८ ॥**

वर्षात्राणानां पञ्चकम्—वालमयं सूत्रमयं सूचीमयं कुटशीर्षकं छत्रकं चेति । तत्र वालमयं सूत्रमयं च प्रतीतम्, सूची—ताडपत्रसूच्यादिखुम्पकः, कुटशीर्षकं पलाशपत्रमयम्, छत्रकं वंशमयम् । चिलिमिलिपञ्चकम्—वालमयी सूत्रमयी वल्कमयी कटमयी दण्डमयी चेति, पञ्चापि **प्रथमोद्देशके**[2] ( सू० १८ गा० २३७४ ) विख्याताः । संस्तारकद्विकं शुषिरा-ऽशुषिरभेदात् । शुषिरस्तृणादिमयः, अशुषिरः काष्ठमयः । दण्डादिपञ्चकम्—दण्डको विदण्डको यष्टिर्वियष्टिर्नालिका चेति । मात्रकत्रिकं तु खेल-प्रश्रवणोच्चारमात्रकभेदात् । पादलेखनिका वटोदुम्बर-प्लक्षा-ऽम्लिकाकाष्ठमयी वर्षासु कर्दमापनयनी ॥ ४०९७ ॥

चर्मत्रिकं पुनरिदम्—आस्तरणं प्रावरणमुपवेशनं च । दवानलादिभये यद् भूमावास्तीर्यते प्रलम्बादिविकरणाय वा तदास्तरणम्, षट्पदिकाभये यत् प्राव्रियते तत् प्रावरणम्, यत्रार्शोरोगादिभिः कारणैरुपविश्यते तदुपवेशनम् । अथवा कृत्तिः तलिका वद्ध्रश्चेति चर्मत्रिकम् । पट्टद्विकम्—संस्तारपट्ट उत्तरपट्टश्च, अथवा पर्यस्तिकापट्टः सन्नाहपट्टश्चेति । तत्र पर्यस्तिकापट्टो योगपट्ट उच्यते, सन्नाहपट्टस्तु विहारे उपधेः शरीरेण सह बन्धनार्थः । एष मध्यम उपग्रहोपधिः साधूनां ज्ञातव्यः । आर्याणामप्येवमेव, नवरम्—तासां जनमध्य एवोपाश्रयस्यानुज्ञातत्वात् ससागारिके वसन्तीनां प्रश्रवणव्युत्सर्जनानन्तरमुदकस्पर्शनार्थं वारको मध्यमोपधावतिरिक्तो भवति ॥ ४०९८ ॥ अथोत्कृष्टमाह—

**अक्खा संथारो या, दुविहो एगंगिएतरो चेव ।**
**पोत्थगपणगं फलगं, बितियपदे होति उक्कोसो ॥ ४०९९ ॥**

'अक्षाः' अनुयोगदाने गुरूणां भङ्गचारणिकार्थमुपकरणम् । संस्तारको द्विविधः—एकाङ्गिक इतरश्च । तत्रैकाङ्गिकः—तिनिशादिकाष्ठपट्टरूपः, इतरः—दवरकावबद्धकम्बिकामयः ।

१ वासाताणे ताभा० ॥ २ °के व्याख्या° कां० भा० ॥

प्रथमपदमुत्सर्गः तदपेक्षया द्वितीयपदम्—अपवादस्तत्र प्रागुक्तस्वरूपं पुस्तकपञ्चकं गृह्यते, 'फलकं नाम' पट्टिका यस्यां लिखित्वा पठ्यते। एष उत्कृष्ट औपग्रहिकोपधिर्मन्तव्यः ॥ ४०९९ ॥

॥ **भिन्नाभिन्नवस्त्रप्रकृतं समाप्तम्** ॥

---

## अ व ग्र हा न न्त का व ग्र ह प ट्ट क प्र कृ त म्

सूत्रम्—

**नो कप्पइ निग्गंथाणं उग्गहणंतगं वा उग्गहपट्टगं वा धारित्तए वा परिहरित्तए वा १० ॥**

अथास्य सूत्रस्य कः सम्बन्धः ? इत्याह—

**उभयम्मि वि अविसिट्ठं, वत्थग्गहणं तु वण्णियं एयं ।**
**जं जस्स होति जोग्गं, इदाणि तं तं परिकहेति ॥ ४१०० ॥**

उभयं—भिन्ना-ऽभिन्नसूत्रद्वयम् एतस्मिन् 'अविशिष्टम्' 'इदं साधूनां कल्पते न कल्पते वा' इत्यादिविशेषरहितम् 'इदम्' ('एतत्') अनन्तरोक्तं वस्त्रग्रहणं वर्णितम्। इदानीं तु यद् यस्य संयतस्य संयत्या वा योग्यं तत् तत् सूत्रेणैव साक्षात् परिकथयतीति ॥ ४१०० ॥

अनेन सम्बन्धेनायातस्यास्य व्याख्या—नो कल्पते निर्ग्रन्थानाम् 'अवग्रहानन्तकं वा' गुह्यदेशपिधानवस्त्रम् 'अवग्रहपट्टकं वा' तस्यैवाच्छादकपट्टं धारयितुं वा परिहर्तुं वा इति सूत्रसंक्षेपार्थः ॥ अथ **निर्युक्तिविस्तरः**—

**निग्गंथोग्गहधरणे, चउरो लहुगा य दोस आणादी ।**
**अतिरेगउवहि तह लिंगभेद बितियं अरिसमादी ॥ ४१०१ ॥**

निर्ग्रन्थानामवग्रहानन्तक-पट्टयोर्धारणे चत्वारो लघुमासाः आज्ञादयश्च दोषाः, अतिरिक्तोपधित्वादधिकरणं भवेत्। तथा लिङ्गभेदः कृतो भवति, साध्वीनां लिङ्गमाश्रितं भवतीत्यर्थः। द्वितीयपदविषयम् अर्शोरोगादिकं तत्रावग्रहानन्तकं पट्टकं वा धारयेत् ॥ ४१०१ ॥

द्वितीयपदमेव भावयति—

**भगंदलं जस्सऽरिसा व णिच्चं, गलंति पूयं लसि सोणियं वा ।**
**उड्डाह-सज्झाय-दयाणिमित्तं, सो उग्गहं बंधति पट्टगं च ॥ ४१०२ ॥**

'भगन्दरः' पुतसन्धौ व्रणविशेषोऽर्शांसि वा यस्य नित्यं पूयं वा रसिकां वा शोणितं वा गलन्ति सः 'उड्डाह-स्वाध्याय-दयानिमित्तम्' 'अहो ! अमी ईदृशा ◁ एव पापोपहता रोगाभिभूतवपुषः प्रव्रज्यां प्रतिपद्यन्ते' इत्यादिक उड्डाहो मा भूत्, तथा शोणिते परिगलति स्वाध्यायः कर्तुं न कल्पते, पूय-रसिका-शोणितगन्धाघ्राणाच्च कीटिकादिप्राणिनामभिलीयमानानामुपघातो भवेत्, अतोऽवग्रहानन्तकं पट्टकं वा बध्नाति ॥ ४१०२ ॥

---

१ वा अवग्रहपट्टकं वा धारयि° भा० ॥ २ °यं रसि मो० ले० ॥ ३ ◁ ▷ एतच्चिह्नान्तर्गतः पाठः ताटी० मो० ले० के० नास्ति ॥

तत्र च बद्धे पूयादिभिरुपलिप्ते धावनविधिमाह—

**पूय-लसिगा उवस्सएँ, धोव्वति असहुस्स पट्टो रुहिरं च ।**
**उग्गह पट्टं च सहू, वीयारे लोहियं धुवति ॥ ४१०३ ॥**

पूय-रसिके अस्वाध्यायिकं न भवतीति कृत्वा ते उपाश्रय ▷ एव धाव्येते । यो भगन्दरादिरोगवान् बहिर्गन्तुमसहिष्णुस्तस्य पट्टो रुधिरं चोपाश्रये कचिद् मात्रके धाव्यते, ततस्तद्धावनं हस्तशताद् बहिः परिष्ठाप्यते । अथासौ बहिर्गन्तुं सहिष्णुस्ततो विचारभूमौ गतः स्वयमेवावग्रहपट्टकं रुधिरं च धावति ॥ ४१०३ ॥ पट्टबन्धने विधिमाह—

**ते पुण होंति दुगादी, दिवसंतरिएहिँ बज्झए तेहिं ।**
**अरुगं इहरा कुच्छइ, ते वि य कुच्छंति णिच्चोल्ला ॥ ४१०४ ॥**

'ते पुनः' अवग्रहानन्तक-पट्टाः 'द्विकादयः' द्वि-त्रिप्रभृतिसङ्ख्याकाः कर्त्तव्याः, तैर्दिवसान्तरितैर्व्रणो बध्यते । किमुक्तं भवति ?—येनावग्रहानन्तकेन पट्टकेन वा अद्य व्रणो बद्धः द्वितीयदिने स उन्मोच्य प्रक्षाल्य चापरिभोग्यो विधेयः, यः पुनराद्यदिने न परिभुक्तः तेन तस्मिन् दिने व्रणो बन्धनीयः । 'इतरथा' प्रतिदिनं तेनैव पट्टेन बन्धे दीयमाने 'अरुकं' व्रणः 'कुथ्यति' पूतिभावमुपगच्छति, 'तेऽपि च' पट्टाः प्रतिदिनं बध्यमानतया नित्यं—सदैवार्द्राः सन्तः कुथ्यन्ति, अतो द्व्यादयः पट्टाः कर्त्तव्याः ॥ ४१०४ ॥

सूत्रम्—

**कप्पइ निग्गंथीणं उग्गहणंतगं वा उग्गहपट्टगं वा धारित्तए वा परिहरित्तए वा ११ ॥**

◁ अस्य व्याख्या प्राग्वत् ॥ ▷ अत्र भाष्यविस्तरः—

**निग्गंथीण अगिण्हणें, चउरो गुरुगा य आयरियमादी ।**
**तच्चण्णिय ओगाहण, णिवारणऽण्णेसि ओहसणं ॥ ४१०५ ॥**

निर्ग्रन्थीनामवग्रहानन्तकस्य पट्टकस्य वा अग्रहणे चतुर्गुरुकाः । इदं सूत्रमाचार्यः प्रवर्त्तिन्या न कथयति चत्वारो गुरवः । प्रवर्त्तिनी संयतीनां न कथयति चत्वारो गुरवः । आर्यिका न प्रतिशृण्वन्ति मासलघु । भिक्षादौ गच्छन्ती यद्यवग्रहानन्तकं पट्टकं वा न गृह्णाति तत एते दोषाः—तच्चान्निकस्य—रुधिरस्य भिक्षां गच्छन्त्याः 'अवगाहनं' प्रसरणम् अन्येषु दिवसेष्ववग्रहानन्तक-पट्टाभ्यां निवारितमासीत् परं तद्दिवसमगृहीतयोस्तयो रुधिरमवगाढम्, ततो लोकस्तद् दृष्ट्वा उपहसनं कुर्यात् ॥ ४१०५ ॥ कथम् ? इति चेद् उच्यते—

**भिक्खाइ गयाएँ निग्गयं, रुहिरं दट्ठुमसंजता वदे ।**
**धिगहो ! बत ! केणऽयं जणो, दोसमिणं असमिक्ख दिक्खिओ ॥ ४१०६ ॥**

भिक्षायां गतायास्तस्या रुधिरं निर्गतं दृष्ट्वा असंयता वदेयुः—'बत !' इत्यामन्त्रणे, भो भो लोकाः ! धिगहो ! कष्टम्, केनायं स्त्रीलक्षणो जनोऽमुं दोषमसमीक्ष्य दीक्षितः ? ॥ ४१०६ ॥

१ ◁ ▷ एतदन्तर्गतः पाठः भा० नास्ति ॥ २ अथ भा° भा० त० डे० ॥

अपि च—

**छक्कायाण विराहण, पडिगमणादीणि जाणि ठाणाणि ।**
**तब्भाव पिच्छिऊणं, बितियं असती अहव जुण्णा ॥ ४१०७ ॥**

शोणिते परिगलति षट्कायानां विराधना भवति । सा च 'यद् द्रष्टव्यं तद् दृष्टम्' इति कृत्वा प्रतिगमना-ऽन्यतीर्थिकगमनादीनि यानि स्थानानि कुर्यात् तन्निष्पन्नं प्रवर्त्तिन्याः प्रायश्चित्तम् । स चासौ–शोणितपरिगलनलक्षणो भावश्च तद्भावस्तं 'प्रेक्ष्य' विलोक्य तरुणा उपसर्गयेयुरिति वाक्यशेषः । द्वितीयपदमत्राभिधीयते—"असइ" त्ति नास्त्यवग्रहानन्तकम्, अथवा जीर्णा स्थविरा सा संयती अतो विद्यमानमपि न गृह्णीयादपि ॥ ४१०७ ॥

अथेदमेव भावयति—

**दिट्ठं अदिट्ठऽत्र महं जणेणं, लज्जाएँ कुज्जा गमणाइगाइं ।**
**लज्जाएँ भंगो व हवेज्ज तीसे, लज्जाविणासे व स किं न कुज्जा ॥ ४१०८ ॥**

'यद् ममाद्रष्टव्यं तद् दृष्टं तावद् जनेन, अतो नाहमत्र स्थातुं शक्नोमि' इति कृत्वा लज्जया 'गमनादीनि' गृहवासाश्रयणादीनि कुर्यात्, यद्वा 'तस्याः' संयत्या लज्जाया भङ्गो भवेत्, लज्जाविनाशे च सा किं नामाकृत्यं न कुर्यात्? ॥ ४१०८ ॥ तथा—

**तं पासिउं भावमुदिण्णकम्मा, पेल्लेज्ज संजेज्ज व सा वि तत्थ ।**
**तं लोहियं वा वि सरक्खमादी, विज्जा समालब्भऽभिजोययंति ॥ ४१०९ ॥**

'तं' रुधिरपरिगलनरूपं भावं दृष्ट्वा केचित् तरुणा उदीर्णकर्माणश्चतुर्थप्रतिसेवनार्थं प्रेरयेयुः । 'साऽपि च' संयती तत्र 'संजेत्' सङ्गं कुर्यात । यद्वा तद् लोहितं 'सरजस्कादयः' कापालिकप्रभृतयः 'समालभ्य' गृहीत्वा विद्याप्रयोगेण 'अभियोजयन्ति' वशीकुर्वन्ति ॥४१०९॥

यत एवमतः—

**अंतो घरस्सेव जतं करेती, जहा णडी रंगमुवेउकामा ।**
**लज्जापहीणा अह सा जणोघं, संपप्प ते ते पकरेति हावे ॥ ४११० ॥**

यथा 'नटी' रङ्गनर्त्तकी 'रङ्गं' नाट्यस्थानमुपैतुकामा गृहस्यैव 'अन्तः' मध्ये 'जयं' लज्जाया अभिभवं करोति, 'अथ' अनन्तरं सा लज्जाप्रहीणा सती 'जनौघं' जनसमुदायं सम्प्राप्य 'तान् तान् भावान्' अङ्गविक्षेपादीन् प्रकरोति; एवं संयत्यपि भिक्षां गन्तुमनाः प्रतिश्रयमध्य एवावग्रहानन्तकादिभिरुपकरणैरात्मानं सुप्रावृतं करोति, ततो भिक्षां पर्यटन्ती तरुणादिष्ववलोकमानेष्वपि सुखेनैव लज्जां पराजयते ॥ ४११० ॥ अथ द्वितीयपदमाह—

**असईय णंतगस्स उ, पणवण्णुत्तिण्णिगा व ण उ गिण्हे ।**
**निग्गमणं पुण दुविहं, विधि अविही तत्थिमा अविही ॥ ४१११ ॥**

अवग्रहानन्तकस्याभावे पञ्चपञ्चाशद्वर्षेभ्य उत्तीर्णा वा संयती प्रम्लानयोनिकतया न गृह्णीयादपि । इह च भिक्षाया निर्गमनं द्विविधम्—विधिना अविधिना च । तत्र तावदयमविधिः ॥४१११॥

**उग्गहमादीहि विणा, दुणियत्था वा वि उक्खुलणियत्था ।**

---

१ भज्जेज्ज मो० त० ॥ २ °रप्रवहनरूपं मो० ॥ ३ 'भजेत्' भा० विना ॥

**एक्का दुवे य अविही, चउगुरु आणा य अणवत्था ॥ ४११२ ॥**

अवग्रहानन्तकादिभिर्विना भिक्षां निर्गच्छति, दुर्निवसिता वा ◁ उंखुलनिवसिता वा ▷[1] भिक्षां पर्यटति, एका वा द्वे वा भिक्षायां गच्छतः, एष सर्वोऽप्यविधिरुच्यते। अत्र च चतुर्गुरुकाः, आज्ञा च भगवतां विराधिता स्यात्, 'अनवस्था च' एकामविधिना निर्गच्छन्तीं दृष्ट्वा अन्याऽपि निर्गच्छतीत्येवंलक्षणा भवति ॥ ४११२ ॥ तथा—

**मिच्छत्त पवडियाए, वाएण व उड्डुयम्मि पाउरणे।**
**गोयरगया व गहिया, धरिसणदोसे इमे लहति ॥ ४११३ ॥**

अवग्रहानन्तकादिभिर्विना भिक्षां गता सहसा मूर्च्छादिना प्रपतेत्। ततः प्रपतिताया वातेन वा प्रावरणे समुद्धूतेऽप्रावृतत्वं दृष्ट्वा लोको मिथ्यात्वं गच्छेत्, यथा—नास्त्यमीषाममुष्य दोषस्य प्रतिषेधः, कथमन्यथेयमित्थं निर्गच्छेत्? । गोचरगता वा काचिदविधिनिर्गता केनचिद् विटेन गृहीता धर्षणदोषान् 'अमून्' वक्ष्यमाणान् लभते । ते चोपरि दर्शयिष्यन्ते ( गा० ४११६–१८ ) ॥ ४११३ ॥

अथ विधिनिर्गमे गुणमाह—

**अड्डोरुगा-दीहणियासणादी, सारक्खिया होति पदे वि जाव।**
**तिण्हं पि बोलेण जणोऽभिजातो, एक्कंबरा खिप्पमुवेति णासं ॥ ४११४ ॥**

याऽर्धोरुक-दीर्घनिवसन्यादिभिः सुप्रावृता निर्गता सा केनचिद् धर्षितुमारब्धाऽपि पदावपि यावत् संरक्षिता भवति, तिसृणां च संयतीनां बोलेन 'अभिजातः' शिष्टो जनो भूयान् मिलतीति शेषः । या पुनरेकाम्बरा निर्गच्छति सा 'क्षिप्रं' शीघ्रं 'विनाशं' संयमपरिभ्रंशमुपैति ॥ ४११४ ॥

**उव्वेल्लिए[2] गुज्झमपस्सतो से, हाहक्कितस्सेव महाजणेणं।**
**धिद्धि त्ति[3] ओथुक्कित-तालियस्सा, पत्तो समं रण्णदवो व वेदो ॥ ४११५ ॥**

विधिनिर्गतायाः केनचित् प्रत्यनीकेन 'उद्वेल्लिते' उत्सारितेऽपि बाह्योपकरणे यावदसौ गुह्यं न पश्यति तावद् महाजनेन हाहाकृतो धिग्धिगिति भणनपूर्वकं[4] च ओथुक्कितः—गाढं जुगुप्सितस्ताडितश्चासौ, ततस्तस्यैवंविधां विडम्बनां प्रापितस्य 'वेदः' मोहोदयोऽरण्यदव इव सद्यः शमं प्राप्तः ॥ ४११५ ॥ अथाविधिनिर्गमने दोषानाह—

**तत्थेव य पडिबंधो, पडिगमणादीणि जाणि ठाणाणि।**
**डिंडी य बंभचेरे, विधिणिग्गमणे पुणो वोच्छं ॥ ४११६ ॥**

येन सा अविधिनिर्गता धर्षिता तत्रैव 'प्रतिबन्धः' अनुरागो भवेत्। तदनुरक्ता च सती प्रतिगमनादीनि यानि स्थानानि करोति तन्निष्पन्नं प्रवर्त्तिन्याः प्रायश्चित्तम्। ऋतुसमयगृहीतायाश्च कस्याश्चिद् डिण्डिमबन्धो भवेत्, ततश्च महती प्रवचनापभ्राजना। ब्रह्मचर्यविराधना च

---

१ ◁ ▷ एतदन्तर्गतः पाठः भा० कां० एव वर्त्तते ॥ २ °णियंस° ताभा० ॥ ३ ताभा० विनाऽन्यत्र— त्ति उत्थुक्कि° मो० त० । त्ति ओच्छुक्कि° भा० डे० । त्ति उच्छुक्कि° ताटी० कां० । त्ति तो त्थुक्कि° बृहद्भाष्ये ॥ ४ °कं च थुक्कि° भा० विना ॥

परिस्फुटैव तस्याः सञ्जायते । विधिनिर्गमने च 'पुनः' भूयोऽपि गुणान् वक्ष्ये ॥ ४११६ ॥

एतच्च सान्यासिकीकृत्य प्रथममविधिनिर्गमने दोषशेषमाह—

**न केवलं जा उ विहम्मिआ सती, सवच्चतामेति मधूमुहे जणे ।**
**उवेति अन्ना वि उ वच्चपत्ततं, अपाउता जा अणियंसिया य ॥ ४११७ ॥**

न केवलं यैव 'सती' साध्वी 'विधर्मिता' शीलधर्मात् च्याविता सैव 'मधुमुखे जने' दुर्जनलोके 'सवाच्यतां' सकलङ्कतामुपगच्छति, 'अन्याऽपि' एतद्व्यतिरिक्ताऽपि 'वाच्यपात्रतां' वचनीययोग्यतामुपैति या 'अप्रावृता' औपकक्षिक्याद्युपरितनोपकरणरहिता 'अनिवसिता च' अवग्रहानन्तकाद्यधस्तनोपकरणवर्जिता भवति ॥ ४११७ ॥ किञ्च—

**ण भूसणं भूसयते सरीरं, विभूसणं सील हिरी य इत्थिए ।**
**गिरा हि संखारजुया वि संसती, अपेसला होइ असाहुवादिणी ॥ ४११८ ॥**

'भूषणं' हारादिकं पिनह्यमानं शरीरं न भूषयति, किन्तु 'शीलं' ब्रह्मचर्यं 'ह्रीश्च' लज्जा एतदेव द्वयं स्त्रिया विभूषणम् । अमुमेवार्थं प्रतिवस्तूपमया द्रढयति—'गीः' वाणी सा संस्कारयुक्ताऽपि 'संसदि' सभायां यदि 'असाधुवादिनी' जकार-मकाराद्यसभ्यप्रलापिनी तदा 'अपेशला' शिष्टजनजुगुप्सनीयतया न शोभना भवति; एवमियमपि स्त्री हारादिविभूषिताऽपि यदि शील-लज्जाविकला तदा शिष्टजनस्य जुगुप्सनीया भवति, अतः स्त्रियाः शीलं लज्जा च विभूषणम् । एतच्च शील-लज्जाद्वयं संयत्या विधिप्रावरणे भवति ॥४११८॥ अतस्तदेवाभिधित्सुराह—

**पट्टऽड्ढोरुय चलणी, अंतो तह बाहिरा णियंसणिया ।**
**संघाडि खुज्जकरणी, अणागने चेव सतिकाले ॥ ४११९ ॥**

पट्टकोऽर्धोरुकश्चलनिका अन्तर्निवसनी बहिर्निवसनी सङ्घाटिका कुब्जकरणी उपलक्षणत्वादवग्रहानन्तकं कञ्चुक औपकक्षिकी वैकक्षिकी चानागत एव 'सत्काले' भिक्षासमये दृढतरमेतान्युपकरणानि साध्व्या प्रावरणीयानि ॥ ४११९ ॥ इदमेव विभावयिषुराह—

**उग्गहणमादिएहिं, अज्जाओ अतुरियाउ भिक्खस्स ।**
**जोहो व्व लंखिया वा, अगिण्हणे गुरुग आणादी ॥ ४१२० ॥**

अवग्रहानन्तकादिभिरुपकरणैः 'आर्याः' संयत्यो भिक्षाऽत्वरिता आत्मानं भावयन्ति । क इव ? इत्याह—योध इव लङ्खिकेव वा । यथा योधः सङ्ग्रामशिरसि प्रवेष्टुमनाः सन्नाहं पिनह्यति, यथा च लङ्खिका रङ्गभुवं प्रविशन्ती पूर्वं चलनिकादिना गुडापिनद्धमिवात्मानं करोति, एवमार्याऽप्यवग्रहानन्तकादिसुप्रावृता निर्गच्छति । अथैतान्युपकरणानि न गृह्णाति ततश्चतुर्गुरुका आज्ञादयश्च दोषाः ॥ ४१२० ॥ अथ विशेषज्ञापनार्थमिदमाह—

**जोहो मुरुंडजड्डो, णाडइणी लंखिया कतलिखंभो ।**
**अज्जाभिक्खग्गहणे, आहरणा होंति णायव्वा ॥ ४१२१ ॥**

आर्याया भिक्षाग्रहणे यद् उपकरणप्रावरणं तत्रैतान्युदाहरणानि ज्ञातव्यानि । तद्यथा—'योधः' प्रतीतः १ 'मुरुण्डजड्डो' मुरुण्डस्य राज्ञो हस्ती २ 'नाटकिनी' नर्तकी ३ 'लङ्खिका'

१ °क्षाया [अ]त्व° भा० ॥

वंशाग्रनर्त्तकी ४ 'कदलीस्तम्भः' प्रतीतः ५ ॥ ४१२१ ॥ तत्र योधदृष्टान्तमाह—

**वणिओ पराजितो मारिओ व संखे अवम्मितो जोहो ।**
**सावरणे पडिपक्खो, भयं च कुरुते विवक्खस्स ॥ ४१२२ ॥**

योधः 'सङ्ख्ये' सङ्ग्रामे अवर्मितः प्रविशन् व्रणितः पराजितो मारितो वा जायते । 'व्रणितो नाम' परैः प्रहारजर्जरीकृतः, 'पराजितः' पराभग्नः, 'मारितः' पञ्चत्वं प्रापितः । यस्तु सावरण-स्तस्य प्रतिपक्षो वक्तव्यः । किमुक्तं भवति ?—यः सन्नाहं पिनह्य रणशिरसि प्रविशति स न प्रहारैर्जर्जरीभवति, न वा पराजीयते, न वा मरणमासादयति, प्रत्युत विपक्षस्य भयं कुरुते; एवमार्याऽपि यथोक्तोपकरणप्रावरणमन्तरेण भिक्षां प्रविष्टा तरुणैरुपद्रूयते, सुप्रावृता तु सर्वथैव तेषामगम्या भवति ॥ ४१२२ ॥

उक्तो योधदृष्टान्तः । सम्प्रति मुरुण्डजङ्घदृष्टान्तं गाथाचतुष्टयेनाह—

**विहवससा उ मुरुंडं, आपुच्छति पव्वयामऽहं कत्थ ।**
**पासंडे य परिक्खति, वेसग्गहणेण सो राया ॥ ४१२३ ॥**
**डोंबेहिं च धरिसणा, माउग्गामस्स होइ कुसुमपुरे ।**
**उब्भावणा पवयणे, णिवारणा पावकम्माणं ॥ ४१२४ ॥**
**उज्झसु चीरे सा यावि णिवपहे मुयति जे जहाबाहिं ।**
**उच्छूरिया णडी विव, दीसति कुप्पासगादीहिं ॥ ४१२५ ॥**
**धिद्धिक्कतो य हाहक्कतो य लोएण तज्जितो मेंठो ।**
**ओलोयणट्ठितेण य, णिवारितो रायसीहेण ॥ ४१२६ ॥**

**कुसुमपुरे** नगरे **मुरुण्डो** राया । तस्स भगिणी विहवा । सा अन्नया रायं पुच्छइ—अहं पव्वइउकामा, तो आइसह कत्थ पव्वयामि ? त्ति । तओ राया पासंडीणं वेसग्गहणेण परिक्खं करेइ । हत्थिमिंठा संदिट्ठा, जहा—पासंडिमाउग्गामेसु हत्थिं सन्निज्जाह, भणिज्जाह य—पोत्तं मुयाहि, अन्नहा इमिणा हत्थिणा उवद्दवेस्सामि त्ति, एक्कम्मि य मुक्के मा ठाहिह, ताव गहग्गहावेह जाव सव्वे मुक्का । तओ एगेण मिंठेण चरियाए रायपहे तहा कयं जाव नग्गीभूया । रन्ना सव्वं दिट्ठं । नवरं अज्जा विहीए पविट्ठा । रायपहोत्तिण्णाए हत्थी सन्निओ—मुयसु पुत्तं ति । तीए पढमं मुहपोत्तिया मुक्का, ततो निसिज्जा, एवं जाणि जाणि बाहिरिल्लाणि चीवराणि ताणि ताणि पढमं मुयइ, जाव बहूहिं वि मुक्केहिं नडी विव कंचुकादीहिं सुप्पाउया दीसइ ताहे लोगेण अक्कंदो कओ—हा पाव! किमेवं महासइतवस्सिणिं अभिद्दवेसि ? त्ति । रन्ना वि ओलोयणट्ठिएण वारिओ, चिंतियं च—एस धम्मो सव्वन्नुदिट्ठो । अन्नेण य बहुजणेण कया सासणस्स पसंसा ॥

अथाक्षरार्थः—विधवा स्वसा मुरुण्डं राजानमापृच्छति—कुत्राहं प्रव्रजामि ? इति । ततः स राजा वेषग्रहणेन पाषण्डिनः परीक्षते । परीक्षार्थमेव च 'डोम्बैः' हस्तिमिण्ठैः **कुसुमपुरे** 'मातृग्रामस्य' पाषण्डिस्त्रीजनस्य धर्षणा भवति, वर्त्तमाननिर्देशस्तत्कालापेक्षया । तदानीं च प्रवचनस्य 'उद्भावना' प्रभावना समजनि । ये च पापकर्माणः संयतीरभिद्रवितुमिच्छन्ति तेषां निवारणा

जाता, 'न शक्यन्ते अमूरेवंविधेन वेषेण छलयितुम्' इति कृत्वा । कथं पुनरेतत् संवृत्तम्? इत्याह—"उज्झसु चीरे" इत्यादि, विधिनिर्गता संयती मिण्ठेनाभिहिता—'उज्झ' परित्यज चीवराणि । साऽप्येवमभिहिता 'नृपपथे' राजमार्गे यानि यथाबहिरुपकरणानि तानि तथा मुञ्चति । एवं बहुषु वस्त्रेषु मुक्तेष्वपि यदा सा नटीवत् 'कूर्पासकादिभिः' कञ्चुकादिभिर्वस्त्रैः 'उच्छूरिता' सुप्रावृता दृश्यते तदा लोकेन स मिण्ठो धिग्धिक्कृतश्च हाहाकृतश्च तथा 'तर्जितः' गाढं निर्भर्त्सितः । ततश्च 'अवलोकनस्थितेन' गवाक्षोपविष्टेन राजसिंहेनासौ निवारितः । 'सर्वज्ञदृष्टश्चायं धर्मः' इति कृत्वा साधूनां समीपे भगिनी प्रव्रज्याग्रहणार्थं विसर्जितेति ॥ ४१२३ ॥ ४१२४ ॥ ४१२५ ॥ ४१२६ ॥

उक्तो मुरुण्डजङ्घदृष्टान्तः । अथ नर्त्तकी-लङ्खिकादृष्टान्तद्वयमाह—

**पाए वि उक्खिवंती, न लज्जती णड्डिया सुणेवत्था ।**
**उच्छूरिया व रंगम्मि लंखिया उप्पयंती वि ॥ ४१२७ ॥**

यथा नर्त्तकी सुनेपथ्या सती पादावप्युत्क्षिपन्ती न लज्जते, लङ्खिका वा रङ्गभूमौ 'उत्पतन्त्यपि' करणशतान्यपि कुर्वती यथा 'उच्छूरिता' सुप्रावृता सती न लज्जते, एवं संयत्यपि सुप्रावृता न लज्जत इत्युपनयः ॥ ४१२७ ॥ अथ कदलीस्तम्भदृष्टान्तमाह—

**कयलीखंभो व जहा, उव्वेल्लेउं सुदुक्करं होति ।**
**इय अज्जाउवसग्गे, सीलस्स विराहणा दुक्खं ॥ ४१२८ ॥**

कदलीस्तम्भो वा यथा पटलबहलत्वाद् 'उद्वेल्लयितुम्' उद्वेष्टयितुं सुदुष्करो भवति, एवमार्यिकाऽपि बहूपकरणप्रावृता नोद्वेष्टयितुं शक्या । "इय" एवं योधादिभिर्दृष्टान्तैर्विधिनिर्गताया आर्यायाः केनचिदुपसर्गे क्रियमाणेऽपि शीलस्य विराधना 'दुःखं' दुष्करा मन्तव्या ॥ ४१२८ ॥

किञ्च—

**एका मुक्का एका य धरिसिया णिवेदण जतणाय होति कायव्वा ।**
**बाहाड न जहितव्वा, सेज्जतरादी सयं वा वि ॥ ४१२९ ॥**

'एका' काचिद् विधिनिर्गता गृहीताऽपि मुक्ता, 'एका च' अपरा धर्षिता, ततः 'यतनया' यथा शेषसंयत-संयतीजनो न जानाति तथा गुरूणां निवेदना कर्त्तव्या । अथ सा बाहाडिता ततो न परित्यक्तव्या किन्तु शय्यातरादिना स्वयं वा तस्या वर्त्तापनं विधेयमिति' निर्युक्तिगाथासमासार्थः ॥ ४१२९ ॥ अथैनामेव विवृणोति—

**विहिणिग्गता उ एका, गोयरियाएँ गहिता गिहत्थेहिं ।**
**संवरियपभावेण य, फिडिया अविराहियचरित्ता ॥ ४१३० ॥**

'एका' काचिद् विधिनिर्गता गोचरचर्यां पर्यटन्ती गृहस्थैर्गृहीता, परं 'संवृतप्रभावेन' सुप्रावरणमाहात्म्येन सा अविराधितचारित्रा स्फिटिता ॥ ४१३० ॥

**लोएण वारितो वा, दहूण सयं व तं सुणेवत्थं ।**
**सुदिट्ठं तुवसंतो, सविम्हओ खामयति पच्छा ॥ ४१३१ ॥**

---

१ °ति लङ्खगाथा° भा० ॥

येन सा धर्षितुमारब्धा स लोकेन वा धिक्कारपुरस्सरं वारितः, स्वयं वा 'तां' संयतीं 'सुनेपथ्यां' सुप्रावृतां दृष्ट्वा 'सुदृष्टममीषां धर्मरहस्यम्' इति कृत्वोपशान्तः सन् सविस्मयः पश्चात् तां संयतीं क्षामयति ॥ ४१३१ ॥

**णाभोग पमादेण व, असती पट्टस्स णिग्गया गहणे ।**
**विहिणिग्गतमाहच्च व, बाहाडितधाडणे गुरुगा ॥ ४१३२ ॥**

सा कदाचिद् 'अनाभोगेन' अत्यन्तविस्मृत्या 'प्रमादेन वा' विकथा-निद्रादिप्रमत्ततया अवग्रहपट्टस्य वा अभावे एवमेव भिक्षार्थं निर्गता, एवम् ◁ [1]विधिनिर्गता केनचिद् धर्षिता, ▷ विधिनिर्गता वा "आहच्च" कदाचित् प्रच्छन्नेऽवकाशे गृहीता ततो गुरूणां यतनया निवेदनीयम् । अथ सा कदाचिद् बाहाडिता ततो यस्तां धाटयति-निष्काशयतीत्यर्थः तस्य चतुर्गुरुकाः ॥ ४१३२ ॥ कुतः ? इत्याह—

**[3]निजूढ पदुट्ठा सा, [4]भणेइ एतेहिँ चेव कतमेतं ।**
**राय-गिहीहि सयं वा, तं च पसासंति मा बितियं ॥ ४१३३ ॥**

सा 'निर्यूढा' निष्काशिता सती साधूनामुपरि प्रद्वेषं यायात्, प्रद्विष्टा च भणति—एतैरेव श्रमणैरित्थं ममैतत् कृतमिति, ततो न परित्यक्तव्या । येन च धर्षिता तमनवस्थाप्रसङ्गवारणार्थं राज्ञा प्रशासयन्ति, गृहिभिर्वा शिक्षयन्ति । यदि प्रभवस्ततः स्वयमपि शासन्ते, 'मा द्वितीयं वारमित्थं प्रवर्त्ततामयम्' इति कृत्वा ॥ ४१३३ ॥ अथ तस्याः सारणविधिमाह—

**दुविहा णायमणाया, अगीयअण्णाय सण्णिमादीसु ।**
**सब्भावे सिं कहिते, सारिंती जा थणं पियती ॥ ४१३४ ॥**

या बाहाडिता सा द्विविधा—ज्ञाता अज्ञाता च, ज्ञातगर्भा अज्ञातगर्भा चेत्यर्थः । तत्र या अज्ञाता सा अगीतार्था यथा न जानन्ति तथा संज्ञी-श्रावकस्तदादिकुलेषु स्थाप्यते, तेषां संज्ञि-प्रभृतीनां सद्भावः प्रथममेव कथयितव्यः, कथिते च सद्भावे ते माता-पितृसमानतया तां तावत् 'सारयन्ति' प्राशुकेन प्रत्यवतारेण पालयन्ति यावत् तदीयं कल्पस्थभाण्डं स्तन्यं पिबति, स्तन्य-पानान्न निवर्त्तेत इत्यर्थः ॥ ४१३४ ॥

**जत्थ उ जणेण णातं, उवस्सए चेव तत्थ ण य भिक्खं ।**
**किं सक्का छड्डेउं, बेंति अगीते असति सड्ढे ॥ ४१३५ ॥**

यत्र तु जनेन ज्ञातम् यथा—एषा बाहाडिता, तत्रोपाश्रय एव स्थाप्यते, न श्रावकादिकु-लेषु । न च सा भिक्षां हिण्डापयितव्या, किन्तु शेषसाध्वीभिः साधुभिर्वा तस्याः प्रायोग्यं भक्त-पानमानीय दातव्यम् । यद्यगीतार्था भणन्ति—किमेवमीदृश्याः सङ्ग्रहः क्रियते ?; ततः सूरयो ब्रुवते—यदि नाम न सङ्गृह्यते ततः कथयत किं साम्प्रतमेषा शक्या परित्यक्तुम् ? । अथैवं प्रज्ञापिता अपि ते न प्रतिपद्यन्ते ततः श्राद्धान् प्रज्ञापयन्ति ॥ ४१३५ ॥ यथा—

**दुरतिक्कमं खु विधियं, अवि य अकामा तवस्सिणी गहिता ।**

---

१ 'दृष्टोऽमीषां धर्मः' इति भा० ॥ २ ◁ ▷ एतच्चिह्नान्तर्गतः पाठः भा० कां० एव वर्तते ॥ ३ निच्छूढ मो० ताटी० ॥ ४ भणिज्ज एते° ताभा० ॥

**को जाणति अण्णस्स वि, हवेज्ज तं सारवेमो णं ॥ ४१३६ ॥**

खुरवधारणे, 'दुरतिक्रममेव' प्रतिकर्तुमशक्यमेव, केनाप्यनार्येणेदमकार्यं विहितम् अतः किं क्रियते ?, अपि च 'अकामा' अनिच्छन्ती बलादेव तेन पापात्मना तपस्विनी गृहीता, ततः को जानाति अन्यस्या अप्येवंविधो वृत्तान्तः परवशतया भवेत्, तदेनां सम्प्रति 'सारयामः' परिपालयाम इत्यर्थः ॥ ४१३६ ॥

**मा य अवण्णं काहिह, किं ण सुतं केसि-सच्चईणं भे ।**
**जम्मं ण य वयभंगो, संजातो तासि अज्जाणं ॥ ४१३७ ॥**

'हुं हुं विध्वस्तशीलेयम्' इत्येवमस्याः 'अवर्णम्' अवज्ञां वा मा कार्षुः, किं न श्रुतं भवद्भिः केशि-सत्यकिनोर्जन्म ? यथा—तौ आर्यिकाभ्यां पुरुषसंवासमन्तरेणापि कथञ्चिदुपात्तबीजपुद्गलाभ्यां प्रसुषुवाते, न च 'तयोः' आर्यिकयोर्व्रतभङ्गः सञ्जातः, विशुद्धपरिणामत्वात् । अनयोः कथानके यथाक्रमं पञ्चकल्पा-ऽऽवश्यकटीकाभ्यामवसातव्ये ॥ ४१३७ ॥

**अवि य हु इमेहिँ पंचहिँ, ठाणेहिँ थी असंवसंती वि ।**
**पुरिसेण लभति गब्भं, लोएण वि गाइयं एयं ॥ ४१३८ ॥**

अपि चेत्यभ्युच्चये, 'हुः' निश्चितमेतत्—एतैः पञ्चभिः स्थानैः स्त्री पुरुषेण सममसंवसन्त्यपि गर्भं लभते । न केवलमस्माभिरेवैतदुच्यते किन्तु लोकेनापि 'गीतं' संशब्दितमेतत् ॥ ४१३८ ॥

तान्येवोपदर्शयति—

**दुव्वियड-दुण्णिसण्णा, सयं परो वा सि पोग्गले छुभति ।**
**वत्थे वा संसट्ठे, दगआयमणेण वा पविसे ॥ ४१३९ ॥**

विवृता—अनावृता, सा चोत्तरीयापेक्षयाऽपि स्याद् अतो दुःशब्देन विशेष्यते—दुष्टु विवृता दुर्विवृता—परिधानवर्जितेत्यर्थः, एवं दुर्विवृता सती दुर्निषण्णा—दुष्टु—विरूपतयोपविष्टा दुर्विवृत-दुर्निषण्णा सा शुक्रपुद्गलान् कथञ्चित् पुरुषनिसृष्टान् आसन्नस्थान् सङ्गृह्णीयात् १, स्वयं वा पुत्रार्थितया शीलरक्षकतया च शुक्रपुद्गलान् योनावनुप्रवेशयेत् २, 'परो वा' श्वश्रूप्रभृतिकः पुत्रार्थमेव "से" तस्या योनौ प्रक्षिपेत् ३, वस्त्रं वा शुक्रपुद्गलसंसृष्टम् उपलक्षणत्वात् तथाविधमन्यदपि केशिमातुः केशवत् कण्डूयनार्थं रक्तनिरोधार्थं वा तया प्रयुक्तं तद् अनुप्रविशेत्, अनाभोगेन वा तथाविधं वस्त्रं परिहितं सद् योनिमनुप्रविशेत् ४, दकं—पानीयं तेन वा तस्या आचमन्त्याः पूर्वपतिता उदकमध्यवर्तिनः शुक्रपुद्गला अनुप्रविशेयुः ५ । एवं पुरुषसंवासमन्तरेणापि गर्भसम्भवे भवन्तो नास्या अवज्ञां कर्तुमर्हन्ति । एवं प्रज्ञाप्य तेषां श्राद्धानां गृहे तां स्थापयन्ति ॥ ४१३९ ॥ गता ज्ञातविषया यतना । अथाज्ञातविषयां तामाह—

**अविदिय जण गब्भम्मि य, सण्णीमादीसु तत्थ वऽण्णत्था ।**
**लाढेंति फासुएणं, लिंगविवेगो य जा पिबति ॥ ४१४० ॥**

जनेनाविदितो यो गर्भस्तत्र ये माता-पितृसमानाः संज्ञिनः आदिशब्दाद् यथाभद्रका वा तेषां गृहेषु तत्र वा अन्यत्र वा ग्रामे स्थापयन्ति । ते च संज्ञिप्रभृतयस्तां प्राशुकेन प्रत्यवतारेण 'लाढयन्ति' यापयन्तीत्यर्थः । यावच्चापत्यमाण्डं स्तन्यं पिबति तावत् तया लिङ्गविवेकः कर्तव्यः ॥ ४१४० ॥

**एएसिं असतीए, सण्णायग-णालबद्धकिढ फासुं ।**
**अण्णो वि जो परिणतो, स सिद्धवेसेतरीऽगारी ॥ ४१४१ ॥**

'एतेषां' संज्ञिप्रभृतीनामभावे ये तस्याः संयत्याः संज्ञातकास्तेषां गृहेषु स्थाप्यते । [ संज्ञातकगृहाणाम् ] अभावे यः संयतो नालबद्धः सोऽपि यदि किढः–वृद्धस्तदाऽसौ श्राद्धवेषं कार्यते, इतराऽपि गृहिलिङ्गं करोति, ततस्तौ प्राशुकाहारेण यापयन्तौ तिष्ठतः । नालबद्धस्याभावे अन्योऽपि यो वयसा परिणतः स सिद्धपुत्रवेषं कार्यते, इतरा अगारीवेषं करोति ॥ ४१४१ ॥

अत्रेयं प्रायश्चित्तमार्गणा—

**मूलं वा जाव थणा, छेदो छग्गुरुग जं चऽथालहुअं ।**
**बितियपदे असतीए, उवस्सए वा अहव जुण्णा ॥ ४१४२ ॥**

यदि तया प्रतिसेव्यमानया स्वादितं ततो मूलम् । वाशब्द उत्तरापेक्षया विकल्पार्थः । "जाव थण" त्ति पश्चाद् व्याख्यास्यते । गर्भमाहूतं दृष्ट्वा स्वादयति च्छेदः । अपत्यं जातं दृष्ट्वा 'सहायकं मे भविष्यति' इति स्वादयन्त्याः षड्गुरवः । यया तु न स्वादितं तस्याः परप्रत्ययनिमित्तं यत् किमपि यथालघु प्रायश्चित्तं दातुं युज्यते तद् दातव्यम् । "जाव थण" त्ति यावत् तस्या अपत्यं स्तन्यपानोपजीवि भवति तावत् तपोर्हं प्रायश्चित्तं न दातव्यम् । द्वितीयपदे अवग्रहानन्तकस्याभावे उपाश्रये वा तिष्ठन्ती अथवा 'जीर्णा' स्थविरा सा संयती अतोऽवग्रहानन्तकं न गृह्णात्यपि ॥ ४१४२ ॥ अथास्या एव पूर्वार्धं व्याख्याति—

**सेविज्जंतें अणुमए, मूलं छेओ तु डिंडिमं दिस्स ।**
**होहिति सहातगं मे, जातं दट्ठूण छग्गुरुगा ॥ ४१४३ ॥**

सेव्यमानया यद्यनुमतं ततो मूलम् । अथ 'डिण्डिमं' गर्भं दृष्ट्वा हर्षमुद्वहति छेदः । पुत्रभाण्डं दृष्ट्वा 'सहायकं मे भविष्यति' इत्यनुमन्यते षड्गुरवः ॥ ४१४३ ॥

**तेण परं चउगुरुगा, छम्मासा जा ण ताव पूरिंति ।**
**जा तु तवारिह सोही, अणवत्थणिते ण तं देंती ॥ ४१४४ ॥**

'ततः परं' जन्मानन्तरं यावत् षण्मासा न पूर्यन्ते तावद् यत्र यत्र स्वादयति तत्र तत्र चतुर्गुरवः । या च तस्याः तपोर्हा शोधिरुक्ता ताम् 'अनपस्तनिते' स्तन्यपानादनुपरते अपत्यभाण्डे न ददति, मा स्तन्यं न भविष्यतीति कृत्वा ॥ ४१४४ ॥

**मेहुण्णे गब्भे आहिते य सातिज्जियं जति ण तीए ।**
**परपच्चया लहुसगं, तहा वि से दिंति पच्छित्तं ॥ ४१४५ ॥**

मैथुने प्रतिसेव्यमाने गर्भे च आहूते यद्यपि तया न स्वादितं तथापि 'परप्रत्ययार्थं' मा भूदगीतार्थानामप्रत्यय इत्यर्थः, यथालघुकं प्रायश्चित्तं तस्याः सूरयः प्रयच्छन्ति ॥ ४१४५ ॥

अथ यस्तस्याः खिंसां करोति तस्य प्रायश्चित्तमाह—

**खिंसाएँ होंति गुरुगा, लज्जा णिच्छुकतो य गमणादी ।**
**दप्पकते वाऽऽउट्टे, जति खिंसति तत्थ वि तहेव ॥ ४१४६ ॥**

---

१ जाव ता ण पू° ताभा० ॥ २ यावत् तस्याः ताटी० भा० कां० विना ॥

यस्तस्याः 'खिंसां' 'विध्वस्तशीलत्वाद् मलिना इयम्' इत्येवं करोति तस्य संयतस्य संयत्या वा चतुर्गुरुकाः प्रायश्चित्तम्। सा च खिंसिता सती लज्जया प्रतिगमनादीनि कुर्यात्, निच्छक्का वा–निर्लज्जा वा भवेत्, तत एव सर्वजनप्रकटमात्मानं प्रतिसेवयेत्। अथ दर्पतस्तया मैथुनं प्रतिसेवितं परं पश्चाद् आवृत्ता–आलोचना-प्रायश्चित्तप्रतिपत्त्यादिना प्रतिनिवृत्ता तामपि यः खिंसति तस्यापि तथैव चतुर्गुरु ॥ ४१४६ ॥ किं कारणम्? इति चेद् अत आह—

**उम्मग्गेण वि गंतुं, ण होति किं सोतवाहिणी सलिला।**
**कालेण फुंफुगा वि य, विलीयते हसहसेऊणं ॥ ४१४७ ॥**

उन्मार्गेणापि गत्वा 'सलिला' नदी पश्चात् किं 'श्रोतोवाहिनी' मार्गगामिनी न भवति? भवत्येवेति भावः। 'फुम्फुका' करीषाग्निः [1]सोऽपि च "हसहसेऊणं" ति जाज्वलित्वा भृशमुद्दीप्तो भूत्वेत्यर्थः कालेन गच्छता 'विलीयते' विलयं याति। उपनययोजना सुगमा ॥ ४१४७ ॥

**॥ अवग्रहानन्तका-ऽवग्रहपट्टकप्रकृतं समाप्तम् ॥**

---

## नि श्रा प्र कृ त म्

सूत्रम्—

**निग्गंथीए अ गाहावइकुलं पिंडवायपडियाए अणुप्पविट्ठाए चेलट्ठे समुप्पज्जेज्जा, नो से कप्पइ अप्पणो नीसाए [2]चेलं पडिग्गाहित्तए, कप्पइ से पवत्तिणिनीसाए [3]चेलं पडिग्गाहित्तए।**

**नो य से तत्थ पवत्तिणी सामाणा सिया जे से तत्थ सामाणे आयरिए वा उवज्झाए वा पवित्ती वा थेरे वा गणी वा गणधरे वा गणावच्छेइए वा जं चऽन्नं कट्टु पुरतो विहरइ कप्पइ से तन्नीसाए [4]चेलं पडिग्गाहित्तए १२ ॥**

अथास्य सूत्रस्य कः सम्बन्धः? इत्याह—

**नियमा सचेल इत्थी, चालिज्जति संजमा विणा तेणं।**
**उग्गह[5]मादीचेलाण गेण्हणे तेण जोगोऽयं ॥ ४१४८ ॥**

---

१ साऽपि भा० कां० ॥ २-३-४ सर्वेष्वपि टीकापुस्तकादर्शेषु चेलाइं पाठ उपलभ्यते, किन्तु टीकाकृता चूर्णिकृता विशेषचूर्णिकृता च चेलं इति पाठ आदृत इत्यस्माभिरसावेव मूले आदृतः। तामू० प्रत्योः पुनः चेलट्ठं पाठः प्राप्यते ॥ ५ °हणमादिचे° ताभा० ॥

'नियमाद्' अवश्यन्तया 'स्त्री' निर्ग्रन्थी सचेला भवति । यतः 'तेन' चेलेन विना सा संयमात् चाल्यते इत्यनन्तरसूत्रे उक्तम् । तेन कारणेनावग्रहानन्तकादीनां चेलानां ग्रहणे विधिरभिधीयते । अयं 'योगः' प्रकृतसूत्रस्य सम्बन्धः ॥ ४१४८ ॥ अथवा—

**चेलेहि विणा दोसं, णाउं मा ताणि अप्पणा गेण्हे ।**
**तत्थ वि ते चिय दोसा, तव्वारणकारणा सुत्तं ॥ ४१४९ ॥**

चेलैर्विना भिक्षामटन्त्याः संयत्या महान् दोषो भवतीति ज्ञात्वा मा 'तानि' चेलान्यात्मना गृह्णीयात् । कुतः ? इत्याह—'तत्रापि' आत्मना चेलग्रहणेऽपि त एव दोषा भवन्ति ये पूर्वं चेलस्याग्रहणे प्रोक्ताः । अतः 'तद्वारणकारणात्' स्वयङ्ग्रहणप्रतिषेधार्थमिदं सूत्रमारभ्यते ॥ ४१४९ ॥

इदमेव सोपपत्तिकमाह—

**सयगहणं पडिसेहति, चेलग्गहणं ण सव्वसो तासिं ।**
**संडासतिरो वण्ही, ण डहति कुरुए य किच्चाइं ॥ ४१५० ॥**

स्वयङ्ग्रहणमत्र सूत्रे सूत्रकृत् प्रतिषेधयति, न पुनः सर्वथा 'तासां' संयतीनां चेलग्रहणम् । यतः सन्दंशकेन तिरोहितो वह्निर्गृह्यमाणो न दहति 'कृत्यानि च' धान्यपाकादीनि कार्याणि कुरुते; एवं संयतीनामपि साधुभिस्तिरोहितं चेलग्रहणं न दुष्यति, कार्यं च संयमपालनात्मकं करोति ◁ अत इदमारभ्यते ▷ ॥ ४१५० ॥

अनेन सम्बन्धेनायातस्यास्य व्याख्या—निर्ग्रन्थ्या गृहपतिकुलं पिण्डपातप्रतिज्ञया अनुप्रविष्टायाश्चेलेनार्थः—◁ प्रयोजनं चेलार्थः ▷ स समुत्पद्येत । नो "से" तस्याः कल्पते आत्मनो निश्रया चेलं प्रतिग्रहीतुम्, किन्तु कल्पते "से" तस्याः प्रवर्तिनीनिश्रया चेलं प्रतिग्रहीतुम् । अथ न तत्र प्रवर्तिनी "सामाणा" सन्निहिता ततो यस्तत्राचार्यो वा उपाध्यायो वा प्रवर्त्ती वा स्थविरो वा गणी वा गणधरो वा गणावच्छेदको वा सन्निहितो भवेत् । 'गणी' गणाधिपतिराचार्यः, 'गणधरः' संयतीपरिवर्तकः, शेषाः सर्वेऽपि प्रतीताः । एतेषां निश्रया यं वा 'अन्यं' गीतार्थं साधुं पुरतः कृत्वा विहरति तन्निश्रया कल्पते "से" तस्याश्चेलं प्रतिग्रहीतुमिति सूत्रसङ्क्षेपार्थः ॥ अथ विस्तरार्थं भाष्यकारो विभणिषुराह—

**चेलट्ठे पुव्व भणिते, पडिसेहो कारणे जहा गहणं ।**
**णवरं पुण णाणत्तं, णीसागहणं ण उ अणीसा ॥ ४१५१ ॥**

चेलार्थः 'पूर्वं' प्रथमोद्देशके "णिग्गंथिं च णं केइ वत्थेण वा पाएण वा निमंतिज्जा" (सू० ३९) इत्यादिसूत्रे यथा भणितः, यथा च तत्र संयतीनां स्वयं वस्त्रग्रहणप्रतिषेधः, यथा च कारणे ग्रहणमुक्तं तथैवात्रापि वक्तव्यम् । 'नवरं' केवलं पुनरत्र 'नानात्वं' विशेषो वस्त्रग्रहणं ताभिर्निश्रया कर्तव्यम् न पुनरनिश्रया । निश्रा नाम—संज्ञातकादिना वस्त्रं दीयमानं प्रवर्तिन्या निवेदयति, प्रवर्तिनी गणधरस्य निवेदयति, ततो गणधरः स्वयमागत्य परीक्षाशुद्धं कृत्वा गृह्णाति । अथ नास्ति तत्र प्रवर्तिनी ततस्तद् वस्त्रं वर्णेन रूपेण चिह्नेन चोपलक्ष्य गणधरस्य

१-२ ◁ ▷ एतदन्तर्गतः पाठः भा० नास्ति ॥ ३ °रः कु° भा० विना ॥ ४ "णिज्जुत्ती वित्थारेति— चेलट्ठे० गाहा ॥" इति विशेषचूर्णौ ॥

कथयति, स चागत्य स्वयं गृह्णाति । एतन्निश्राग्रहणमुच्यते ॥ ४१५१ ॥

**आयरिओ गणिणीए, पवत्तिणी भिक्खुणीण ण कधेति ।**
**गुरुगा लहुगा लहुगो, तासिं अप्पडिसुणंतीणं ॥ ४१५२ ॥**

आचार्य एतत् सूत्रं गणिन्या न कथयति चत्वारो गुरवः । प्रवर्तिनी भिक्षुणीनां न कथयति चत्वारो लघवः । 'तासां' भिक्षुणीनामप्रतिशृण्वतीनां मासलघु ॥ ४१५२ ॥

अथ स्वयं वस्त्रग्रहणे दोषानाह—

**मिच्छत्ते संकादी, विराहणा लोभे आभियोगे य ।**
**तुच्छा ण सहति गारव, भंडण अट्ठाणठवणं च ॥ ४१५३ ॥**

पुरुषेण संयत्याः वस्त्रं दीयमानं दृष्ट्वा अभिनवधर्माणो मिथ्यात्वं गच्छेयुः 'दुर्दृष्टधर्माणोऽमी' इति । शङ्कादयश्च दोषा भवन्ति । 'विराधना च' संयमा-ऽऽत्मविषया । "लोभे" त्ति स्तोकेनापि वस्त्रादिप्रदानेन स्त्री प्रलोभ्यते । "आभियोगे" त्ति आभियोगिकवस्त्रप्रदानेन कश्चित् कार्मणं कुर्यात् । स्त्री च प्रायेण तुच्छा भवति, तुच्छत्वेन च 'गौरवं' लब्धिमाहात्म्यं न सहते, ततश्च 'भण्डनं' कलहो अस्थानस्थापनं च भवतीति सङ्ग्रहगाथासमासार्थः ॥४१५३॥

अथैनामेव विवरीषुराह—

**इत्थी वि ताव देंती, संकिज्जइ किं णु केणति पयुत्ता ।**
**किं पुण पुरिसो देंतो, परिजुण्णाइं पि जुण्णाए ॥ ४१५४ ॥**

'स्त्री' अविरतिका साऽपि वस्त्रं संयत्याः प्रयच्छन्ती शङ्क्यते—किं केनचित् कामुकेन प्रयुक्ता सती प्रयच्छति ? उत स्वयमेव धर्मार्थम् ? इति; किं पुनः पुरुषः परिजीर्णान्यपि वस्त्राणि जीर्णाया अपि आर्यिकायाः प्रयच्छन् ? स सुतरां शङ्क्यते इति भावः । तत्र शङ्कायां चतुर्गुरु । चतुर्थार्थमेवेति निःशङ्किते मूलम् । एवं मिथ्यात्वं शङ्कादयश्च दोषा भवेयुः । विराधना च संयमा-ऽऽत्मविषया अभ्यूह्य वक्तव्या ॥४१५४॥ लोभद्वारमभियोगद्वारं चाह—

**नामिज्जइ थोवेणं, जच्चसुवण्णं व सारणी वा वि ।**
**अभियोगियवत्थेण व, कड्डिज्जइ पट्टए नातं ॥ ४१५५ ॥**

यथा जात्यं सुवर्णं 'सारणी वा' कुल्या स्तोकेनापि प्रयत्नेन नाम्यते तथा संयत्यपि स्तोकेनापि वस्त्रादिप्रदानेन नाम्यते । यद्वा तद् वस्त्रं केनापि विद्या-मन्त्रादिबलेनाभियोगिकं—वशीकरणकर्मक्षमं कृतमस्ति ततस्तेन सा 'कृष्यते' येन कार्मणं कृतं तदभिमुखं नीयते । पट्टकेन चात्र 'ज्ञातं' दृष्टान्तो भवति, स च यथा प्रथमोद्देशके ( गाथा २८१९ ) ॥ ४१५५ ॥

अथ गौरवादिद्वारत्रयं युगपदाह—

**वत्थेहि वच्चमाणी, दाएंती वा वि उयध वत्थे मे ।**
**मच्छरियाओ बेंती, धिरत्थु वत्थाण तो तुज्झं ॥ ४१५६ ॥**
**हिंडामो सच्छंदा, णेव सयं गेण्हिमो य पवयामो ।**
**ण य जं जणो वियाणति, कम्मं जाणामो तं काउं ॥ ४१५७ ॥**

काचिदार्यिका तुच्छतया गौरवमसहिष्णुर्वस्त्रेभ्यो व्रजन्ती आत्मानं ख्यापयति—अहमी-

वस्त्राणि ईदृशानि वस्त्राणि गृहीत्वा समागमिष्यामि; यद्वा स्वयमानीतानि वस्त्राणि दर्शयन्ती ब्रूयात्—"पश्यह" पश्यत मदीयानि वस्त्राणि इति । तत इतराः संयत्यो मत्सरिता ब्रुवते—धिगस्तु भवदीयानि वस्त्राणि भवतीं च यदेवमात्मानं विकत्थयसि; अपि च यथा यूयं स्वच्छन्दाः पर्यटथ न तथा वयं हिण्डामः, नैव च स्वयं गृह्णीमः, न वाऽऽत्मानं 'प्रवदामः' प्रकर्षेण श्लाघामहे, न च यत् कुण्टलादिकं कर्म कर्तुं युष्मादृशो जनो जानाति तद् वयं कर्तुं जानीमः ॥ ४१५६ ॥ ४१५७ ॥

जम्हा य एवमादी, दोसा तासिं तु णिस्समाणीणं ।
तम्हा तासि णिसिद्धं, वत्थग्गहणं अणीसाए ॥ ४१५८ ॥

यस्मादेवमादयो दोषास्तासां गृह्णतीनां भवन्ति तस्मात् तासामनिश्रया वस्त्रग्रहणं निषिद्धम् ॥ ४१५८ ॥ परः प्राह—

सुत्तं णिरत्थगं खलु, कारणियं तं च कारणमिणं तु ।
असती पाउग्गे वा, मणक्खो वा इमा जतणा ॥ ४१५९ ॥

यदि संयतीनामनिश्रया वस्त्रग्रहणं न कल्पते ततः सूत्रं निरर्थकं प्राप्नोति । सूरिराह—कारणिकं सूत्रम् । तच्च कारणमिदम्—न सन्ति संयतीनां वस्त्राणि, सन्ति वा परं न प्रायोग्याणि, "मणक्खो वा" महद् दौर्मनस्यं संज्ञातकादीनां संयतीभिर्वस्त्रेऽगृह्यमाणे भवति तत्रेयं यतना ॥ ४१५९ ॥ तामेवाभिधित्सुराह—

तरुणीण य पव्वज्जा, णियएहिं णिमंतणा य वत्थेहिं ।
पडिसेहण णिब्बंधे, लक्खण गुरुणो णिवेदेज्जा ॥ ४१६० ॥

कस्याप्याचार्यस्य पार्श्वे महर्द्धिकानां बहुजनपाक्षिकाणां तरुणीनां प्रव्रज्या समजनि, ताश्च कियन्तमपि कालमन्यस्मिन् देशे विहृत्य सूरिभिः सार्धं तत्रैव समायाताः, ततः 'निजकैः' सज्ञातकैस्तासां वस्त्रैर्निमन्त्रणा कृता, ततः 'न कल्पते अस्माकं ◁ वस्त्रग्रहणं कर्तुम्' ▷ इति प्रतिषेधः कर्तव्यः । अथ गाढतरं निर्बन्धं कुर्वन्ति तत इदं वक्तव्यम्—अस्माकं गुरव एव वस्त्रस्य लक्षणं जानते ततो गुरूणां निवेदयाम इति, अनुज्ञाते तेषां निवेदयेयुः ॥ ४१६० ॥

इदमेव व्याख्याति—

थेरा परिच्छंति कधेसु तेसिं, णाहिंति ते दिस्स अजोग्ग जोग्गं ।
पिच्छामु ता तस्स पमाण-वण्णे, तो णं कधेस्सामो तहा गुरूणं ॥ ४१६१ ॥
सागारऽकडे लहुगो, गुरुगो पुण होति णिच्छऽकरणम्मि ।
गणिणीअसिट्ठे लहुगा, गुरुगा पुण आयणीसाए ॥ ४१६२ ॥

'स्थविराः' आचार्या अस्मत्प्रायोग्यं वस्त्रं परीक्षन्ते अतः कथयामस्तेषाम्, ज्ञास्यन्ति ते दृष्ट्वैव वस्त्रमयोग्यं योग्यं वा, परं वयं तावदिदानीं तस्य वस्त्रस्य प्रमाणं वर्णं च पश्यामः, ततः "ण"मिति तद् वस्त्रं 'तथा' तेन प्रमाण-वर्णादिना प्रकारेण गुरूणां कथयिष्यामः; एवं यद् वस्त्रं साकारत्वेन व्यवस्थापितं तत् साकारकृतम् । तच्च यदि न कुर्वन्ति ततो मासलघु ।

१ ◁ ▷ एतच्चिह्नान्तर्गतः पाठः भा० नास्ति ॥ २ °मनुज्ञाता तेषां ताडी० भा० कां० ॥

साकारकृतं कृत्वा प्रमाण-वर्णाभ्यां चिह्नं न कुर्वन्ति मासगुरु । यदि गणिन्या अग्रे एतद्वस्त्र-प्रमाणादि न कथयन्ति ततश्चतुर्लघवः । अथात्मनिश्रया स्वयमेव गृह्णन्ति चतुर्गुरवः ॥४१६१ ॥ ४१६२ ॥ अथ गृहस्था एवं ब्रूयुः—

**जइ भे रोयति गिण्हध, ण वयं गणिणिं गुरुं व जाणामो ।**
**इय वि भणिया वि गणिणो, कधेंति ण य तं पडिच्छंति ॥ ४१६३ ॥**

यदि "भे" भवतीनां रोचते ततो गृह्णीध्वमेतद् वस्त्रम्, न वयं 'गणिनीं' प्रवर्तिनीं 'गुरुं वा' आचार्यं जानीमः, इत्यपि भणिताः संयत्यः 'गणिनः' सूरेः कथयन्ति, न पुनः 'तद्' वस्त्रं प्रतीच्छन्ति ॥ ४१६३ ॥ सूरिभिश्च संयतीमुखाद् वस्त्रवृत्तान्तं श्रुत्वा इत्थं वक्तव्यम्—

**कतरो भे णत्थुवधी, जो दिज्जउ भणह मा विसूरित्था ।**
**पुव्वुप्पण्णो दिज्जति, तस्सऽसतीए इमा जयणा ॥ ४१६४ ॥**

'भणत' प्रतिपादयत वर्षाकल्पा-ऽन्तरकल्पादीनां मध्यात् कतरः "भे" भवतीनां नास्त्युपधिः यः साम्प्रतं दीयताम्, मा यूयमुपधिना विना 'विसूरयथ' खेदमुद्वहथ, इत्युक्ते यस्योपधेरभावस्तं निवेदयन्ति । स यदि पूर्वोत्पन्नो वर्तते ततो दीयते । अथ पूर्वोत्पन्नो नास्ति ततस्तस्याभावे इयं यतना ॥ ४१६४ ॥

**नाऊण य परीत्तं, वावारे तत्थ लद्धिसंपण्णे ।**
**गंधड्ढे परिभुत्ते, कप्पकते दाण गहणं वा ॥ ४१६५ ॥**

"परीत्तं" स्तोकम्, अभावोपलक्षणं चेदम्, ततोऽयमर्थः—परीत्तं नाम न सन्ति संयतीनां वस्त्राणि इति ज्ञात्वा ये तत्र लब्धिसम्पन्नाः साधवस्तान् व्यापारयेत्, यथा—आर्याः ! संयतीनां प्रायोग्याणि वस्त्राणि गवेषयत । ततस्ते वस्त्राणि गृहीत्वा गुरूणां समर्पयन्ति, तानि च गन्धाढ्यानि परिभुक्तानि वा भवेयुः ततः कल्पे कृते सति दानं ग्रहणं वा कर्तव्यम् । किमुक्तं भवति ?—तानि वस्त्राणि प्रक्षाल्य सप्त दिवसानि स्थापयित्वा यदि नास्ति कोऽपि विकारस्ततो गणधरेण प्रवर्तिन्या दातव्यानि । प्रवर्तिनीहस्ताच्च संयतीभिर्ग्रहीतव्यानि इति सङ्ग्रहगाथासमासार्थः ॥ ४१६५ ॥ साम्प्रतमेनामेव विवृणोति—

**गुरुस्स आणाएँ गवेसिऊणं, वावारिता ते अहछंदिया वा ।**
**दुधापमाणेण जहोदियाई, गुरूण पाएसु णिवेदयंति ॥ ४१६६ ॥**

ये 'व्यापारिताः' गुरुभिर्वस्त्रग्रहणाय प्रवर्तिताः, ये वा 'यथाच्छन्दिकाः' अव्यापारिता एव गुरूणां पुरतो भणन्ति—वयं वस्त्राणि गवेषयिष्यामः, आभिग्रहिका इति भावः; ते द्वयेऽपि गुरोराज्ञया वस्त्राणि 'द्विधाप्रमाणेन' गणनाप्रमाणेन प्रमाणप्रमाणेन च यथा भगवद्भिस्तीर्थकरैः 'उदितानि' भणितानि तथा गवेषयित्वा गुरूणां 'पादयोः' पुरतस्तानि 'निवेदयन्ति' निक्षिपन्तीत्यर्थः ॥ ४१६६ ॥ ततश्च—

**गंधड्ढ अपरिभुत्ते, वि धोविउं देति किमुअ पडिपक्खे ।**
**गणिणीएँ णिवेदेज्जा, चतुगुरु सय दाण अड्डाणे ॥ ४१६७ ॥**

यानि गन्धाढ्यानि तानि यद्यपि अपरिभुक्तानि तथापि 'धावित्वा' प्रक्षाल्य संयतीनां

ददाति 'किमुत' किं पुनः 'पतिपक्षान्' परिमुक्तान् ? इत्यर्थः, तानि सुतरां प्रक्षालनीयानीति भावः । उपलक्षणमिदम्, तेन यद्यपि तानि न गन्धाढ्यानि तथापि धावनीयान्येव, धावित्वा च तानि सप्त दिवसानि स्थापयित्वा स्थविरः प्रावरणं कार्यते । यदि नास्ति कोऽप्यभियोग-विकारस्ततो गणधरः 'गणिन्याः' प्रवर्तिन्यास्तानि 'निवेदयेद्' अर्पयेदित्यर्थः । सा च संयतीनां ददाति । अथ गणधरः स्वयं तासां ददाति ततश्चतुर्गुरु, अस्थाने च शेषसंयतीभिः स्थाप्येत । शुद्धभावेनापि हि यदि काचिदार्यिका विशेष्य आलप्यते तथापि काचिदपरा संयती तत्र विरूपकाभिप्रायतया शङ्कां करोति, किं पुनः स्वयं वस्त्रप्रदाने ? ॥ ४१६७ ॥ अपि च—

**इहरह वि ताव मेहा, माणं भंजंति पणइणिजणस्स ।**
**किं पुण बलाग-सुरचाव-विज्जुपज्जोविया संता ॥ ४१६८ ॥**

'इतरथाऽपि च' बलाका-सुरचापादिविशेषमन्तरेणापि तावद् मेघा गगनमण्डलमापूर्य गर्जयन्तः 'प्रणयिनीजनस्य' मानवतीलोकस्य मानं भञ्जन्ति, किं पुनः बलाका-सुरचाप-विद्युत्प्रद्योतिताः सन्तः ?, एवंविधाः सुतरां मानमुन्मूलयन्ति; एवमियमपि 'अतिप्रौढा समर्था चाहम्' इति कृत्वा अस्माकं मानभङ्गं पुराऽपि करोति, साम्प्रतं तु गुरुभिः स्वयं पूजित-सत्कारिता विशेषतः करिष्यतीति शेषसाध्व्यश्चिन्तयेयुः ॥ ४१६८ ॥

**दुल्लभवत्थे व सिया, आसण्णणियाण वा वि णिब्बंधे ।**
**पुच्छंतऽज्जं थेरा, वत्थपमाणं च वण्णं च ॥ ४१६९ ॥**

अथ स देशो दुर्लभवस्त्रो भवेत् ततो ये व्यापारितास्तैरपि न लब्धानि वस्त्राणि, अथवा यैः 'निजैः' सज्ञातकैस्ता निमन्त्रितास्ते तासाम् 'आसन्नाः' अतीवप्रत्यासन्नसम्बन्धास्ततो न तन्निर्बन्धो अप्रमाणीकर्तुं शक्यते, एवमादौ कारणे समुत्पन्ने 'स्थविराः' आचार्याः 'आर्यां' प्रवर्तिनीं वस्त्रस्य प्रमाणं वर्णं च पृच्छन्ति—कीदृशैर्वस्त्रैर्यूयं निमन्त्रिताः ? किं वा तेषां प्रमाणम् ? ॥ ४१६९ ॥ ततः संयत्यो ब्रुवते—

**सेयं व सिंधवण्णं, अहवा मइलं च ततियगं वत्थं ।**
**तस्सेव होति गहणं, विवज्जए भाव जाणित्ता ॥ ४१७० ॥**

एकं वस्त्रं 'श्वेतं' शरदिन्दु-कुन्दावदातम्, द्वितीयं 'सैन्धववर्णं' पाण्डुरम्, ◁ अथवाशब्दो वर्णप्रकारान्तरताद्योतकः, ▷ तृतीयं परिमलितत्वाद् मलिनम्, प्रमाणमपि च तस्य वस्त्रस्य ईदृशमस्तीति ताभिरुक्ते गुरुभिस्तत्र गत्वा तस्यैव वस्त्रस्य ग्रहणं कर्तव्यम् । अथ ते गृहस्थास्तत्र गतानामाचार्याणामन्यानि वस्त्राणि दर्शयन्ति तत एवं विपर्यये 'भावं' भद्रक-प्रान्तगतमभिप्रायं ज्ञात्वा ग्रहणं कर्तव्यं न वा ॥ ४१७० ॥ इदमेव स्पष्टयन्नाह—

**पुव्वगता में पडिच्छह, अम्हे वि य एमु ता तहिं गंतुं ।**
**गुरुआगमण कधेत्ता, णीणावेंताऽऽगते तम्मि ॥ ४१७१ ॥**

सूरयः प्रवर्तिनीं भणन्ति—यूयं तत्र पूर्वगताः प्रतीक्षत, वयमपि युष्माकमनुमार्गत एवागच्छामः । ततस्ताः संयत्यः 'तत्र' गृहस्थकुले गत्वा गुरूणामागमनं कथयन्ति । ततः 'तस्मिन्'

---

१ धावयित्वा त० डे० ॥ २ ◁ ▷ एतन्मध्यगतः पाठः भा० नास्ति ॥

गुरावागते संयत्यो भणन्ति—निष्काशयत तानि वस्त्राणि यैर्वयं निमन्त्रिताः । एवमुक्ते यदि तान्येव दर्शयन्ति ततो गृह्णन्ति ॥ ४१७१ ॥ अथान्यानि ततः सूरिभिरिदं वक्तव्यम्—

अण्णं इदं ति पुट्ठा, भणंति किह तुब्भ तारिसं देमो ।
इति भद्दे पंतेसु तु, धुणंति सीसं ण तं एतं ॥ ४१७२ ॥

येन भवद्भिः संयत्यो निमन्त्रिता नेदं तद् वस्त्रम् किन्तु प्रमाणेन वर्णेन वा अन्यादृशत्वेनान्यदिदमिति पृष्टाः सन्तस्ते गृहस्था यदि भद्रकास्तत इदं भणन्ति—कथं वयं युष्माकं स्वयमेवागतानां 'तादृशं' सामान्यवर्णादियुक्तं प्रयच्छामः ? इदं तु ततो विशिष्टतरवर्णादिगुणोपेतम्, अत इदं गृहीत ◁ इति भद्रका ब्रूयुः ▷ । ये तु प्रान्तास्तेषु सूरयः शीर्षं धूनयन्ति, इदं च वचनं ब्रुवते—येन संयत्यो निमन्त्रितास्तदिदं वस्त्रं न भवति ॥ ४१७२ ॥

एवमुक्ते ते चिन्तयेयुः—

बहु जाणिया ण सक्का, वंचेउं तेसि जाणिउं भावं ।
णेच्छंति भद्दएसु तु, पहट्ठभावेसु गेण्हंति ॥ ४१७३ ॥

अये ! अमीभिराचार्यैः 'बहु' प्रभूतं 'ज्ञाताः' उपलक्षिता वयम्—यदेते आभियोगिकानि वस्त्राणि प्रयच्छन्तीति, अतो न शक्या अमी वञ्चयितुम् ! इत्यादिकं तेषां 'भावम्' अभिप्रायं मुखविकारादिभिराकारैर्ज्ञात्वा नेच्छन्ति । भद्रकेषु तु प्रहृष्टभावेषु गृह्णन्ति ॥ ४१७३ ॥

भद्रकेष्वेव विशेषमुपदर्शयति—

न वि एयं तं वत्थं, जं तं अज्जाण णीणियं मे त्ति ।
तुब्भे इमं पडिच्छध, तं चिय एताण दाहामो ॥ ४१७४ ॥

नाप्येतत् तद् वस्त्रं यत् तद् आर्यिकाणामर्थाय निष्काशितं भवद्भिः; इत्युक्ते यदि गृहस्था ब्रुवते—यूयं तावदिदं वस्त्रं प्रतीच्छत, एतासां तु वयं तदेव दास्यामः ॥ ४१७४ ॥

ततो वक्तव्यम्—

अण्णेण णे ण कज्जं, एतद्धा चेव गेण्हिमो अम्हे ।
जति ताणि वि इति वुत्ते, णीणेंति दुए वि गिण्हंति ॥ ४१७५ ॥

अन्येन वस्त्रेण "णे" अस्माकं न कार्यम्, एतासामेवार्थाय वयं सम्प्रति गृह्णीमः; इत्युक्ते यदि 'तान्यपि' प्राक्तनानि वस्त्राणि आनयन्ति ततः 'द्वयान्यपि' प्राक्तन-पश्चात्तनानि गृह्णन्ति ॥ ४१७५ ॥

ताणि वि उवस्सयम्मि, सत्त दिणे ठविय कप्प काऊणं ।
थेरा परिच्छिऊणं, विहिणा अप्पेंति तेणेव ॥ ४१७६ ॥

तान्यपि वस्त्राणि गृहीत्वा उपाश्रये आनीय सप्त दिनानि स्थापयित्वा कल्पं कृत्वा स्थविरप्रावरणद्वारेण परीक्ष्य यदि नास्ति कोऽप्यभियोगविकारस्ततः 'स्थविराः' आचार्यास्तेनैव विधिना संयतीनामर्पयन्ति ॥ ४१७६ ॥

एवमाचार्यनिश्रया ग्रहणमुक्तम् । अथोपाध्यायादिनिश्रया तदेवाह—

१ ◁ ▷ एतदन्तर्गतः पाठः भा॰ नास्ति ॥ २ °वन्ति—यू° ताटी॰ त॰ डे॰ ॥

**आयरिएँ उवज्झाए, पवत्ति थेरे गणी गणधरे य ।**
**गणवच्छेइयणीसा, पवित्तिणी तत्थ आणेति ॥ ४१७७ ॥**

आचार्यस्याभावे उपाध्यायस्य प्रवर्तिनः स्थविरस्य गणिनो गणधरस्य गणावच्छेदिनो वा निश्रया वस्त्रग्रहणं कर्तव्यम् । एतेषामभावे प्रवर्तिनी 'तत्र' गृहस्थकुले गत्वा वस्त्रमानयति ॥ ४१७७ ॥ इदमेव व्याख्यानयति—

**आयरिए असधीणे, साहीणे वा वि वाउल गिलाणे ।**
**एकेकगपरिहाणी, एमादीकारणेहिं तु ॥ ४१७८ ॥**

यदि तत्राचार्यो अस्वाधीनः स्वाधीनो वा परं 'व्याकुलः' कुलादिकार्येषु व्यापृतः ग्लानो वा तत उपाध्यायनिश्रया ग्रहणं विधेयम् । तत्रापि स एव विधिः । अथोपाध्यायोऽस्वाधीनो व्याकुलो वा, तत एकैकपरिहाण्या तावद् नेयं यावत् प्रवर्तिनीनिश्रयाऽपि ग्रहीतव्यम् । एवमादिभिः कारणैः संयतीनां वस्त्रग्रहणं भवतीति ॥ ४१७८ ॥

**सुत्तणिवातो थेरी, गहणं तु पवत्तिणीय नीसाए ।**
**तरुणीण य अग्गहणं, पवत्तिणी तत्थ आणेति ॥ ४१७९ ॥**

अत्र पुनः सूत्रनिपात इत्थं मन्तव्यः—( ग्रन्थाग्रम्—२७४२० ) आचार्यादीनां गणावच्छेदिकान्तानामभावे प्रवर्तिन्या निश्रया स्थविरा आर्यिकाः स्वयं वस्त्रग्रहणं कुर्वन्ति । तरुणीनां तु सर्वथैव वस्त्रस्याग्रहणमुत्सर्गतः, प्रवर्तिनी स्वयं तत्र गत्वा आनयति ॥ ४१७९ ॥

इदमेव भावयति—

**साहू जया तत्थ न होज कोई, छंदेज णीया तरुणी जया य ।**
**पवत्तिणी गंतु सयं तु गेण्हे, आसंकभीया तरुणी न नेति ॥ ४१८० ॥**

यदा तत्राचार्यादीनां मध्यात् कोऽपि गीतार्थः साधुर्न भवति, यदा च 'निजकाः' संज्ञातकास्तरुणीः 'छन्दयेयुः' निमन्त्रयेरन् तदा प्रवर्तिनी स्वयं तत्र गत्वा गृह्णाति । 'आशङ्काभीता च' प्रत्यपायशङ्कया चकिता तरुणीरात्मना सार्धं न नयति ॥ ४१८० ॥

**असती पवत्तिणीए, आयरियादि व्व जं व णीसाए ।**
**आगाढकारणम्मि उ, गिहिणीसाए वसंतीणं ॥ ४१८१ ॥**

अथ नास्ति प्रवर्तिनी तत आचार्योपाध्यायादीन् 'यं वा' सामान्यसाधुमपि 'निश्राय' निश्रां कृत्वा विहरति तन्निश्रया ग्रहणं कर्तव्यम् । आगाढे तु कारणे गृहिनिश्रया वसन्तीनां वस्त्रमपि ग्रहणं भवतीति वाक्यशेषः ॥ ४१८१ ॥ इदमेव सविशेषमाह—

**असती पवत्तिणीए, अभिसेगादी विवज्जए णीसा ।**
**गेण्हंति थेरिया पुण, दुगमादी दोण्ह वी असती ॥ ४१८२ ॥**

प्रवर्तिन्या अभावे अभिषेका-गणावच्छेदिनीप्रमुखयो या गीतार्थाः संयत्यस्ताः स्वयं गत्वा गृह्णन्ति । "विवज्जए णीस" त्ति विपर्ययो नाम—अभिषेकादयोऽपि न सन्ति ततः परस्परनिश्रया स्थविरा आर्यिका गृह्णन्ति । ताश्च 'द्विकादयः' द्वि-त्रिप्रभृतिसङ्घाटकाः पर्यटन्ति । अथ

---

१ इतोऽग्रे ग्रन्थाग्रम्—१२००० इति ताटी० । ग्रन्थाग्रम्—३००० इति मो० ले० ॥

वा वस्त्रं वा गृह्णन्ति ततश्चतुर्लघुकाः । पूर्वं वा लेपादीनि यदि न गृहीतानि तदाऽपि चतुर्लघु ॥ ४२६५ ॥ इदमेव व्याख्याति—

**वासाण एस कप्पो, ठायंता चेव जाव उ सकोसं ।**
**परिभुत्त विप्पइण्णं, वाघातट्ठा निरिक्खंति ॥ ४२६६ ॥**

"वासाण" त्ति विभक्तिव्यत्ययाद् वर्षासु तिष्ठतामेषः 'कल्पः' सामाचारी—सर्वतः सक्रोशं योजनं यावद् यत् कार्पटिकैः परिभुक्तं 'विप्रकीर्णं' पूर्वं परिभुज्य ततोऽकिञ्चित्करमिति मत्वा परिष्ठापितं तत् तिष्ठन्त एव व्याघातार्थं निरीक्षन्ते ॥ ४२६६ ॥

कः पुनर्व्याघातः ? इति चेद् उच्यते—

**अद्धाणणिग्गतादी, झामिय वूढे व सेह परिजुण्णे ।**
**आगंतु बाहि पुव्विं, दिट्ठं अस्सण्णि-सण्णीसु ॥ ४२६७ ॥**

अध्वनिर्गतादयः साधव आगच्छेयुः, आत्मीयो वा उपधिः 'ध्यामितः' दग्धो भवेत्, उदकेन वा व्यूढः, 'शैक्षो वा' अवश्यप्रव्राजनीयः पुराणादिरुपस्थितः, परिजीर्णो वा उपधिः, एतैः कारणैरागन्तुकेषु तालाचरादिषु पूर्वं मार्गयन्ति । ततः क्षेत्रबहिरसंज्ञिषु पूर्वदृष्टम्, ◁ ततः संज्ञिषु पूर्वदृष्टं ▷ गृह्णन्ति ॥ ४२६७ ॥ अथेदमेव विभावयिषुरागन्तुकान् व्याख्याति—

**तालायरे य धारे, वाणिय खंधार सेण संवट्टे ।**
**लाउलिग-वइग-सेवग-जामाउग-पंथिगादीसुं ॥ ४२६८ ॥**

'तालाचराः' नट-नर्त्तक-चट्टादयः, "धारे" त्ति देवच्छत्रधारकाः, 'वणिजः' वौलिञ्जकाः, राजबिम्बसहितं स्वचक्रं परचक्रं वा स्कन्धावार उच्यते, राजबिम्बविरहिता सेना, चौरधाटीभयेन बहवो ग्रामा नायकाधिष्ठिता एकत्र स्थिताः संवर्त्तः, लाकुटिकाः—डक्कराः, व्रजिकाः—गोकुलिकाः, सेवकाः—चारभट्टकाः, जामातृकाः प्रसिद्धाः, पथिकाः—ये बहुवस्त्रं देशं प्रति प्रस्थिताः । एवमादिषु पूर्वं मार्गयन्ति ॥ ४२६८ ॥ कथम् ? इत्याह—

**आगंतुगेसु पुव्वं, गवेसती चारणादिसु बाहिं ।**
**पच्छा जे सग्गामं, तालायरमादिणो एंति ॥ ४२६९ ॥**

"बाहिं" ति सक्रोशयोजनान्तर्वर्तिष्वन्तरपल्लिकासहितेषु बाह्यग्रामेषु ये 'आगन्तुकाः' चारणादयस्तेषु पूर्वं गवेषयन्ति । 'पश्चाद्' बाह्यग्रामेषु चारणादीनामभावे ये तालाचरादयः स्वग्राममायान्ति तेषु गवेषयितव्यम् ॥ ४२६९ ॥ कथमेतेषु वस्त्रसम्भवः ? इत्याह—

**लद्धूण णवे इतरे, समणाणं देज्ज सेव-जामादी ।**
**चारण-धार-वणीणं, पडंति इयरे उ सड्ढिगा ॥ ४२७० ॥**

सेवक-जामातृका नवानि वस्त्राणि लब्ध्वा 'इतराणि' पुराणानि श्रमणानां दद्युः । चारणानां "धार" त्ति देवच्छत्रधाराणां राजादयः प्रसादतो वस्त्राणि प्रयच्छन्ति तानि पुराणानि वा ते

१ °व उक्कोसं भा० । एतदनुसारेणैव भा० टीका । दृश्यतां टिप्पणी ३ ॥ २ °ट्ठा परि° ताभा० विना ॥ ३ °री—'उत्कृष्टं क्षेत्रं' सक्रो° भा० ॥ ४ ◁ ▷ एतदन्तर्गतः पाठः भा० एव वर्त्तते ॥ ५ वाणिजकाः मो० ॥ ६ °रण-देवच्छत्रधारकाणां रा° भा० ॥

साधूनां दद्युः । "वणीणं" ति वालिलुकवणिजां वल्लभे वस्त्राणि पतन्ति । 'इतरे तु' पथिकादयः 'श्राद्धाः' श्रावका भवेयुः ॥ ४२७० ॥ बहिर्ग्राम-स्वग्रामेषु चारणादीनामभावे विधिमाह—

**बहि-अंत-ऽसण्णि-सण्णिसु, जं दिट्ठं तेसु चेव जमदिट्ठं ।**
**केयि दुहओ वऽसण्णिसु, गहिते सण्णीसु दिट्ठितरे ॥ ४२७१ ॥**

"बहि" त्ति क्षेत्राभ्यन्तरे प्रतिवृषभग्रामेषु येऽसंज्ञिनस्तेषु पूर्वदृष्टं वस्त्रं मार्गयन्ति, तदभावे बहिर्ग्रामेष्वेव संज्ञिषु पूर्वदृष्टम्, तदप्राप्तौ बाह्यग्रामेष्वेवासंज्ञिषु पूर्वमदृष्टम्, तदभावे बहिरेव संज्ञिषु पूर्वमदृष्टम्; तदभावे अन्तः—मूलग्रामेऽसंज्ञिषु पूर्वदृष्टम्, तदसत्त्वे मूलग्राम एव संज्ञिषु पूर्वदृष्टम्, तदसम्भवे मूलग्राम एवासंज्ञिषु यत् पूर्वमदृष्टम्, तदभावे मूलग्राम एव संज्ञिषु पूर्वमदृष्टं वस्त्रं मार्गयन्ति । केचिदाचार्या इत्थं ब्रुवते—'द्वयोरपि' बहिरन्तर्लक्षणयोः स्थानयोः प्रथममसंज्ञिषु गृहीते सति ततो बहिरन्तर्वर्त्तिष्वेव संज्ञिषु यथाक्रमं दृष्टम् इतरच्च—अदृष्टं गृह्णन्तीति । किं पुनः कारणं पूर्वदृष्टं प्रथमं गृह्यते ? उच्यते—तत्र हि पूर्वमप्युपेक्षितत्वेनाधाकर्मादय उत्क्षेप-निक्षेपादयश्च दोषाः परिहृता भवन्ति ॥ ४२७१ ॥

**कोई तत्थ भणेज्जा, बाहिं खेत्तस्स कप्पती गहणं ।**
**गंतुं ता पडिसिद्धं, कारण गमणे बहुगुणं तु ॥ ४२७२ ॥**

कश्चिद् नोदकः 'तत्र' इति अनन्तरोक्तव्याख्याने इदं भणेत्—यदि पूर्वं प्रतिवृषभग्रामेषु ग्रहीतव्यं ततो मूलग्रामे, एवं तर्हि दूरत्वात् क्षेत्राद् बहिर्ग्रहणं सुतरां कल्पते । गुरुराह—क्षेत्राद् बहिर्वर्षासु गन्तुमपि तावत् प्रतिषिद्धं किं पुनर्वस्त्रग्रहणम् ? । अथ कारणे वर्षासु क्षेत्रबहिर्गमनं करोति तत्र गतश्च वर्षाकल्पादिना निमन्त्र्यते तदा संयमस्य बहुगुणमिति कृत्वा तदपि ग्रहीतव्यम् ॥ ४२७२ ॥ इदमेव व्याचिख्यासुः प्रथमतः परवचनं व्याख्याति—

**एवं नामं कप्पति, जं दूरे तेण बाहि गिण्हंतु ।**
**एवं भणंति गुरुगा, गमणे गुरुगा व लहुगा वा ॥ ४२७३ ॥**

---

१ "बहि-अंत० गाधा ॥ बाहिं सग्गामस्स असण्णीसु पुव्वदिट्ठं मग्गिज्जइ, असति तेसु चेव पुव्वं अदिट्ठं पि दिज्जंतं घेप्पति, असति बाहिं चेव सण्णीसु पुव्वं दिट्ठं मग्गिज्जति, असति तेसु चेव अदिट्ठं; असति अंतो सगामस्स पुव्वं असण्णीसु दिट्ठं घेप्पति, असति अदिट्ठं पि, असति अंतो चेव सण्णीसु पुव्वं दिट्ठं, असति अदिट्ठं पि । केसिंचि आयरियाणं आदेसो—पुव्वं बाहिं सगामस्स असण्णीसु दिट्ठे अदिट्ठे य गहिते ताधे अंतो असण्णीसु चेव दिट्ठादिट्ठं, ताधे बाहिं सण्णीसु दिट्ठादिट्ठं, ताधे अंतो सण्णीसु चेव दिट्ठादिट्ठं । किं कारणं ? सण्णी उग्गमादयो वि कुज्जा ॥" इति चूर्णिः ॥

"बहि-अंतो० गाहा ॥ 'बाहिं' ति भिक्खायरियागामेसु असण्णीसु दिट्ठं मग्गंतु, असइ बाहिं चेव सण्णीसु दिट्ठं, असइ बाहिं चेव असन्नीसु अदिट्ठं, असइ बाहिं चेव सन्नीसु अदिट्ठं । एवं अंतो वि । केसिंचि आयरियाणं आदेसो—पुव्वं असन्नीसु दोहिं वि पगारेहिं-बाहिं अंतो अदिट्ठं दिट्ठं च, ताहे सन्नीसु घेत्तव्वं । किं कारणं ? सन्नी उग्गमादओ वि कुज्जा ॥" इति विशेषचूर्णिः ॥

२ °वल्लभे व° कां० ॥ ३ °दभावे कां० ॥ ४ °दृष्टमपि गृ° भा० ॥ ५ °ति पूर्वव्या° भा० ॥ ६ °ग्रहीतुं सु° भा० ॥ ७ एव भणंते गु° ताभा० ॥

यद् 'दूरे' ग्रामाद् बहिर्वस्त्रं तद् यदि प्रथमं कल्पते तत एवं नाम क्षेत्राद् बहिः सुतरां प्रथमतरं गृह्णन्तु । सूरिराह—एवं भणतो भवतश्चतुर्गुरुकाः । अथ क्षेत्राद् बहिर्गच्छति ततो गुरुका वा लघुका वा प्रायश्चित्तम् । तत्र नवप्रावृषि चत्वारो गुरवः, शेषे वर्षाकाले चत्वारो लघवः ॥ ४२७३ ॥ ◁ "कारण गमणे बहुगुण"मिति पदं व्याचष्टे—▷

संबद्ध-भाविएसू, कप्पति जा पंच जोयणे कज्जे ।
जुण्णे व वासकप्पं, गेण्हति जं बहुगुणं चऽण्णं ॥ ४२७४ ॥

यानि साधर्मिकसम्बन्धेन सम्बद्धानि परस्परं गमना-ऽऽगमनभावितानि च क्षेत्राणि तेषु वर्षासु कल्पते साधर्मिकाणामुदन्तवहनार्थं चत्वारि पञ्च योजनानि वा यावद् गन्तुं वस्तुं वा । एवं कार्ये गतस्य तस्यापान्तराले वर्षात्राणेन कश्चिद् निमन्त्रणां कुर्यात्, तस्य च प्राक्तनो वर्षाकल्पः परिजीर्णः, तच्च वर्षात्राणं घन-मसृणमभिनवं च, ततो वर्षासु बहुगुणमिति कृत्वा गृह्णाति । कारणतः 'अन्यदपि' पटलकादिकं घन-मसृणादिगुणोपेतमाचार्यप्रायोग्यं वा यद् वस्त्रं लभ्यते तदपि 'भूयान् गुणोऽत्र गृहीते भविष्यति' इति कृत्वा गृह्यते । एवं कारणे गमनं ग्रहणं चोभयमपि दृष्टम्, कारणाभावे तु न कल्पते गन्तुं ग्रहीतुं वा ॥ ४२७४ ॥

अथ गृह्णाति ततोऽमून् षोडश दोषान् प्राप्नोति—

आहाकम्मुद्देसिय, पूतीकम्मे य मीसजाए य ।
ठवणा पाहुडियाँए, पादोकर कीत पामिच्चे ॥ ४२७५ ॥
परियट्टिए अभिहडे, उब्भिण्णे मालोहडे इ य ।
अच्छिज्जे अणिसिट्ठे, धोते रत्ते य घट्ठे य ॥ ४२७६ ॥

आधाकर्म १ औद्देशिकं २ पूतिकर्म ३ मिश्रजातं ४ स्थापना ५ प्राभृतिका ६ प्रादुष्करणं ७ क्रीतं ८ प्रामित्यं ९ परिवर्त्तितम् १० अभ्याहृतम् ११ उद्भिन्नं १२ मालापहृतम् १३ आच्छेद्यम् १४ अनिसृष्टं चेति १५ पञ्चदश दोषाः । "धोए रत्ते य घट्ठे य" त्ति साधूनामर्थाय मलिनवस्त्रं 'धौतं' चोक्षं कृतमित्यर्थः, एवं 'रक्तं' प्रदत्तरागम्, 'घृष्टं' मसृणपाषाणादिनोत्तेजितम्, एते त्रयोऽप्येक एव दोष इति ॥ ४२७५ ॥ ४२७६ ॥

एते सव्वे दोसा, पढमोसरणे ण वज्जिता होंति ।
जिणदिट्ठेहिँ अगहिते, जो गेण्हति तेहि सो पुट्ठो ॥ ४२७७ ॥

एते सर्वेऽप्याधाकर्मादयो दोषाः प्रथमे समवसरणे वस्त्रादिकं गृह्णता न वर्जिता भवन्ति । अथ पूर्वं दर्पतो न गृहीतमुपकरणं ततः प्रथमे समवसरणे यो गृह्णाति सोऽपि जिनैः—तीर्थकरैर्ये दृष्टाः कर्मबन्धदोषास्तैः स्पृष्टो मन्तव्यः, भावतस्तेन दोषाणामङ्गीकृतत्वात् ॥ ४२७७ ॥

पढमम्मि समोसरणे, जावतियं पत्त-चीवरं गहियं ।
सव्वं वोसिरियव्वं, पायच्छित्तं च वोढव्वं ॥ ४२७८ ॥

प्रथमे समवसरणे दर्पतो यावत् पात्र-चीवरं गृहीतं तावत् सर्वमपि व्युत्स्रष्टव्यम्, प्रायश्चित्तं

---

१ सुतरा° भा० ॥ २ ◁ ▷ एतदन्तर्गतमवतरणं भा० नास्ति ॥ ३ °का वा, वा° ताभा० ॥
४ 'रक्तं' खुदिप्रभृतिभिः प्रद° भा० ॥

च गुरुपदत्तं यथोक्तं बोद्धव्यम् । अथवा कार्ये समुत्पन्ने यत् पात्रं वा चीवरं वा वारणादिषु गृहीतं तत् सर्वं कृते कार्ये परिष्ठापनीयम्, अपरिणामकप्रत्ययनिमित्तं च यथालघीयः प्रायश्चित्तं बोद्धव्यम् ॥ ४२७८ ॥

सज्झायट्ठा दप्पेण वा वि जाणंतए वि पच्छित्तं ।
कारण गहियं तु विदू, धरेंतऽगीएसु उज्झंति ॥ ४२७९ ॥

स्वाध्यायार्थं दर्पेण वा यदि "बहि-अंत-ऽसन्नि-सन्निसु, जं दिट्ठं तेसु चेव जमदिट्ठं ।" ( गा० ४२७१ ) इत्यादिकं क्रममुल्लङ्घ्य गृहीतं तत्र 'जानतोऽपि' गीतार्थस्यापि प्रायश्चित्तम् । यत्तु कारणे क्रमेण विधिना गृहीतं तद् यदि सर्वेऽपि 'विदः' गीतार्थास्तदा धारयन्ति । अथागीतार्थमिश्रास्ततोऽन्यस्मिन्नुपकरणे लब्धे तद् उज्झन्ति ॥ ४२७९ ॥ अथ यस्मिन् काले वर्षावासे स्थातव्यं यावन्तं वा कालं येन वा विधिना तदेतदुपदर्शयति—

आसाढपुण्णिमाए, वासावासासु होति अतिगमणं ।
मग्गसिरबहुलदसमी, उ जाव एक्कम्मि खेत्तम्मि ॥ ४२८० ॥

आषाढपूर्णिमायां वर्षावासप्रायोग्ये क्षेत्रे 'अतिगमनं' प्रवेशः कर्त्तव्यो भवति । तत्र चापवादतो मार्गशीर्षबहुलदशमीं यावदेकत्र क्षेत्रे वस्तव्यम् । एतच्च चिक्खल्ल-वर्षादिकं वक्ष्यमाणं कारणमङ्गीकृत्योक्तम् । उत्सर्गतस्तु कार्तिकपूर्णिमायां निर्गन्तव्यम् ॥ ४२८० ॥

इदमेव भावयति—

बाहि ठिया वसमेहिं, खेत्तं गाहेतु वासपाउग्गं ।
कप्पं कधेत्तु ठवणा, सावणबहुलस्स पंचाहे ॥ ४२८१ ॥

यत्राषाढमासकल्पः कृतस्तत्र अन्यत्र वा प्रत्यासन्नग्रामे स्थिता वर्षाक्षेत्रं वृषभैः साधुसामाचारीं ग्राहयन्ति । ते च वृषभा वर्षाप्रायोग्यं संस्तारक-तृण-डगल-क्षार-मल्लकादिकमुपधिं गृह्णन्ति । तत आषाढपूर्णिमायां प्रविष्टाः प्रतिपद आरभ्य पञ्चभिरहोभिः पर्युषणाकल्पं कथयित्वा श्रावणबहुलपञ्चम्यां वर्षाकालसामाचार्याः स्थापनां कुर्वन्ति, पर्युषणयन्तीत्यर्थः ॥ ४२८१ ॥

एत्थ य अणभिग्गहियं, वीसतिरायं सवीसगं मासं ।
तेण परमभिग्गहियं, गिहिणायं कत्तिओ जाव ॥ ४२८२ ॥

'अत्र' इति श्रावणबहुलपञ्चम्यादावात्मना पर्युषितेऽपि 'अनभिगृहीतम्' अनवधारितं गृहस्थानां पुरतः कर्त्तव्यम् । किमुक्तं भवति ?—यदि गृहस्थाः पृच्छेयुः—आर्याः ! यूयमत्र स्थिता वा ? न वा ? इति; एवं पृष्टे सति 'स्थिता वयमत्र' इति सावधारणं न वक्तव्यम्, किन्तु साकारम्, यथा—नाद्यापि कोऽपि निश्चयः स्थिता अस्थिता वेति । इत्थमनभिगृहीतं कियन्तं कालं वक्तव्यम् ? उच्यते—यद्यभिवर्धितोऽसौ संवत्सरस्ततो विंशतिरात्रिन्दिवानि, अथ चान्द्रोऽसौ ततः सविंशतिरात्रं मासं यावदनभिगृहीतं कर्त्तव्यम् । "तेणं" ति विभक्तिव्यत्ययात् 'ततः परं' विंशतिरात्रात् सविंशतिरात्रमासाच्च ऊर्द्धम् 'अभिगृहीतं' निश्चितं कर्त्तव्यम् 'गृहिज्ञातं च' गृहस्थानां पृच्छतां ज्ञापना कर्त्तव्या, यथा—वयमत्र वर्षाकालं स्थिताः । एतच्च गृहिज्ञातं

१ °ञ्चम्यामारभ्य° भा० ॥ २ न कर्त्तव्यम् मो० त० डे० ताटी० ॥

कार्तिकमासं यावत् कर्त्तव्यम् ॥ ४२८२ ॥ किं पुनः कारणम् इयति काले व्यतीत एव गृहिज्ञातं क्रियते ? नार्वाग् ? इति अत्रोच्यते—

**असिवाइकारणेहिं, अहवण वासं ण सुट्ठु आरद्धं ।**
**अभिवड्ढियम्मि वीसा, इयरेसु सवीसती मासे ॥ ४२८३ ॥**

कदाचित् तत्र क्षेत्रेऽशिवं भवेत्, आदिशब्दाद् राजद्विष्टादिकं वा भयमुपजायेत, एवमादिभिः कारणैः; अथवा तत्र क्षेत्रे न सुष्ठु वर्षं वर्षितुमारब्धं येन धान्यनिष्पत्तिरुपजायते, ततश्च प्रथममेव 'स्थिता वयम्' इत्युक्ते पश्चादशिवादिकारणे समुपस्थिते यदि गच्छन्ति ततो लोको ब्रूयात्—अहो ! एते आत्मानं सर्वज्ञपुत्रतया ख्यापयन्ति परं न किमपि जानते, मृषावादं वा भाषन्ते, 'स्थिताः स्मः' इति भणित्वा सम्प्रति गच्छन्ति इति कृत्वा । अथाशिवादिकारणेषु सञ्जातेष्वपि तिष्ठन्ति तत आज्ञादयो दोषाः । अपि च 'स्थिताः स्मः' इत्युक्ते गृहस्थाश्चिन्तयेयुः—अवश्यं वर्षं भविष्यति येनैते वर्षारात्रमत्र स्थिताः; ततो धान्यं विक्रीणीयुः गृहं वा छादयेयुः हलादीनि वा संस्थापयेयुः । यत एवमतोऽभिवर्धितवर्षे विंशतिरात्रे गते 'इतरेषु च' त्रिषु चन्द्रसंवत्सरेषु सविंशतिरात्रे मासे गते गृहिज्ञातं कुर्वन्ति ॥ ४२८३ ॥

**एत्थ उ पणगं पणगं, कारणियं जा सवीसती मासो ।**
**सुद्धदसमीठियाण व, आसाढीपुण्णिमोसरणं ॥ ४२८४ ॥**

'अत्र' इति आषाढपूर्णिमायां स्थिताः पञ्चाहं यावद् दिवा संस्तारक-डगलादि गृह्णन्ति, रात्रौ च पर्युषणाकल्पं कथयन्ति, ततः श्रावणबहुलपञ्चम्यां पर्युषणं कुर्वन्ति । अथाषाढपूर्णिमायां क्षेत्रं न प्राप्तास्तत एवमेव पञ्चरात्रं वर्षावासप्रायोग्यमुपधिं गृहीत्वा पर्युषणाकल्पं च कथयित्वा दशम्यां पर्युषणयन्ति । एवं कारणिकं रात्रिन्दिवानां पञ्चकं पञ्चकं च वर्धयता तावद् नेयं यावत् सविंशतिरात्रो मासः पूर्णः । अथवा ते आषाढशुद्धदशम्यामेव वर्षाक्षेत्रे स्थितास्ततस्तेषां पञ्चरात्रेण डगलादौ गृहीते पर्युषणाकल्पे च कथिते आषाढपूर्णिमायां 'समवसरणं' पर्युषणं भवति, एष उत्सर्गः । शेषं कालं पर्युषणमनुतिष्ठतां सर्वोऽप्यपवादः । ◁ अपवादेऽपि सविंशतिरात्राद् मासात् परतो नातिक्रमयितुं कल्पते । यद्येतावत्यपि गते वर्षाक्षेत्रं न लभ्यते ततो वृक्षमूलेऽपि पर्युषणयितव्यम् ▷ ॥ ४२८४ ॥

अथ पञ्चकपरिहाणिमधिकृत्य ज्येष्ठकल्पावग्रहप्रमाणमाह—

**इय सत्तरी जहण्णा, असिती णउई दसुत्तर सयं च ।**
**जति वासति मग्गसिरे, दस राया तिण्णि उक्कोसा ॥ ४२८५ ॥**

'इतिः' उपप्रदर्शने । ये किल आषाढपूर्णिमायाः सविंशतिरात्रे मासे गते पर्युषणयन्ति तेषां सप्ततिदिवसानि जघन्यो वर्षावासावग्रहो भवति, ◁ भाद्रपदशुद्धपञ्चम्या अनन्तरं कार्तिकपूर्णिमायां सप्ततिदिनसद्भावात् । एवं ▷ ये भाद्रपदबहुलदशम्यां पर्युषणयन्ति तेषामशीतिर्दिवसा मध्यमो वर्षाकालावग्रहः, श्रावणपूर्णिमायां नवतिर्दिवसाः, [ श्रावणशुद्धपञ्चम्यां

---

१ °सवणं ताभा० विना ॥ २-३ ◁ ▷ एतदन्तर्गतः पाठः भा० नास्ति ॥ ४ एतदनन्तरं चूर्णौ विशेषचूर्णौ चात्र "सावणसुद्धपंचमीए सयं" इति वर्तते ॥

दिवसशतम्, ] श्रावणबहुलदशम्यां दशोत्तरं दिवसशतं मध्यम एव वर्षाकालावग्रहो भवति । शेषान्तरेषु दिवसपरिमाणं गाथायामनुक्तमपि इत्थं वक्तव्यम्—भाद्रपदामावास्यां पर्युषणे क्रियमाणे पञ्चसप्ततिर्दिवसाः, भाद्रपदबहुलपञ्चम्यां पञ्चाशीतिः, श्रावणशुद्धदशम्यां पञ्चनवतिः, श्रावणामावास्यां पञ्चोत्तरं शतम्, श्रावणबहुलपञ्चम्यां पञ्चदशोत्तरं शतम्, आषाढपूर्णिमायां तु पर्युषिते विंशत्युत्तरं दिवसशतं भवति । एवमेतेषां प्रकाराणामन्यतरेण वर्षावासमेकक्षेत्रे स्थित्वा कार्त्तिकचातुर्मासिकप्रतिपदि निर्गन्तव्यम् । अथ मार्गशीर्षे गाढं वर्षं वर्षति कर्दमजलाकुलाश्च पन्थानः ततोऽपवादेनैकं दशरात्रमवतिष्ठन्ते, अथ तथापि वर्षं नोपरमते ततो द्वितीयं दशरात्रं तत्रासते, अथैवमपि वर्षं न तिष्ठति ततस्तृतीयमपि दशरात्रमासते, एवं त्रीणि दशरात्राण्युत्कर्षतस्तत्र क्षेत्रे आसितव्यम्, मार्गशिरःपौर्णमासीं यावदित्यर्थः । तत ऊर्द्ध्वं यद्यपि कर्दमाकुलाः पन्थानः, वर्षं चागाढमनुपरतं वर्षति, यद्यपि च पानीये प्लवमानैस्तदानीं गम्यते तथाप्यवश्यं निर्गन्तव्यम् । एवं षाण्मासिको ज्येष्ठकल्पावग्रहः सम्पन्नः ॥ ४२८५ ॥

*अथ तमेव षाण्मासिकमाह—*

**काऊण मासकप्पं, तत्थेव ठिताणऽतीते मग्गसिरे ।**
**सालंबणाण छम्मासिओ उ जेट्ठोग्गहो होति ॥ ४२८६ ॥**

यस्मिन् क्षेत्रे आषाढमासकल्पः कृतस्तद् वर्षावासयोग्यम् अन्यच्च तथाविधं क्षेत्रं नास्ति ततो मासकल्पं कृत्वा तत्रैव वर्षावासं स्थितानां ततश्चतुर्मासानन्तरं कर्दम-वर्षादिभिः कारणैरतीते मार्गशीर्षमासे निर्गच्छतां 'सालम्बनानाम्' एवंविधालम्बनसहितानां षाण्मासिको ज्येष्ठावग्रहो भवति, एकक्षेत्रेऽवस्थानमित्यर्थः ॥ ४२८६ ॥

**अह अत्थि पदवियारो, चउपाडिवयम्मि होति निग्गमणं ।**
**अहवा वि अणिंताणं, आरोवण पुव्वनिद्दिट्ठा ॥ ४२८७ ॥**

अथास्ति कर्दम-वर्षादिकारणाभावात् पदविचारः ततश्चतुर्णां मासानां पर्यन्ते या प्रतिपत् तस्यां निर्गमनं कर्त्तव्यम् । अथ ते पदप्रचारसम्भवेऽपि न निर्गच्छन्ति ततोऽनिर्गच्छतां 'पूर्वनिर्दिष्टा' मासकल्पप्रकृते प्रागभिहिता चतुर्लघुकाख्या आरोपणा मन्तव्या ॥ ४२८७ ॥

अथ निर्गतानां सामाचारीमुपदर्शयति—

**पुण्णम्मि णिग्गयाणं, साहम्मियखेत्तवज्जिते गहणं ।**
**संविग्गाण सकोसं, इयरे गहियम्मि गेण्हंति ॥ ४२८८ ॥**

पूर्णे वर्षावासावग्रहे निर्गतानां यत्र साधर्मिकैर्वर्षावासः कृतस्तत् क्षेत्रं वर्जयित्वा अन्येषु ग्राम-नगरादिषूपकरणस्य ग्रहणं भवति । ये संविग्नाः साम्भोगिका असाम्भोगिका वा तेषां यद् वर्षाक्षेत्रं तत् सक्रोशयोजनं परिहृत्य गृह्णन्ति । इतरे—पार्श्वस्थादयस्तेषां यद् वर्षावासक्षेत्रं तत्र तैर्गृहीते उपकरणे पश्चात् संविग्ना गृह्णन्ति, तेषां च क्षेत्रं मासद्वयं न परिह्रियते ॥ ४२८८ ॥

कुतः ? इति चेद् उच्यते—

**वासासु वि गिण्हंती, णेव य णियमेण इतरे विहरंती ।**
**तहियं सुद्धमसुद्धं, गहिए गिण्हंति जं सेसं ॥ ४२८९ ॥**

'इतरे' पार्श्वस्थादयो वर्षास्वपि वस्त्राणि गृह्णन्ति, न च नियमेनैव चतुर्मासानन्तरं ते विहरन्ति, अतस्तैः शुद्धे अशुद्धे वा उपकरणे गृहीते यत् शेषं वस्त्रादिकं श्राद्धाः प्रयच्छन्ति तद् मासद्वयमध्येऽपि गृह्णन्ति ॥ ४२८९ ॥

**सक्खेत्ते परखेत्ते वा, दो मासा परिहरेत्तु गेण्हंति ।**
**जं कारणं ण णिग्गय, तं पि बहिंझोसियं जाणे ॥ ४२९० ॥**

स्वक्षेत्रं—यत्रात्मना वर्षाकल्पः कृतः परक्षेत्रं—यत्रापरे संविग्ना वर्षाकल्पं स्थितास्तत्र स्वक्षेत्रे परक्षेत्रे वा द्वौ मासौ परिहृत्य तृतीयमासि गृह्णन्ति । अथ चतुर्मासानन्तरं कर्दमादिभिः कारणैर्न निर्गतास्ततः 'यं' यावन्तं कालं कारणमपेक्ष्य न निर्गतास्तमपि कालं 'बहिर्जोषितं' बहिःक्षिप्तं 'जानीयाद्' गणयेत्, तावन्तमपि कालं बहिर्निर्गता इव मन्तव्या इति भावः ॥ ४२९० ॥

कैः पुनः कारणैर्न निर्गताः ? इत्याह—

**चिक्खल्ल-वास-असिवादिएसु जहिँ कारणेसु उ ण णिंति ।**
**दिंते पडिसेधेत्ता, गेण्हंति उ दोसु पुण्णेसु ॥ ४२९१ ॥**

चिक्खलः—कर्दमस्तदाकुलाः पन्थानः, वर्षं वा नोपरमते, अशिव-दुर्भिक्षादीनि वा बहिरुपस्थितानि, एवमादिभिः कारणैर्यत्र न निर्गच्छन्ति तत्र यदि केचिद् वस्त्रादिना निमन्त्रयन्ति तदा तान् ददतः प्रतिषिध्य द्वयोस्तु मासयोः पूर्णयोर्वस्त्रादिकं गृह्णन्ति ॥ ४२९१ ॥

कुतः ? इत्याह—

**भावो उ णिग्गतेहिं, वोच्छिज्जइ देंति ताइँ अण्णस्स ।**
**अत्तट्ठेति व ताइं, एमेव य कारणमणिंते ॥ ४२९२ ॥**

'ये साधव इह क्षेत्रे वर्षावासं स्थितास्तेषां वस्त्राणि दास्यामः' इत्येवं यः श्राद्धानां भावः स निर्गतेषु साधुषु व्यवच्छिद्यते, यानि वा वस्त्राणि दातुं सङ्कल्पितानि तानि 'अन्यस्य' पार्श्वस्थादेः प्रयच्छन्ति स्वयमेव वा 'आत्मार्थयन्ति' परिभुञ्जत इत्यर्थः । अथ चतुर्मासानन्तरं कारणमपेक्ष्य न निर्गच्छन्ति ततो मासद्वयमध्ये श्राद्धानामभ्यर्थनायामप्यगृह्णानेष्वेवमेव भावो व्यवच्छिद्यते, अतो द्वौ मासौ परिहृत्य ग्रहीतव्यम् । कारणे तु मासद्वयमध्येऽपि गृह्णीयात् ॥ ४२९२ ॥

तदेव दर्शयति—

**गच्छे सबाल-वुड्ढे, असती परिहर दिवड्ढमासं तु ।**
**पणतीसा पणुवीसा, पण्णरस दसेव एक्कं च ॥ ४२९३ ॥**

सबाल-वृद्धे गच्छे वस्त्राभावे शीतं सोढुमसमर्थे सार्धं मासं 'परिहर' वर्जय, परिहृत्य च तत ऊर्ध्वं गृह्णीयात् । अथ सार्धमासमपि परिहर्तुं न शक्तस्ततः पञ्चत्रिंशतं दिनानि परिहर, अथैवमपि गच्छो न संस्तरति ततः पञ्चविंशतिदिनानि, तथाप्यसंस्तरणे पञ्चदश दिनानि, तथाप्यशक्तौ दश दिवसान्, तथाप्यसामर्थ्ये एकमपि दिनं परिहरेदिति सङ्ग्रहगाथासमासार्थः ॥ ४२९३ ॥

अथैनामेव विवृणोति—

**बाल-ऽसहु-वुड्ढ-अतरंत-खमग-सेहाउलम्मि गच्छम्मि ।**

१ °गृह्णतामेवमेव भा० ॥ २ दिनानि, त° कां० ॥

**सीतं अविसहमाणे, गेण्हंति इमाएँ जयणाए ॥ ४२९४ ॥**

तथाविधवस्त्राभावाद् बाला-ऽसहिष्णु-वृद्ध-ग्लान-क्षपक-शैक्षाकुले गच्छे शीतम् 'अविषहमाणे' सोढुमशक्ते साधवोऽनया यतनया स्वक्षेत्रे परक्षेत्रे वा वस्त्राणि गृह्णन्ति ॥ ४२९४ ॥

**पंचूणे दो मासे, दसदिवसूणे दिवड्ढमासं वा ।**
**दस-पंचऽधियं मासं, पणुवीसदिणे व वीसं वा ॥ ४२९५ ॥**
**पन्नरस दस य पंच व, दिणाणि परिहरिय गेण्ह एगं वा ।**
**अहवा एकेक्कदिणं, अउणट्ठिदिणाइँ आरब्भ ॥ ४२९६ ॥**

आगाढे कारणे पञ्चभिर्दिवसैरूनौ द्वौ मासौ परिहृत्य वस्त्रं ग्रहीतव्यम् । अथ तावन्तं कालं यावद् बाल-वृद्धादयः शीतेन परिताप्यमाना न संस्तरन्ति ततो दशदिवसोनौ द्वौ मासौ परिहृत्य वस्त्रं ग्राह्यम् । एवं सार्धमासं दशदिवसाधिकं वा पञ्चदिवसाधिकं वा अन्यूनाधिकं वा मासं पञ्चविंशतिदिनानि विंशतिदिनानि पञ्चदशदिनानि दशदिनानि पञ्च वा दिनानि यथाक्रमं परिहृत्य वस्त्रं गृह्णीयात् । अथ पञ्च दिवसानपि वस्त्राभावे बाल-वृद्धादयो नात्मानं निर्वाहयितुमीशास्ततश्चत्वारि त्रीणि द्वे यावदेकमपि दिनं परिहृत्य ग्रहीतव्यम् । अथवा एकैकदिनहानिरत्र द्रष्टव्या, तद्यथा—यत्र वर्षावासं स्थितास्तत्र षष्टिदिनानि परिहृत्य उत्सर्गतो वस्त्रग्रहणं कर्त्तव्यम्, कारणे पुनरेकोनषष्टिदिनान्यारभ्यैकैकदिनं हापयता तावद् वक्तव्यं यावदेकमपि दिनं परिहृत्य वस्त्रग्रहणं कार्यम् ॥ ४२९५ ॥ ४२९६ ॥

व्याख्यातं प्रथमसमवसरणसूत्रम्, सम्प्रति द्वितीयसमवसरणसूत्रं व्याख्याति—

**बिइयम्मि समोसरणे, मासा उक्कोसगा दुवे होंति ।**
**ओमन्थगपरिहाणीय पंच पंचेव य जहण्णे ॥ ४२९७ ॥**

द्वितीयं समवसरणं नाम—ऋतुबद्धकालः, तत्र मासकल्पेन स्थिता वस्त्रादिकमुपकरणमुत्पादयन्ति, मासकल्पानन्तरं च तत्र द्वौ मासावुत्कर्षतः परिहर्त्तव्यौ भवतः । कारणे तु तथैवावाङ्मुखपरिहाण्या पञ्च पञ्च दिनानि हापयता तावद् नेयं यावद् जघन्यत एकं दिनं परिहर्त्तव्यम् ॥ ४२९७ ॥ अमुमेवार्थं स्फुटतरमाह—

**अपरिहरंतस्सेते, दोसा ते चेव कारणे गहणं ।**
**बाल-वुड्ढाउले गच्छे, असती दस पंच एक्को य ॥ ४२९८ ॥**

यत्र क्षेत्रे मासकल्पः कृतस्तत्र द्वौ मासावपरिहरतस्त एव दोषा मन्तव्या ये वर्षावासे मासद्वयमपरिहरत उक्ताः । कारणे तु ग्रहणं कर्त्तव्यम् । कथम्? इत्याह—बाल-वृद्धाकुले गच्छे वस्त्राभावे पञ्चकपरिहाण्या एकैकपरिहाण्या वा तावद् वक्तव्यं यावद् दश वा पञ्च वा एको वा दिवसः परिहर्त्तव्यः । यत्र संविग्नैर्मासकल्पो वर्षाकल्पो वा कृतस्तत्र मासद्वयादुपरि पञ्चसु दिवसेष्वपूर्णेष्वन्येषां न कल्पते किञ्चिदपि ग्रहीतुम् ॥ ४२९८ ॥

१ °म ॥ ४२९५ ॥ ४२९६ ॥ सूत्रम्—**कप्पइ निग्गंथाण वा निग्गंथीण वा दोच्चसमोसरणुद्देसपत्ताइं चेलाइं पडिगाहित्तए ॥ अत्र भाष्यम्—बिइयम्मि मा० । चूर्णौ विशेषचूर्णौ** चापीदं सूत्रं पूर्वमुपन्यस्तमपि ( दृश्यतां पत्र ११८९ टिप्पणी १ ) पुनरत्राप्युपक्षिप्तं वर्तते ॥

यो गृह्णाति तस्य दोषानुपदर्शयति—

**करणाणुपालयाणं, भगवतो आणं पडिच्छमाणाणं ।**
**जो अंतरा उ गेण्हति, तट्ठाणारोवणमदत्तं ॥ ४२९९ ॥**

करणस्य—पिण्डविशुद्ध्यादेः अनु—पश्चात् पूर्वेक्तर्षिपरम्पराक्रमेण पालकाः करणानुपालकाः तेषाम्, करणस्य च चरणाविनाभावित्वात् चरणानुपालकानामित्यपि द्रष्टव्यम्, एतेन शीतलविहारितादोषस्तेषां परिहृतो भवति; 'भगवतः' वर्द्धमानस्वामिनो या आज्ञा तां तथेति प्रतिपत्त्या प्रतीच्छताम्, अनेन यथाच्छन्दतादोषस्तेषां नास्तीत्युक्तं भवति; एवंविधानां साधूनां क्षेत्रे 'अन्तरा' तैरगृहीते उपकरणे यो वस्त्रादि गृह्णाति तस्य 'तत्स्थानारोपणा' स्वस्थानप्रायश्चित्तम्, तद्यथा—उत्कृष्टे चतुर्लघवः, मध्यमे मासिकम्, जघन्ये पञ्चकम्; सूत्रादेशेन वा साधर्मिकस्तैन्यमिति कृत्वाऽनवस्थाप्यम् । "अदत्तं" ति भगवता नानुज्ञातमिति कृत्वा तीर्थकरादत्तमपि भवति ॥ ४२९९ ॥

**उवरिं पंचमपुण्णो, गहणमदत्तं गत त्ति गेण्हंति ।**
**अणपुच्छ दुपुच्छा वा, तं पुण्णो गत त्ति गेण्हंति ॥ ४३०० ॥**

परक्षेत्रे द्वयोर्मासयोरुपरि पञ्चसु दिनेष्वपूर्णेषु यदि ग्रहणं करोति तदा अदत्तादानदोषः प्रसज्यते । अथ जानन्ति गता अन्यदेशं क्षेत्रस्वामिनस्ततोऽपूर्णेष्वपि पञ्चरात्रिन्दिवेषु गृह्णन्ति । [1] अथ शङ्कितं ततो न गृह्णन्ति । [2] अथ ते परदेशं न गतास्ततो यदनापृच्छया वा दुःपृच्छया [1] वा वस्त्रं गृह्णन्ति ततस्तथैवादत्तादानदोषं प्राप्नुवन्ति । यत एवमतः 'तद्' वस्त्रादिकमुपकरणं 'गता निःशङ्कितमन्यदेशं क्षेत्रिकाः' इति विज्ञाय पूर्णे मासद्वये गृह्णन्ति । अत्रानापृच्छा नाम—'क्षेत्रिकैर्वस्त्रग्रहणं कृतं न वा' इति न पृच्छति, दुःपृच्छा पुनः—अविधिना पृच्छनं ॥ ४३०० ॥ सा चेयम्—

**गोवाल-वच्छवाला-कासग-आदेस-बाल-वुड्ढाई ।**
**अविधी विही उ सावग-महतर-धुवकम्मि-लिंगत्था ॥ ४३०१ ॥**

ये गोपाल-वत्सपाल-कर्षकाः प्रभाते निर्गताः सन्तो भूयः प्रदोषे ग्रामं प्रविशन्ति, ये वा तत्रादेशाः—प्राघूर्णका अन्यग्रामादायाताः, ये वा बाल-वृद्धादयोऽत्यन्तमुग्धा विस्मरणशीलाश्च तान् पृच्छति—किं श्रमणैः कृतं वस्त्रग्रहणं न वा ? इति; एषा अविधिपृच्छा । विधिपृच्छा पुनरियम्—श्रावका ग्राममहत्तरा वा प्रच्छनीया येषु साधूनां वस्त्रग्रहणसम्भवो भवति, ये वा ध्रुवकार्मिकाः—लोहकार-रथकारादयः ये वा लिङ्गस्थाः—लिङ्गधारिणस्तान् पृच्छति 'वस्त्रादिग्रहणं साधुभिः कृतं न वा ?' इति ॥ ४३०१ ॥ परक्षेत्रे वस्त्रग्रहणविधिमभिधित्सुराह—

**गंतूण पुच्छिऊण य, तेसिं वयणे गवेसणा होति ।**
**तेमाऽऽगतेसु सुद्धेसु जत्तियं सेस अग्गहणं ॥ ४३०२ ॥**

क्षेत्रस्वामिनां समीपे गत्वा विधिवद् आपृच्छ्य तेषां साधूनां 'वचने' अनुज्ञायां तदीये क्षेत्रे वस्त्रगवेषणा कर्त्तव्या भवति । अथ न ज्ञायन्ते ते कुत्रापि गता अमीभिश्च साधुभिस्तत्र

१-२ [1] [2] एतच्चिह्नान्तर्गतः पाठः भा० कां० एव वर्त्तते ॥

वस्त्रग्रहणं कियदपि कृतं ते च क्षेत्रस्वामिन आगताः ततस्तेषु 'शुद्धेषु' विधिना आगतेषु यावद् वस्त्रादि गृहीतं तावत् तेषां प्रत्यर्पयितव्यम्, शेषस्य ◁ [1]चोपकरणस्य ▷ ग्रहणं न कर्त्तव्यम् ॥ ४३०२ ॥

इदमेव सविशेषमाह—

**उप्पन्न कारणाऽऽगंतु पुच्छिउं तेहि दिण्ण गेण्हंति ।**
**तेसाऽऽगयेसु सुद्धेसु जत्तियं सेस अग्गहणं ॥ ४३०३ ॥**

बाल-वृद्ध-शैक्षादीनां शीतपरितापनालक्षणे वस्त्रग्रहणकारणे उत्पन्ने स्वक्षेत्रे वस्त्रदुर्लभतां सम्यग निश्चित्य परक्षेत्रे वस्त्रग्रहणं कर्तुकामाः क्षेत्रस्वामिनामन्तिके गत्वा पृष्ट्वा च तैः 'दत्तम्' अभ्यनुज्ञातं यावत्प्रमाणं वस्त्रादि तावदेवं[2] गृह्णन्ति, नातिरिक्तम् । अथ न ज्ञायन्ते ते कुत्रापि गतास्ततो विधिपृच्छया उपकरणे गृहीते यदि ते क्षेत्रिकाः शुद्धा आगच्छेयुः ततः शुद्धेषु तेष्वागतेषु ततो यावद् गृहीतं तावत् तेषां प्रत्यर्पयन्ति, शेषस्य चाग्रहणम् ॥ ४३०३ ॥

कथं पुनस्ते क्षेत्रिका आगताः शुद्धा अशुद्धा वा भवन्ति ? इति उच्यते—

**पडिजग्गंति गिलाणं, ओसहहेऊहि अहव कज्जेहिं ।**
**एतेहिं होंति सुद्धा, अह संखडिमादि तह चेव ॥ ४३०४ ॥**

क्षेत्रिका मासद्वये पूर्णेऽपि अमीभिः कारणैर्न समागन्तुं[3] शक्नुयुः—ग्लानं प्रतिजाग्रतः स्थिताः, ग्लानस्य वा औषधम्—अगदं तन्मीलनहेतोः स्थिताः, कुल-गण-सङ्घकार्येषु वा व्यापृताः; एवमादिभिः कारणैरनागच्छन्तः शुद्धाः । अथ सङ्खडिनिमित्तं स्थिता व्रजिकादिषु वा प्रतिबध्यमाना आगताः ततः 'तथैव' मासद्वयं यावत् तदीयं क्षेत्रम्, उपरि तु पञ्चरात्रं न ते प्रभवः, ततो यत् तैस्तत्र क्षेत्रे गृहीतं तद् गृहीतमेव, न क्षेत्रिकाणां प्रयच्छन्ति ॥ ४३०४ ॥

अमूनि तु विशुद्धकारणानि—

**तेणभय सावयभया, वासेण णदीय वा वि(नि)रुद्धाणं ।**
**दायव्वमदेंताणं, चउगुरु तिविहं च णवमं वा ॥ ४३०५ ॥**

स्तेनभयाद्वा ◁ [4]श्वापदभयाद्वा ▷[5] वर्षेण वा नद्या वा निरुद्धानां चिरादागमनमभूत् ततो यद् गृहीतं तत् तेषामागतानां दातव्यम् । अथ न ददति ततश्चतुर्गुरुकम्, उपकरणनिष्पन्नं वा 'त्रिविधं' पञ्चक-मासिक-चतुर्लघुकलक्षणम्, 'नवमं वा' सूत्रादेशेनानवस्थाप्यम् ॥४३०५॥

**परदेसगते णाउं, सयं व सेज्जातरं व पुच्छित्ता ।**
**गेण्हंति असढभावा, पुण्णेसु तु दोसु मासेसु ॥ ४३०६ ॥**

स्वयमपि क्षेत्रिकान् परदेशगतान् ◁ ज्ञात्वा शय्यातरं वा पृष्ट्वा परदेशगतान् ▷ निश्चित्य द्वयोर्मासयोः पूर्णयोः 'अशठभावाः' शुद्धपरिणामा गृह्णन्ति ॥ ४३०६ ॥

**विइयपदमणाभोगे, सुद्धा देंता अदेंते ते चेव ।**
**आउट्टिया गिलाणादि जत्तियं सेस अग्गहणं ॥ ४३०७ ॥**

---

१ ◁ ▷ एतन्मध्यगतः पाठः भा० कां० एव वर्त्तते ॥ २ °व ग्रहीतव्यम्, नाति° कां० ॥ ३ °ता: समाग° त० डे० ॥ ४-५ ◁ ▷ एतन्मध्यगतः पाठः भा० कां० एव वर्त्तते ॥

द्वितीयपदमत्रोच्यते—'अनाभोगो नाम' 'किमत्र साधवो वर्षाकल्पं मासकल्पं वा कृतवन्तो न वा?' इति न सम्यक् परिज्ञातं ततः परक्षेत्रेऽपि गृह्णीयुः, पश्चाद् ज्ञाते क्षेत्रिकाणां प्रयच्छन्तः शुद्धाः, अप्रयच्छतां त एव दोषाः। अथ 'आकुट्टिकया' आभोगेन गृहीतं परं ग्लानादीनामर्थे ततो यावत् तेषामुपयुज्यते तावद् गृह्णन्ति, 'शेषम्' अतिरिक्तं न गृह्णन्ति ॥ ४३०७ ॥

॥ समवसरणप्रकृतं समाप्तम् ॥

---

## यथारत्नाधिकवस्त्रग्रहणप्रकृतम्

सूत्रम्—

**कप्पइ निग्गंथाण वा निग्गंथीण वा अहाराइणियाए चेलाइं पडिग्गाहित्तए १६ ॥**

अस्य सम्बन्धमाह—

**दिट्ठं वत्थग्गहणं, नेसिं परिभायणे इमं सुत्तं।**
**अविणय असंविभागा, अधिकरणादी य णेवं तु ॥ ४३०८ ॥**

द्वितीयसमवसरणे दृष्टं तावद् वस्त्रग्रहणम्। सम्प्रति तेषां वस्त्राणां 'परिभाजने' विभज्य प्रदाने यो विधिस्तदभिधायकमिदं सूत्रमारभ्यते। इत्थं विभज्य प्रदाने किं प्रयोजनम्? इति चेद् अत आह—'एवं' यथारत्नाधिकं वस्त्राणां विभज्य दानेऽविनयोऽसंविभागोऽधिकरणादयश्च दोषा न भवन्तीति ॥ ४३०८ ॥

अनेन सम्बन्धेनायातस्यास्य व्याख्या—कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा 'यथारात्निकं' यो यो रात्निकः—भावरत्नैरधिकस्तदनतिक्रमेण चेलानि प्रतिग्रहीतुमिति सूत्रार्थः ॥

अथ निर्युक्तिविस्तरः—

**संघाडएण एकतो, हिंडंती वंदएण जयणाए।**
**साधारणऽणापुच्छा, उ अदत्तं एकओ भागा ॥ ४३०९ ॥**

सङ्घाटकेन 'एकतः' एकस्यां दिशि साधवो वस्त्रग्रहणार्थं हिण्डन्ते। अथ सङ्घाटकेन न प्राप्यते ततो वृन्देनापि यतनया पर्यटन्ति। अथ 'साधारणं' बहूनामाचार्याणां सामान्यं तत् क्षेत्रं ततो यदि तत्रापरेषामाचार्याणामनापृच्छया गृह्णन्ति तदा "अदत्तं" ति साधर्मिकस्तैन्यं भवति, अतस्तानापृच्छ्य ◁ ग्रहीतव्यानि, ▷ गृहीत्वा च तेषां वस्त्राणाम् 'एकतः' एकसदृशा भागाः कर्त्तव्या न विसदृशा इति सङ्ग्रहगाथासमासार्थः ॥ ४३०९ ॥ साम्प्रतमेनामेव विवृणोति—

**निस्साधारण खेत्ते, हिंडंतो चेव गीतसंघाडो।**
**उप्पादयते वत्थे, असती तिगमादिवंदेणं ॥ ४३१० ॥**

'निस्साधारणे' एकाचार्यप्रतिबद्धे क्षेत्रे गीतार्थसङ्घाटको भिक्षां हिण्डमान एव वस्त्राण्युत्पाद-

---

१ °रणाऽणपु° ताभा०॥ २ ◁ ▷ एतन्मध्यगतः पाठः भा० कां० एव वर्त्तते ॥

वति । अथ सङ्घाटकेन हिण्डमाना न प्राप्नुवन्ति ततः 'त्रिकादिवृन्देन' त्रिचतुःपञ्चादिसाधुसमूहेन पर्यटन्त उत्पादयन्ति ॥ ४३१० ॥ ◁ साधारणक्षेत्रे पुनरयं विधिः—▷

**दुगमादीसामण्णे, अणपुच्छा तिविह सोधि णवमं वा ।**
**संभोइयसामण्णे, तह चेव जहेकगच्छम्मि ॥ ४३११ ॥**

द्विकादीनां–द्वित्रिप्रभृतीनामाचार्याणां सामान्ये क्षेत्रे तेषामनापृच्छया गृह्णतस्त्रिविधा 'शोधिः' प्रायश्चित्तम्—जघन्ये पञ्चकम्, मध्यमे मासिकम्, उत्कृष्टे चतुर्लघवः; 'नवमं वा' सूत्रादेशेनानवस्थाप्यम् । ते चाचार्याः परस्परं ◁ साम्भोगिका असाम्भोगिका वा । तत्र ▷ साम्भोगिकसामान्ये क्षेत्रे वस्त्रग्रहणे तथैव विधिरवसातव्यो यथा एकस्मिन् गच्छे ◁ सङ्घाटकादिक्रमेण ▷ अनन्तरगाथायामुक्तः ॥ ४३११ ॥ ◁ असाम्भोगिकेषु विधिमाह—▷

**अमणुण्णकुलविरेगे, साही पडिवसभ-मूलगामे य ।**
**अहवा जो जं लाभी, ठायंति जधासमाधीए ॥ ४३१२ ॥**

अमनोज्ञाः–असाम्भोगिकास्तैः सह यत् क्षेत्रं साधारणं तत्र कुलादीनां विरेकः–विभजनं कर्त्तव्यम्, यथा—एतेषु कुलेषु युष्माभिर्वस्त्राणि ग्रहीतव्यानि, एतेषु पुनरस्माभिः; यद्वाऽस्यां साहिकायां-गृहपङ्क्तिरूपायां भवद्भिः, अस्यां पुनरस्माभिः; अथवा प्रतिवृषभग्रामेषु यूयं ग्रहीष्यथ, वयं मूलग्रामे ग्रहीष्यामः; मूलग्रामे वा यूयं, वयं प्रतिवृषभग्रामेषुः अथवा यो यद् वस्त्रं कुलादौ पर्यटन् "लाभी" लप्स्यते तेन तस्य ग्रहणं कर्त्तव्यम् । एतेषामन्यतमेन प्रकारेण व्यवस्थां स्थापयित्वा यथासमाधिना तत्र तिष्ठन्ति ॥ ४३१२ ॥

एवमसाधारणे साधारणे वा क्षेत्रे वस्त्राणि गृहीत्वा किं कर्त्तव्यम् ? इत्याह—

**वत्थेहिँ आणितेहिं, देंति अहारातिणिं तहिं वसभा ।**
**अदाणे गुरुणो लहुगा, सेसे लहुओ इमे होंति ॥ ४३१३ ॥**

वस्त्रेषु समानीतेषु ये वृषभास्ते यथारत्नाधिकं तत्र वस्त्राणि प्रयच्छन्ति । यदि तत्र गुरूणां प्रथमतो वस्त्रदानं न कुर्वन्ति तदा चतुर्लघुकाः । शेषाणां यथारत्नाधिकं विभज्य न प्रयच्छन्ति लघुमासः । ते च रत्नाधिकाः 'इमे' वक्ष्यमाणा भवन्ति ॥ ४३१३ ॥

तत्र गुरूणां यादृशानि वस्त्राणि दीयन्ते तदेतत् प्रतिपादयति—

**विदु क्खमा जे य मणाणुकूला, जे योवजुज्जंति असंथरंते ।**
**गुरुस्स साणुग्गहमप्पिणित्ता, भाएंति सेसाणि उ झंझहीणा ॥ ४३१४ ॥**

साधुभिर्यथाविधि गृहीत्वा भूयांसि वासांसि वृषभाणां समर्पितानि, ततो वृषभाः "विदु" त्ति 'विदित्वा' सुन्दरा-ऽसुन्दरताविभागं विज्ञाय यानि 'क्षमाणि' दृढानि यानि च 'मनोऽनुकूलानि' गुरूणां मनसोऽभिरुचितानि यानि चाऽसंस्तरति गच्छे गुरुपरिभुक्तान्यपि शेषसाधूनामुपयुज्यन्ते तानि गुरोः 'सानुग्रहं' सविशेषं यथा भवति एवमर्पयित्वा शेषाणि वस्त्राणि झञ्झा–कलहस्तेन हीनाः–विरहिताः सन्तो यथारत्नाधिकं परिभाजयन्ति ॥ ४३१४ ॥

अथ तानेव रत्नाधिकानाह—

१-२ ◁ ▷ एतन्मध्यगतः पाठः भा० कां० एव वर्त्तते ॥ ३-४ ◁ ▷ एतदन्तर्गतः पाठः भा० नास्ति ।

**उवसंपज्ज गिलाणे, परित्त सुत सोअव्वए य जाती य ।**
**तव भासा लद्धीए, ओमे दुविहस्स अरिहा उ ॥ ४३१५ ॥**

"उवसंपज्ज" त्ति यः तत्प्रथमतया उपसम्पदं प्रतिपद्यते । 'ग्लानः' मन्दः, स च द्विधा—आगाढोऽनागाढश्च । 'परीत्तः' परिमितोपधिः । "सुत" त्ति बहुश्रुतः । "सोअव्वए" त्ति यो व्याख्यानमण्डल्या उत्थितानां सूत्रार्थे श्रोतव्ये ज्येष्ठतया व्यवह्रियते । "जाइ" त्ति जातिस्थविरः षष्टिवर्षपर्यायः । "तव" त्ति तपस्वी । "भास" त्ति यः अभाषिकः—तद्देशभाषायामनभिज्ञः । "लद्धीए" त्ति यस्य लब्ध्या वस्त्राणि लभ्यन्ते । एतेषामुपसम्पद्यमानादीनां यथाक्रमं दत्त्वा ततो यो यः पर्यायरत्नाधिकः स स प्रथमं गृह्णाति, "ओमि" त्ति अवमरात्निकः पश्चाद् गृह्णाति । एते यथाक्रमं 'द्विविधस्य' ओघोपधेरौपग्रहिकोपधेश्च ग्रहणे 'अर्हाः' योग्या मन्तव्याः ॥ ४३१५ ॥

**एएसि परूवणया, जा य विणा तेहिँ होति परिहाणी ।**
**अहवा एक्केक्कस्स उ, अद्धोकंतीकमो होति ॥ ४३१६ ॥**

'एतेषाम्' उपसम्पद्यमानादीनां 'प्ररूपणा' व्याख्या कर्तव्या, सा चानन्तरमेव कृता । यथे-तेषां यथाक्रमं वृषभा न प्रयच्छन्ति ततो या तेषां 'तैः' वस्त्रैर्विना 'परिहाणिः' संयमविराधनादिका भवति तन्निष्पन्नं प्रायश्चित्तम् । अथवा 'एकैकस्य' उपसम्पद्यमानादेः प्रत्येकं ग्लानादिविषयोऽयमर्द्धापक्रान्तिक्रमो भवति ॥ ४३१६ ॥ तद्यथा—

**उवसंपज्ज गिलाणो, अगिलाणो वा वि दोण्णि वि गिलाणा ।**
**तत्थ वि य जो परित्तो, एस गमो सेसगेसुं पि ॥ ४३१७ ॥**

उपसम्पद्यमानो द्विविधः—ग्लानोऽग्लानश्च । तत्र यो ग्लानस्तस्य दातव्यम् । अथ द्वावपि ग्लानावग्लानौ वा ततो यस्तत्र परीत्तोपधिस्तस्मै दातव्यम् । एवमेषः 'गमः' प्रकारः 'शेषेष्वपि' बहुश्रुतादिपदेषु मन्तव्यः, तद्यथा—द्वावपि परीत्तोपधी अपरीत्तोपधी वा ततो यो बहुश्रुतस्तस्मै देयम् । अथ द्वावपि बहुश्रुतौ ततो यश्चिन्तनिकाकारकस्तस्य दातव्यम् । अथ द्वावपि चिन्तनिकाकारकौ ततो यस्तत्र जातिस्थविरस्तस्य दातव्यम् । अथ द्वावपि जातिस्थविरौ ततो यस्तपस्वी तस्य दातव्यम् । अथोभावपि तपस्विनौ ततो योऽभाषिकस्तस्मै दातव्यम् । अथ द्वावप्यभाषिकौ भाषिकौ वा ततो यो लब्धिमान् तस्मै प्रदातव्यम् ॥ ४३१७ ॥

प्रकारान्तरेण यथारत्नाधिकपरिपाटीमाह—

**आयरिए य गिलाणे, परित्त पूया पवत्ति थेर गणी ।**
**सुत भासा लद्धीए, ओमे परियागरातिणिए ॥ ४३१८ ॥**

आचार्यस्य पूर्वं विशिष्टानि वस्त्राणि दत्त्वा ततो ग्लानस्य दातव्यानि । ततः परीत्तोपधेः, ततः "पूय" त्ति चूर्ण्यभिप्रायेण 'पूजनार्हस्य' उपाध्यायस्य बृहद्भाष्याभिप्रायेण तु 'पूजना-

१ "पूयणारिहस्स उवज्झायस्स" इति चूर्णौ विशेषचूर्णौ चापि पाठः ॥

२ "अथवा अण्णा वि इमा, अधरातिणियाए होति परिवाडी । आयरिए य गिलाणे, परित्त पुज्जे गुरूणं च ॥ पूताऽऽयरियपि-माती, ततो पवत्ती य थेर गण गच्छे । सुत भासा लद्धीए, तोमे परिआगरायणिये ॥" बृहद्भाष्यम् ॥

र्हस्य' गुरुसम्बन्धिपितृ-पितृव्यादेः, ततः प्रवर्त्तिनः, तदनन्तरं स्थविरस्य, ततः "गणि" त्ति गणावच्छेदिकस्य, ततः श्रुतसम्पन्नस्य, ततोऽभाषिकस्य, ततो लब्धिमतो यथाक्रमं दातव्यम् । अर्द्धापक्रान्तिचारणिका प्राग्वत् कर्त्तव्या । तदनन्तरं यो यः पर्यायरात्निकस्तस्य तस्य प्रथमम्, अवमरात्निकस्य तु पश्चाद् यथाक्रमं दातव्यम् ॥ ४३१८ ॥ एवं तावत् सङ्घाटकेनानीतानां विधिरुक्तः । अथ वृन्देनानीतानां यो विधिस्तमभिधित्सुराह—

**णेगेहिँ आणियाणं, परित्त परियाग खुभिय पिंडेत्ता ।**
**आवलिया मंडलिया, लुद्धस्स य सम्मता अक्खा ॥ ४३१९ ॥**

अनेकैः साधुभिरानीतानां वस्त्राणां परिभाजने विधिरुच्यते—आचार्यादिक्रमेण परीत्तोपधीनां यावद् दत्त्वा ततो ये[1] पर्यायरात्निकास्तेषामहिण्डमानानामपि प्रथमतो दातव्यम् । तत्र च यैस्तानि वस्त्राणि समानीतानि ते 'पिण्डित्वा' सम्भूय 'क्षुभितं' क्षोभं कुर्वीरन्, कलहमिति यावत् । कश्चित्तु ब्रूयात्—आवलिकया मण्डलिकया वा विभजनं विधीयताम् । "लुद्धस्स य सम्मता अक्ख" त्ति कस्यापि पुनर्लुब्धस्याक्षान् पातयित्वा वस्त्रविभजनमभिमतम् । एष सङ्ग्रहगाथासंक्षेपार्थः[2] ॥ ४३१९ ॥ साम्प्रतमेनामेव विवरीषुराह—

**गेण्हंतु पूया गुरवो जदिट्ठं, सच्चं भणामऽम्ह वि एयदिट्ठं ।**
**अणुण्हसंवट्टियऽक्कसंगा, गिण्हंति जं अन्नि न तं सहामो ॥ ४३२० ॥**

अहिण्डमानानां वस्त्रेषु दीयमानेषु ये वस्त्राणामानेतारस्ते ब्रवीरन्—यद् 'इष्टं' मनोऽनुकूलं वस्त्रं गुरवो गृह्णन्ति तत् ते सकलगच्छस्वामितया पूज्या इति कृत्वा गृह्णन्तु, यद् गुरूणामुत्कृष्टं वस्तु दीयते तत् 'सत्यम्' अवितथमिति वयमपि भणामः, न केवलं वचसैव भणामः किन्तु मनसाऽप्यस्माकमेतदिष्टमेव, परमनुष्णेन—भिक्षापरिभ्रमणाभावादुष्णलगनाभावेन संवर्त्तितानि—वर्त्तुलीभूतानि अत एवाकर्कशानि अङ्गानि—पाणि-पाद-पृष्ठोदरप्रभृतीनि येषां तेऽनुष्णसंवर्त्तिताकर्कशाङ्गा एवंविधाः सन्तो यद् 'अन्ये' अहिण्डमानाः प्रथमं गृह्णन्ति न तद् वयं सहामहे ॥ ४३२० ॥

**आगंतुगमादीणं, जइ दायव्वाइँ तो किणा अम्हे ।**
**कम्मारभिक्खुयाणं, गाहिज्जामो गइममग्घं ॥ ४३२१ ॥**

आगन्तुकाः—उपसम्पत्तारस्तेषाम् आदिशब्दाद् ग्लानादीनां च यदि दातव्यानि वस्त्राणि तत "किण" त्ति केन कारणेन वयं 'कर्मकारभिक्षुकाणां' देवद्रोणीवाहकभिक्षुविशेषाणां गतिम् 'अश्लाघ्यां' निन्दनीयां ग्राह्यामहे ? । किमुक्तं भवति ?—'यदि नामास्मदानीतानां वस्त्राणामेते आगन्तुकादयः स्वामिभावं भजन्ते ततः किमेवं वयं देवद्रोणीवाहकभिक्षुकवद् मुधैव वस्त्राद्यानयनकर्म कार्यामहे ?' ◁ इति वस्त्राण्यानेतारश्चिन्तयेयुः ॥ ४३२१ ॥ ततः—▷[3]

**विरिच्चमाणे अहवा विरिक्के, खोभं विदित्ता बहुगाण तत्थ ।**
**ओमेण कारिंति गुरू विरेगं, विमज्झिमो जो व तहिं पहू य ॥ ४३२२ ॥**

एव 'विरिच्यमाने' विभज्यमानेऽथवा 'विरिक्ते' विभक्ते उपकरणे बहूनामनन्तरोक्तं क्षोभं

१ °येऽहिण्डमानाः पर्यायरात्निकास्तेषां दात° भा० ॥ २ °समासार्थः कां० ॥ ३ ◁ ▷ एतच्चिह्नान्तर्गतः पाठः भा० नास्ति ॥

विदित्वा यस्तत्र 'अवमः' सर्वेषामपि पर्यायलघुः यो वा विमध्यमोऽपि तत्र वस्त्रविभजने 'पटुः' कुशलस्तेन गुरवो विभजनं कारयन्ति ॥ ४३२२ ॥ अथ कोऽपि लुब्ध एवमप्यपरितुष्यन् ब्रूयात्—आवलिकया मण्डलिकया वा वस्त्राणि विभज्यन्ताम्; ततः को विधिः ? इत्याह—

आवलियाएँ जतिट्ठं, तं दाऊणं गुरूण तो सेसं ।
गेण्हंति कमेणेव उ, उप्परिवाडी न पूयेंति ॥ ४३२३ ॥
मंडलियाएँ विसेसो, गुरुगहिते सेसगा जहावुड्ढं ।
भाए समे करेत्ता, गेण्हंति अणंतरं उभओ ॥ ४३२४ ॥

आवलिका नाम—ऋज्वायतश्रेण्या वस्त्राणां व्यवस्थापनम्, तया समभागीकृत्य वस्त्रेषु स्थापितेषु यद् इष्टं वस्त्रं तद् गुरूणां दत्त्वा शेषाणि यथारत्नाधिकं गृह्णन्ति यावदावलिका निष्ठामुपगच्छति । उत्परिपाट्या तु ग्रहणं 'न पूजयन्ति' न प्रशंसन्ति, तीर्थकरादय इति गम्यते ॥ ४३२३ ॥

मण्डलिकायामप्येवमेव, नवरं तस्यां विशेषोऽयमुपदर्श्यते—पूर्वं गुरुभिर्गृहीते ततः शेषाः 'यथावृद्धं' यो यः पर्यायवृद्धस्तदनतिक्रमेण समान् भागान् कृत्वा 'उभयोरपि' आद्यन्तलक्षणयोः पार्श्वयोः 'अनन्तरम्' अव्यवहितं वस्त्राणि गृह्णन्ति । इयमत्र भावना—मण्डलिकया वस्त्रेषु स्थापितेषु प्रथममाचार्येण गृहीते ततो यः शेषाणां मध्ये रत्नाधिकः स मण्डलिकाया धुरि स्थापितं वस्त्रं गृह्णाति, अवमरात्निकस्तु पर्यन्तस्थापितं—सर्वान्तिकम्, ततोऽपि योऽवमपर्यायः स धुरि स्थापितादनन्तरं गृह्णाति, तदपेक्षया लघुतरः पर्यन्तपार्श्वादुपान्त्यं गृह्णाति; एवं तावद् गृह्णन्ति यावद् मण्डलिका निष्ठिता भवति ॥ ४३२४ ॥

एवमपि विभज्यमाने कोऽपि लोभाभिभूतमानसो ब्रूयात्—अक्षान् पातयित्वा यद् यस्य भागे समायाति तत् तस्य दीयताम्; एवं ब्रुवाणोऽसौ प्रज्ञापयितव्यः । कथम् ? इति चेद् उच्यते—

जइ ताव दलंतऽगारिणो, धम्मा-ऽधम्मविसेसबाहिला ।
बहुसंजयविंदमज्झके, उवकलणे सि किमेव मुच्छितो ॥ ४३२५ ॥

यदि तावदगारिणो धर्मा-ऽधर्मविशेषबाह्या अपि मूर्च्छां परित्यज्य साधूनामित्थमात्मीयानि वस्त्राणि "दलंति" प्रयच्छन्ति, ततः 'बहुसंयतवृन्दमध्यके' प्रभूतसाधुजनमध्यभागे त्वमेक उपकरणे किमेवं सम्यक्परिज्ञातजिनवचनोऽपि मूर्च्छितोऽसि ? नैतद् भवतो युज्यत इति भावः ॥ ४३२५ ॥ एवमप्युक्तो यद्यसौ नोपशाम्यति ततो वक्तव्यम्—

अज्जो ! तुमं चेव करेहि भागे, ततो णु घेच्छामों जहक्कमेणं ।
गिण्हाहि वा जं तुह एत्थ इट्ठं, विणासधम्मीसु हि किं ममत्तं ॥ ४३२६ ॥

आर्य ! त्वमेव समान् भागान् कुरु, ततो यथाक्रमेण वयं ग्रहीष्यामः । यद्वा गृहाण यत् तवामीषां वस्त्राणां मध्ये 'इष्टम्' अभिरुचितम्, विनाशधर्मीणि हि—विनश्वरस्वभावानि वस्त्रादीनि वस्तूनि, अतः किं नाम तेषु ममत्वं विधीयते ? ॥ ४३२६ ॥

---

१ कमेण जओ, उप्प° मो० ॥ २ °का नाम-परिमण्डलाकारेण वस्त्राणां स्थापना, तस्यां विशे° भा० ॥ ३ °वरं तेषां विशे° भा० कां० विना ॥

एवमप्युक्तो यदि नोपरमते ततः को विधिः ? इत्याह—

**तह वि अठियस्स दाउं, विगिंचणोवट्ठिए खरंटणया ।**
**अक्खेसु होंति गुरुगा, लहुगा सेसेसु ठाणेसु ॥ ४३२७ ॥**

तथाप्यस्थितस्य तस्य तद् अभीष्टं वस्त्रं दत्त्वा विवेचनं कर्तव्यम्, 'निर्गच्छ मदीयाद् गच्छात्' इति भणनीयमिति भावः । ततो यदि भूयोऽप्युपतिष्ठते—मिथ्या मे दुष्कृतम्, न पुनरेवं विधास्यामीति; ततः 'खरण्टना' वक्ष्यमाणा कर्त्तव्या, प्रायश्चित्तं च दातव्यम् । किम् ? इत्याह—'अक्षेषु गुरुका भवन्ति' यो ब्रवीति 'अक्षान् पातयित्वा विभजत' तस्य चतुर्गुरुकम् । 'शेषेषु स्थानेषु' क्षोभकरणा-ऽऽवलिका-मण्डलिकाविभाजनलक्षणेषु चतुर्लघुकम् ॥ ४३२७ ॥

अथ खरण्टनामुपदर्शयति—

**हिरन्न-दारं पसु-पेसवग्गं, जदा व उज्झित्तु दमे ठितो सि ।**
**किलेसलद्धेसु इमेसु गेही, जुत्ता न कत्तुं तव खिंसणेवं ॥ ४३२८ ॥**

हिरण्यं च—सुवर्णं दाराश्च—कलत्रं हिरण्य-दारम्, पशवश्च—गो-महिषीप्रभृतयः प्रेष्याश्च—कर्मकरास्तेषां वर्गः—समूहः, तमेवमादिकं परिग्रहं 'उज्झित्वा' तृणवत् परित्यज्य यदा किल त्वमेवंविधे 'दमे' संयमे स्थितोऽसि तदा साम्प्रतमेषु वस्त्रेषु 'क्लेशलब्धेषु' प्रभूतगृहपरिभ्रमणादिप्रयासप्राप्तेषु तव गृद्धिः कर्त्तुं न युक्ता । एवं खिंसना तस्य कर्तव्या ॥ ४३२८ ॥

**सम्मं विदित्ता समुवट्ठियं तु, थेरा सि तं चेव कदाइ देज्जा ।**
**अन्नेसि गाहे बहुदोसले वा, छोढूण तत्थेव करिंति भाए ॥ ४३२९ ॥**

'सम्यग्' अपुनःकरणेन समुपस्थितं तं विदित्वा 'स्थविराः' सूरयः कदाचित् तस्यैव 'तद्' वस्त्रं दद्युः । अथान्येषामपि बहूनां तद्वस्त्रग्रहणे 'ग्राहः' महान् निर्बन्धः, "बहुदोसले वा" प्रभूतदोषवानसौ संयतो बहुभिः सह द्वेषवान्—विरोधविधायी यः स बहुद्वेषवानिति वा, ततस्तस्य दीयमानेऽन्येषां महदप्रीतिकमुपजायते; एवंविधं कारणं विचिन्त्य 'तत्रैव' तेषु वस्त्रेषु मध्ये प्रक्षिप्य एकसदृशान् भागान् कुर्वन्ति, ततो यथारत्नाधिकं गृह्णन्ति ॥ ४३२९ ॥

एवं तावदनेकैरानीतानां वस्त्राणां परिभाजने विधिरुक्तः, अथ क्षपकेणानीतानां तेषामेव विधिमभिधित्सुराह—

**खमए लद्धूण अंबले, दाउ गुरूण य सो वलिट्ठए ।**
**बेइ गुरुं एमेव सेसए, देह जईण गुरूहिँ वुच्चई ॥ ४३३० ॥**
**सयमेव य देहि अंबले, तव जे लोयइ इत्थ संजए ।**
**इइ छंदिय-पेसिओ तहिं, खमओ देइ लिसीण अंबले ॥ ४३३१ ॥**

कोऽपि क्षपकः कुत्रापि भावितकुलादौ 'अम्बराणि' वस्त्राणि लब्ध्वा यानि 'वरिष्ठानि' सर्वप्रधानानि वासांसि तानि गुरूणां दत्त्वा ततो गुरुं ब्रवीति—एवमेव शेषाण्यपि मदानीतानि वस्त्राणि यतीनां प्रयच्छत । ततो गुरुभिरसावुच्यते—स्वयमेव त्वममूनि अम्बराणि देहि यस्तवात्र संयतः 'रोचते' वस्त्रदानयोग्यतया रुचिगोचरीभवति । 'इति' अमुना

१ °रादयस्त° भा० ॥

प्रकारेण 'छन्दित-प्रेषितः' पूर्वं छन्दितः—यस्य रोचते तस्मै दातव्यानीत्येवमनुज्ञातच्छन्दः ततः प्रेषितः—मुत्कलितः सन् स क्षपकस्तत्रावसरे ऋषीणामम्बराणि प्रयच्छति । इह सर्वत्रापि रकारस्य लकारादेशः "र-सोर्ल-शौ" ( सिद्धहे० ८-४-२८८ ) इति मागधभाषालक्षणवशात् ॥ ४३३० ॥ ४३३१ ॥ ततश्च—

**खमएण आणियाणं, दिज्जंतेगस्स वारणावयणं ।**
**गहणं तुमं न याणसि, वंदिय पुच्छा तओ कहणं ॥ ४३३२ ॥**

क्षपकेणानीतानां तेनैव दीयमानानां वस्त्राणाम् 'एकस्य' कस्यचिद् लुब्धस्य वारणावचनम्, 'एवममीषां रत्नाधिकानां दीयमानानि मां यावद् न समागमिष्यन्ति' इति बुद्ध्या वस्त्रग्राहकसाधून् 'मा आर्याः ! गृह्णीध्वम्' इत्येवं कोऽपि निवारितवानिति भावः । ततः क्षपकः प्राह—किं मदीयानि वस्त्राणि न गृह्यन्ते ? । इतरः प्राह—ग्रहणमेव तावत् त्वं न जानीषे । क्षपको ब्रवीति—जानामि । इतरो भणति—यद्येवं ततः कीदृशम् ? । क्षपक आह—वन्दित्वा विनयेन पृच्छ येनाहं कथयामि । ततस्तेन क्षपको वन्दित्वा पृष्टः सन् कथयितुमारब्धवान् ॥ ४३३२ ॥

**तिविहं च होइ गहणं, सच्चित्ताऽचित्त मीसगं चेव ।**
**एएसिं नाणत्तं, वोच्छामि अहाणुपुव्वीए ॥ ४३३३ ॥**

त्रिविधं च भवति ग्रहणम्, तद्यथा—सचित्तग्रहणमचित्तग्रहणं मिश्रग्रहणं चेति । एतेषां त्रयाणामपि नानात्वं यथाऽऽनुपूर्व्या वक्ष्यामि ॥ ४३३३ ॥ तत्र सचित्तग्रहणं तावदाह—

**सच्चित्तं पुण दुविहं, पुरिसाणं चेव तह य इत्थीणं ।**
**एक्केक्कं पि य इत्तो, पंचविहं होइ नायव्वं ॥ ४३३४ ॥**

सचित्तग्रहणं पुनर्द्विविधम्, तद्यथा—'पुरुषाणां च' आचार्यादीनां 'स्त्रीणां च' प्रवर्तिनीप्रभृतीनाम् । एकैकमपि 'इतः' मूलभेदापेक्षया 'पञ्चविधं' वक्ष्यमाणनीत्या पञ्चप्रकारं भवति ज्ञातव्यम् ॥ ४३३४ ॥ कुतः पुनस्तेषां पुरुषाणां स्त्रीणां वा ग्रहणं क्रियते ? इत्याह—

**उदगाऽगणि तेणोमे, अद्धाण गिलाण सावय पदुट्ठे ।**
**तित्थाणुसज्जणाए, अइसेसिगमुद्धरे विहिणा ॥ ४३३५ ॥**

उदके वाहकेन आचार्यादयो नेतुमारब्धाः, "अगणि" त्ति महानगरप्रदीपनके वा दाहस्तेषां समुपस्थितः, "तेण" त्ति शरीरस्तेना आचार्यादीन् व्यपरोपयितुमिच्छन्ति, अवमं—दुर्भिक्षं तत्र भक्त-पानलाभाभावात् प्राणसंशयस्तेषामुपतस्थे, अध्वा नाम—छिन्नापातं महदरण्यं तं प्रपन्नानामपान्तराले बुभुक्षा-परिश्रमादिभिरग्रतो गन्तुमशक्नुवतां जीवितं संशयतुलामधिरूढम्, "गिलाण" त्ति शूल-विष-विशूचिकादिकमागाढग्लानत्वमुदपादि, श्वापदाः—सिंह-व्याघ्रादयस्तैरुपद्रोतुमारब्धाः, प्रद्विष्टः—प्रद्वेषमापन्नो राजा साधूनां प्राणापहारं कर्तुमभिलषति । एतेष्वागाढकारणेषु 'तीर्थानुषजनायै' तीर्थस्याव्यवच्छेदेनानुवर्त्तनाय योऽतिशायी—विशिष्टपात्रभूतः प्रवचनाधारः पुरुषस्तं 'विधिना' वक्ष्यमाणनीत्या समुद्धरेत् ॥ ४३३५ ॥

अथ यदुक्तम्—'एकैकं पञ्चविधं ग्रहणं भवति' तत्र पुरुषविषयं तावदाह—

**आयरिए अभिसेगे, भिक्खू खुड्डे तहेव थेरे य ।**

**गहणं तेसिं इणमो, संजोगक(ग)मं तु वोच्छामि ॥ ४३३६ ॥**

'आचार्यः' गच्छाधिपतिः 'अभिषेकः' सूत्रा-ऽर्थ-तदुभयोपेत आचार्यपदस्थापनार्हः 'भिक्षुः' प्रतीतः 'क्षुल्लकः' बालः 'स्थविरः' वृद्धः, एतेषां पञ्चानामपि ग्रहणम् 'इदम्' अनन्तरमेव वक्ष्यमाणं 'संयोगगमं' संयोगतो गमाः—प्रकारा यस्य तत् तथा वक्ष्यामि ॥ ४३३६ ॥

प्रतिज्ञातमेव निर्वाहयति—

**सव्वे वि तारणिज्जा, संदेहाओ परक्कमे संते ।**
**एक्केकं अवणिज्जा, जाव गुरू तत्थिमो भेदो ॥ ४३३७ ॥**

'पराक्रमे' शक्तौ सत्यां 'सर्वेऽपि' आचार्यादयः तादृशात् 'सन्देहाद्' नद्याद्युदकनिमज्जनलक्षणा⊲त् तारणीयाः । अथ नास्ति तादृशः पराक्रमस्ततः स्थविरवर्जाश्चत्वारस्तारणीयाः, तत्राप्यशक्तौ क्षुल्लक-स्थविरवर्जास्त्रयः, तत्राप्यसामर्थ्ये आचार्या-ऽभिषेकौ द्वौ, तत्राप्यशक्तौ एक एव आचार्यस्तारयितव्यः । आह च—"एक्केकं" इत्यादि, सर्वान् तारयितुमशक्तौ स्थविरादिकमेकैकमपनयेद् यावद् 'गुरुः' आचार्यः । तत्र चायं वक्ष्यमाणो ⊳ भेदो भवति ॥ ४३३७ ॥

**तरुणे निप्फन्न परिवारे, सलद्धिए जे य होंति अब्भासे ।**
**अभिसेगम्मि य चउरो, सेसाणं पंच चेव गमा ॥ ४३३८ ॥**

इह द्वावाचार्यौ—एकस्तरुणोऽपरः स्थविरः । यद्यस्ति शक्तिस्ततो द्वावपि तारणीयौ । अथ नास्ति ततस्तरुणो निस्तारणीयः । अथ द्वावपि तरुणौ ततो यस्तयोः 'निप्पन्नः' सम्यक् सूत्रार्थकुशलः स तारयितव्यः । अथ द्वावपि निष्पन्नावनिष्पन्नौ वा ततो यः सपरिवारः स तारणीयः । अथ द्वावपि सपरिवारावपरिवारौ वा ततो यस्तत्र 'सलब्धिकः' लब्धिसम्पन्नस्तं तारयेत् । अथ द्वावपि सलब्धिकावलब्धिकौ वा ततो यः 'अभ्यासे' आसन्ने स्थितः स निस्तारणीयः । अत्रायं विशेषसम्प्रदायः—द्वयोरभ्यासस्थितयोर्यस्तरीतुमशक्तः स तारणीयः । एवमेते आचार्यस्य पञ्च गमा अभिहिताः । अभिषेकस्तु नियमाद् निष्पन्नो भवति, अन्यथा तत्त्वत आचार्यपदस्थापनायोग्यत्वानुपपत्तेः । ततस्तस्मिन्नभिषेके निष्पन्ना-ऽनिष्पन्नगमाभावात् शेषाश्चत्वारो गमा एवमेव वक्तव्याः । 'शेषाणां' भिक्षु-क्षुल्लक-स्थविराणां पञ्चापि गमा भवन्ति, ते चाचार्यवद् वक्तव्याः । नवरं बालस्य निष्पन्नता श्रीवज्रस्वामिन इव भावनीया, तरुणता तु प्रथमकुमारत्वे वर्तमानस्यावसातव्या । एवं स्थविरस्यापि जघन्यवृद्धत्वे वर्तमानस्य तरुणता, शेषस्य तु वृद्धता मन्तव्या । त्रयाणामपि च भिक्षुप्रभृतीनां परिवारो गुरुप्रदत्तो माता-पितृ-भ्रातृ-भगिनीप्रभृतिप्रव्रजितस्वजनवर्गो वा द्रष्टव्यः ॥ ४३३८ ॥ अथ स्त्रीविषयं पञ्चविधं ग्रहणमुपदर्शयति—

**पवत्तिणि अभिसेगपत्ता, थेरी तह भिक्खुणी य खुड्डी य ।**
**गहणं तासिं इणमो, संजोगक(ग)मं तु वोच्छामि ॥ ४३३९ ॥**

'प्रवर्त्तिनी' सकलसाध्वीनां नायिका, 'अभिषेकप्राप्ता' प्रवर्तिनीपदयोग्या, 'स्थविरा' वृद्धा, 'भिक्षुणी' प्रतीता, 'क्षुल्लिका' बाला । एतासां पञ्चानामपि ग्रहणम् 'इदम्' अनन्तरमेव 'संयोगगमं' संयोगतोऽनेकप्रकारं वक्ष्यामि ॥ ४३३९ ॥ यथाप्रतिज्ञातमेवाह—

१ ⊲ ⊳ एतच्चिह्नान्तर्गतो ग्रन्थसन्दर्भः भा० कां० एव वर्त्तते ॥ २ °रयितव्यौ । अ° कां० ॥

सव्वा वि तारणिज्जा, संदेहाओ परक्कमे संते ।
एक्केक्कं अवणिज्जा, जा गणिणी तत्थिमो भेदो ॥ ४३४० ॥
तरुणी निप्फन्न परिवारा, सलद्धिया जा य होइ अब्भासे ।
अभिसेगाए चउरो, सेसाणं पंच चेव गमा ॥ ४३४१ ॥

इदं गाथाद्वयं साधुगतगाथाद्वयमिव ( गा० ४३३७-३८ ) व्याख्येयम् ॥ ४३४० ॥ ४३४१ ॥ परः प्रेरयन्नाह—

बाला य वुड्ढा य अजंगमा य, लोगे वि एते अणुकंपणिज्जा ।
सव्वाणुकंपाएँ समुज्जएहिं, विवज्जओऽयं कहमीहितो मे ॥ ४३४२ ॥

बालाश्च वृद्धाश्चाजङ्गमाश्चेति लोकेऽपि तावदेतेऽनुकम्पनीया इष्यन्ते, अतः सर्वेषामपि निर्विशेषमनुकम्पायां समुद्यतैः कथमयं "मे" भवद्भिः 'विपर्ययः' वैपरीत्यम् 'ईहितम्' अङ्गीकृतम् ? यदेवं बाल-स्थविरौ परित्यज्य आचार्यादयो निस्तार्यन्ते, वृद्धं वाऽजङ्गममाचार्यं विमुच्य तरुणस्तार्यते ॥ ४३४२ ॥ पर एव प्रत्युत्तरमाशङ्क्य परिहरन्नाह—

जइ बुद्धी चिरजीवी, तरुणो थेरो य अप्पसेसाऊ ।
सोवक्कमम्मि देहे, एयं पि न जुज्जए वोत्तुं ॥ ४३४३ ॥

'यदि' इति अथशब्दार्थे, अथैवं भवतां बुद्धिः स्यात्—'चिरजीवी' प्रभूतवर्षजीवितस्तरुणः, स्थविरः पुनः 'अल्पशेषायुः' स्तोकावशेषायुष्कः, अतः स्थविरं विमुच्य तरुणं तारयामः, एतदप्यसमीचीनम् । कुतः ? इत्याह—'सोपक्रमे' अध्यवसान-निमित्तादिभिरायुष्कोपक्रमकारणैः सप्रत्यपाये देहे सति 'एतदपि' चिरजीवितादिकं वक्तुं न युज्यते ॥ ४३४३ ॥

अवि य हु असहू थेरो, पयरेज्जियरो कदाइ संदेहं ।
ओरालमिदं बलवं, जं घेप्पइ मुच्चई अबलो ॥ ४३४४ ॥

'अपि च' इत्यभ्युच्चये, 'हुः' निश्चये । स्थविरो वृद्धत्वादेव 'असहिष्णुः' न तरीतुं शक्नोति, 'इतरस्तु' तरुणः समर्थतया कदाचित् स्वयमेव 'सन्देहम्' उदकवाहैकहरणरूपं प्राणसन्देहकारणं प्रतरेत्, अतः 'उदारं' परिस्थूरम् 'इदं' भवदीयं वचनम्—यद् 'बलवान्' तरुणो गृह्यते 'अबलस्तु' स्थविरो मुच्यते ॥ ४३४४ ॥ इत्थं परेणोक्ते सूरिराह—

आय-परे उवगिण्हइ, तरुणो थेरो उ तत्थ भयणिज्जो ।
अणुवक्कमे वि थेवो, चिट्ठइ कालो उ थेरस्स ॥ ४३४५ ॥

तरुण आचार्यादिरपूर्वसूत्रा-ऽर्थग्रहण-तपःकर्मकरणादिना वस्त्र-पात्रादिसम्पादन-सूत्रार्थप्रदानादिना वाऽऽत्मानं परांश्चोपगृह्णाति । स्थविरस्तु तत्राऽऽत्म-परोपग्रहकरणे भजनीयः, कदाचित् तं कर्तुं समर्थः कदाचिच्च नेति भावः । तथा 'अनुपक्रमेऽपि' आयुष उपक्रममन्तरेणापि स्थविरस्य स्तोक एव कालोऽवशेषस्तिष्ठति, तरुणस्य तु सोपक्रमायुषोऽपि स्तोको वा भवेद् द्राघीयान् वा, ततः ⊲ "सोवक्कमम्मि देहे" ( गा० ४३४३ ) इत्यादि त्वदुक्तं ⊳ यत्किञ्चि-

१ वत्तुं ताभा० ॥ २ °हकलक्षणं प्रत° भा० ॥ ३ "ओरालमिदं ति सामयिका इयं भाषा, अशोभनमित्यर्थः, स्थूरं वा ।" इति चूर्णौ विशेषचूर्णौ च ॥ ४ ⊲ ⊳ एतन्मध्यगतः पाठः भा० नास्ति ॥

देतत् ॥ ४३४५ ॥ अथ यदुक्तम् 'बाल-वृद्धादयो लोकेऽप्यनुकम्पनीयाः' ( गा० ४३४२ ) इति तत्परिहाराय लौकिकमेव दृष्टान्तमाह—

**दुग्घासे खीरवती, गावी पुस्सइ कुडुंबभरणट्ठा ।**
**मोत्तु फलदं च रुक्खं, को मंदफला-ऽफले पोसे ॥ ४३४६ ॥**

दुर्ग्रासं—दुर्भिक्षं तत्र यथा 'क्षीरवती' भूम्नि मतुप्रत्ययविधानाद् बहुक्षीरा गौः कुटुम्बभरणार्थं 'पोष्यते' चारीप्रदानादिना पुष्टिं नीयते, एवमस्माकमपि य आचार्यादिस्तरुणादिगुणोपेततयाऽऽत्मनः परेषां चोपग्रहं कर्तुं समर्थः स निस्तार्यते । तन्निस्तारणे हि बहूनां बाल-वृद्धादीनामपि तदाश्रितानामनुकम्पा कृता भवति । अथ तं परित्यज्य क्षुल्लक-स्थविरादिस्तस्या आपदस्तार्यते ततो बहवो बालादयस्तदाश्रिताः परित्यक्ता भवन्ति । अपि च—'फलदं' प्रभूतफलदायिनं वृक्षं मुक्त्वा को नाम मन्दफलान् अफलान् वा वृक्षान् 'पुष्णीयात्' सारणीसलिलसेचनादिना पुष्टिं प्रापयेत् ? न कोऽपीत्यर्थः । उपनययोजना प्राग्वद् द्रष्टव्या ॥ ४३४६ ॥

उक्तं सचित्तग्रहणम् । अथ मिश्रग्रहणमाह—

**एमेव मीसए वी, नेयव्वं होइ आणुपुव्वीए ।**
**वोच्चत्थे चउगुरुगा, तत्थ वि आणाइणो दोसा ॥ ४३४७ ॥**

एवमेव मिश्रविषयमपि ग्रहणम् 'आनुपूर्व्या' आचार्य-प्रवर्त्तिन्यादिपरिपाट्या ज्ञातव्यं भवति । अथ यथोक्तक्रममुल्लङ्घ्य विपर्यासेन पुरुषाणां स्त्रीणां वा ग्रहणं करोति ततश्चतुर्गुरुकाः । तत्रापि चाज्ञादयो दोषा भवन्ति ॥ ४३४७ ॥

अथ मिश्रग्रहणं कीदृशं प्रतिपत्तव्यम् ? इति उच्यते—

**मीसगगहणं तत्थ उ, विणिवाओ जो सभंड-मत्ताणं ।**
**अहवा वि मीसयं खलु, उभओपक्खऽच्चओ घोरो ॥ ४३४८ ॥**

इह यः 'सभाण्ड-मात्राणां' पात्र-मात्रकाद्युपकरणसहितानां साधूनां साध्वीनां वा 'विनिपातः' उदकवाहके निमज्जनं 'तत्र' तद्विषयं यद् ग्रहणं तद् मिश्रग्रहणमुच्यते । अथवा यद् उभयोरपि—साधु-साध्वीलक्षणयोः पक्षयोः 'घोरः' रौद्रो युगपदुदकवाहकेनापहरणलक्षणः 'अत्ययः' प्रत्यपायस्ततो यद् ग्रहणं तद् मिश्रग्रहणमिति मन्तव्यम् ॥ ४३४८ ॥

अथामुमेव द्वितीयव्याख्यानपक्षमङ्गीकृत्य निस्तारणविधिमाह—

**सव्वत्थ वि आयरिओ, आयरियाओ पवत्तिणी होइ ।**
**तो अभिसेगप्पत्तो, सेसेसु तु इत्थिया पढमं ॥ ४३४९ ॥**

द्वयोरपि पक्षयोरुदकेन ह्रियमाणयोर्यद्यस्ति शक्तिस्ततो युगपद् निस्तारणं कार्यम् । अथ नास्ति युगपद् निस्तारणसामर्थ्यं ततः सर्वत्रापि प्रथममाचार्यो निस्तारणीयः । आचार्यानन्तरं प्रवर्त्तिनी तारयितव्या भवति । 'ततः' प्रवर्त्तिन्या अनन्तरमभिषेकपदप्राप्तः । ततः 'शेषेषु तु' भिक्षुप्रभृतिषु पदेषु प्रथमं स्त्री निस्तारयितव्या, ततः पुरुषः । तथाहि—भिक्षु-भिक्षुण्योर्मध्ये प्रथमं भिक्षुणी ततो भिक्षुस्तारणीयः, क्षुल्लक-क्षुल्लिकयोर्मध्ये प्रथमं क्षुल्लिका ततः क्षुल्लकः,

१ च फलनादिना पुष्टिफलदा॰ भा॰ कां॰ विना ॥

स्थविर-स्थविरयोः प्रथमं स्थविरा ततः स्थविर इति ॥ ४३४९ ॥

अथ किमर्थमेषु प्रथमं स्त्री निस्तार्यते ? इत्याह—

**अन्नस्स वि संदेहं, दट्ठुं कंपंति जा लयाओ वा ।**
**अबलाओ पगइभयालुगाउ रक्खा अतो इत्थी ॥ ४३५० ॥**

'अन्यस्यापि' पुरुषादेः 'सन्देहम्' आपदं दृष्ट्वा याः स्त्रियः पवनसम्पर्कतो लता इव कम्पन्ते, याश्चाबलाः प्रकृत्या–स्वभावेनैव च "भयालुयाउ" त्ति भयबहुलाः, अतस्ताः स्त्रियः प्रथमं रक्षणीयाः ॥ ४३५० ॥ आह—साधु-साध्वीनां निस्तारणे किमेष एवाचार्य-प्रवर्त्तिन्यादिकः क्रमः ? उतान्यथाऽप्यस्ति ? उच्यते—अस्तीति ब्रूमः । तथा चाह—

**जं पुण संभावेमो, भाविणमहियमम्मुकातो वत्थूओ ।**
**तत्थुक्कमं पि कुणिमो, छेओदइए वणियभूया ॥ ४३५१ ॥**

'यं पुनः' क्षुल्लकादिकमपि 'अमुकाद्' आचार्यादेर्वस्तुनः सकाशात् प्रवचनप्रभावनादिभिर्गुणैः 'अधिकं' सातिशयं 'भाविनं' भविष्यन्तं सम्भावयामः तत्र वयम् 'उत्क्रममपि' यथोक्तक्रमोल्लङ्घनमपि कुर्महे, क्षुल्लकादिकमपि प्रथमं तारयाम इत्यर्थः । कथम्भूताः ? इत्याह—छेदश्च–व्यय औदयिकश्च लाभः छेदौदयिकं तत्र **वणिग्भूताः** सन्तः । किमुक्तं भवति ?—यथा वणिग् यदेव प्रभूतलाभमल्पव्ययं वस्तु तस्य ग्रहणं करोति, एवं वयमपि यत्र विशिष्टपात्रभूते वस्तुनि गृहीते प्रवचनप्रभावना-तीर्थाव्यवच्छेदादिको भूयान् लाभः समुज्जृम्भते स्वल्पश्चेतरपरित्यागलक्षणो व्ययः तं क्षुल्लकादिकमपि गृह्णीम इति ॥ ४३५१ ॥

एवं तावदुदकविषयं ग्रहणमभिहितम्, अथाग्नि-स्तेनादिविषयं तदेवातिदिशन्नाह—

**अगणी सरीरतेणे, ओमऽद्धाणे गिलाणमसिवे य ।**
**सावयभय रायभए, जहेव आउम्मि गहणं तु ॥ ४३५२ ॥**

अग्निसम्भ्रमे शरीरस्तेनभये अवमे अध्वनि ग्लानत्वे अशिवे श्वापदभये राजभये च यथैवाप्काये ग्रहणमभिहितं तथैवैतेष्वपि सचित्त-मिश्रभेदाद् द्विविधमपि वक्तव्यम् ॥ ४३५२ ॥

अथाचित्तग्रहणमभिधित्सुराह—

**अचित्तस्स उ गहणं, अभिनवगहणं पुराणगहणं च ।**
**उवठावणाएँ गहणं, तह य उवट्ठाविए गहणं ॥ ४३५३ ॥**

अचित्तं–वस्त्र-पात्रादिकमुपकरणं तस्य ग्रहणं द्विधा—अभिनवग्रहणं पुराणग्रहणं च । तत्राभिनवं–प्रथममेव यद् वस्त्रादेर्ग्रहणं तदभिनवग्रहणम्, पुराणस्य–प्राग्गृहीतस्य चोलपट्टकादेः कूर्परादिना ग्रहणं पुराणग्रहणम् । तच्च द्विधा—उपस्थापनायां ग्रहणम् उपस्थापिते ग्रहणं च । तत्रोपस्थापनायां विधीयमानायां हस्तिदन्तोन्नताकारहस्तादिभिर्यद् रजोहरणादि गृह्यते तद् उपस्थापनाग्रहणम् । उपस्थापितस्य–छेदोपस्थापनीयचारित्रं प्रापितस्य यद् उपधेर्धारणं परिभोगो वा तद् उपस्थापितग्रहणम् ॥ ४३५३ ॥ [1]एनामेव गाथां व्याख्यानयति—

**ओहे उवग्गहम्मि य, अभिनवगहणं तु होइ अचित्ते ।**

१ इदमेव व्या° भा० ॥

**इयरस्स वि होइ दुहा, गहणं तु पुराणउवहिस्स ॥ ४३५४ ॥**

अचित्तस्य वस्त्र-पात्रादेरभिनवग्रहणं द्विधा—ओघोपधिविषयम् औपग्रहिकोपधिविषयं च। 'इतरस्यापि' पुराणोपधेर्ग्रहणं द्विधा, उपस्थापनाग्रहणमुपस्थापितग्रहणं चेत्यर्थः ॥ ४३५४ ॥

अथवा अभिनवग्रहणमिदमनेकविधम्—

**जायण निमंतणुवस्सय, परियावन्नं परिट्ठविय नट्ठं।**
**पम्हुट्ठ पडिय गहियं, अभिनवगहणं अणेगविहं ॥ ४३५५ ॥**

याच्ञा—अवभाषणम्, निमन्त्रणा—गृहस्थानामभ्यर्थना, तत्पुरस्सरं यद् वस्त्रादेर्ग्रहणम्, यच्चोपाश्रये 'पर्यापन्नस्य' पथिकादिभिर्विस्मृत्या परित्यक्तस्य वस्त्रादेर्ग्रहणम्, यच्च परिष्ठापितस्य भूयः कारणे ग्रहणम्, एवं 'नष्टं' हारितं "पम्हुट्ठं" विस्मृतं 'पतितं' हस्तात् परिभ्रष्टं 'गृहीतं' प्रत्यनीकेन बलादाच्छिद्य स्वीकृतम्। एतेषां पुनर्लब्धानां यद् ग्रहणमेवमादिकमनेकविधमभिनवग्रहणं मन्तव्यम् ॥ ४३५५ ॥ अथ याच्ञा-निमन्त्रणाग्रहणयोर्विधिमतिदिशन्नाह—

**जो चेव गमो हेट्ठा, उस्सग्गाईसु वण्णिओ गहणे।**
**दुविहोवहिम्मि सो च्चिय, काम त्ति य किं ति कीम त्ति ॥ ४३५६ ॥**

य एव 'गमः' प्रकारः 'अधस्तात्' पीठिकायाम् ( गा० ६२२–२४ ) उत्सर्गादिको वस्त्रग्रहणविषयो वर्णितः स एवात्र 'द्विविधोपधेः' ओघिकौपग्रहिकलक्षणस्य ग्रहणे 'कस्य सत्कमेतद् वस्त्र-पात्रादिकं पूर्वमासीद्? भविष्यति वा? कस्माद्वा प्रयच्छसि?' इति पृच्छात्रयपरिशुद्धो द्रष्टव्यः। उपाश्रयपर्यापन्नवस्त्रादिग्रहणविषयस्तु विधिरिहैवोद्देशके पुरस्तादभिधास्यते। परिष्ठापितादेस्तु यथा कारणतो भूयोऽपि ग्रहणं क्रियते तथा व्यवहाराध्ययने भणिष्यते ॥४३५६॥

गतमभिनवग्रहणम्। अथ पुराणग्रहणम्, तच्च द्विधा—उपस्थापनाग्रहणं उपस्थापितग्रहणं च। तत्राद्यं तावदाह—

**कोप्परपट्टगगहणं, वामकरणामियाएँ मुहपोत्ती।**
**रयहरण हत्थिदंतुन्नएहिँ हत्थेहुवट्ठाणं ॥ ४३५७ ॥**

कूर्पराभ्यां चोलपट्टकस्य ग्रहणं कृत्वा वामकरसत्कयाऽनामिकया मुखपोतिकां गृहीत्वा रजोहरणं हस्तिदन्तोन्नताभ्यां हस्ताभ्यामादायोपस्थापनं कर्त्तव्यम्, शैक्षस्य व्रतस्थापना विधेयेत्यर्थः ॥ ४३५७ ॥ अथोपस्थापितग्रहणमाह—

**उवठावियस्स गहणं, अहभावे चेव तह य परिभोगे।**
**एक्केक्कं पायादी, नेयव्वं आणुपुव्वीए ॥ ४३५८ ॥**

उपस्थापितस्य यद् उपकरणग्रहणं तद् द्विधा—यथाभावः परिभोगश्च। अनेन च द्विविधेनापि ग्रहणेनैकैकं पात्रादिकम् 'आनुपूर्व्या' परिपाट्या 'नेतव्यं' ग्रहीतव्यम् ॥ ४३५८ ॥

इदमेव भावयति—

**पडिमामियं तु अच्छइ, पायाई एस होतऽहाभावो।**
**सद्दव्व-पाण-भिक्खा-निल्लेवण पायपरिभोगो ॥ ४३५९ ॥**

यत् पात्रादिकं 'प्रतिस्वामितं' विवक्षितसाधुलक्षणेन स्वामिना प्रतिगृहीतं सद् आस्ते न

तदानीं परिभुज्यते एष यथाभावो भवति, स्वपरिग्रहे धारणमित्यर्थः । परिभोगो नाम यत् पात्रादि यस्यां वेलायां परिभुज्यते तत्र सत्–शोभनमाचार्यादिप्रायोग्यं यद् द्रव्यं यच्च पानकं भैक्षं चात्मनो योग्यं तत्पात्रे गृह्यते निर्लेपनं च–आचमनं च तेन विधीयते एष पात्रस्य परिभोगः । इह च पात्रशब्देन प्रतिग्रहो मात्रकं वा गृहीतम् ॥ ४३५९ ॥ तथा—

**पाणदय सीयमत्थुय, पमज्ज चिलिमिलि निसिज्ज कालगते ।**
**गेलन्न लज्ज असहू, छेअण सागारिए भोगो ॥ ४३६० ॥**

वर्षाकल्पादिकं 'प्राणिदयार्थम्' अप्कायादिजीवरक्षानिमित्तं परिभोक्तव्यम् । कल्पत्रयं शीतरक्षार्थम् । संस्तारकोत्तरपट्टकौ आस्तरणमास्तृतं तदर्थम् । रजोहरणं च प्रमार्जनार्थं गृह्यते । चिलिमिलिका ज्योतिःशाला-दकतीरादावुपयुज्यते । रजोहरणस्य निषद्याद्वयं निषदनार्थमादीयते । "कालगए" त्ति कालगतस्याच्छादनार्थं नन्तकादिकं गृह्यते । ग्लानत्वं वा कस्यापि सञ्जातं सः अप्रावृतः सुखेनास्तामिति कृत्वा तस्याग्रे चिलिमिलिका दीयते । "लज्ज" त्ति लज्जाव्यपगमार्थं चोलपट्टकः परिभुज्यते । "असहु" त्ति राजादिप्रव्रजिता असहिष्णवः ते कल्पादिकं प्रावृणीयुः । "छेदण" त्ति नखहरणिका-पिप्पलकादिना नखप्रलम्बादीनां छेदनं क्रियते । "सागारिए" त्ति शैक्षस्य सज्ञातकानां सागारिकं ततः कल्पादिकं प्रावार्य प्रच्छन्ने स्थाप्यते । एवमादिकः सर्वोऽपि यथायोगमौघिकस्यौपग्रहिकस्य चोपधेः परिभोगो मन्तव्यः ॥ ४३६० ॥

उक्तं पुराणग्रहणम् । तदुक्तौ च समर्थितमचित्तग्रहणम् । एवं क्षपकेण त्रिविधे ग्रहणे प्ररूपिते सति इतरः प्राह—

**उवरिं कहेसि हिट्ठा, न याणसी वयणं न होइ एवं तु ।**
**चतुरो गुरुगा पुच्छा, नासेहिसि तं जहा वेज्जो ॥ ४३६१ ॥**

यद् उपरि कथयितुं योग्यं तत् त्वम् 'अधस्तात्' पूर्वं कथयसि । इयमत्र भावना—यद् भवता प्रथममेवाचार्यादिविषयं पुराणसचित्तग्रहणमभिहितं तदशैक्षरुक्षणाभिनवसचित्तग्रहणप्ररूपणादूर्द्ध्वं प्ररूपयितुं योग्यमासीत्, अभिनव-पुराणपर्याययोः पूर्व-पश्चात्कालभावित्वेन भावात्; तस्य चाभिनवसचित्तग्रहणस्य भवता प्ररूपणैव न कृता, अत एव न जानासि ग्रहणस्वरूपम् । यथा च "वन्दित्वा विनयेन पृच्छ" इत्येवमहङ्कारदूषितं वचनं त्वयोक्तम् ( गा० ४३३२ ) एवमभिधीयमानं न भवति, सतां पूजनीयमिति वाक्यशेषः । एवं च ब्रुवाणस्य भवतश्चत्वारो गुरुकाः । क्षपकः पृच्छति—किमत्र मम क्षूणमापतितं येनैवं प्रायश्चित्तं प्राप्नोमि ? । इतरः प्राह—त्वं पल्लवग्राहितया सम्यक् सिद्धान्ताभिप्रायमविज्ञाय जल्पसि । एवं च प्रज्ञापयन् त्वमात्मना नष्टोऽन्यानपि नाशयिष्यसि, यथा स **प्रथमोद्देशक**भणितो ( गाथा ३२५९-६० ) **वैद्यः**

पूर्वाह्णे वमनं दद्यादपराह्णे विरेचनम् । वातिकेष्वपि रोगेषु, पथ्यमाहुर्विशोषणम् ॥

इति श्लोकमात्रं गृहीत्वा चिकित्सां कुर्वन् विनष्टः एवं भवानपीति **चिरन्तनगाथासमा**सार्थः ॥ ४३६१ ॥ अथैनामेव किञ्चिद् विवृणोति—

**वयणं न वि गव्वभालियं, एलिसयं कुसलेहिँ पूजियं ।**
**अहवा न वि एत्थ लूसिमो, पगई एस अजाणुए जणे ॥ ४३६२ ॥**

इतरः क्षपकं ब्रूते—'ईदृशं' 'मां वन्दित्वा विनयेन पृच्छ' इत्येवंरूपं 'गर्वभारितम्' अहङ्कारभारगुरुकं वचनं 'कुशलैः' विद्वद्भिः 'न पूजितं' न श्लाघितम्, अतो नैव भवतो वक्तुं युज्यते। अथवा नाप्यत्र वयं 'रुष्यामः' रोषं कर्तुमर्हामः। कुतः? इत्याह—'अज्ञे' मूर्खे जने प्रकृतिरेषा यत् तथाविधज्ञानविकलोऽप्येष औद्धत्यमुद्वहति ॥ ४३६२ ॥ क्षपकः प्राह—

मूलेण विणा हु केलिसे, तलु पवले य घणे य सोभई।
न य मूलविभिन्नए घडे, जलमादीणि धलेइ कण्हुई ॥ ४३६३ ॥

मूलेन विना 'तरुः' वृक्षः चशब्दावपिशब्दार्थौ, 'प्रवरोऽपि' प्रधानोऽपि सहकारादिरपीत्यर्थः, 'घनोऽपि' पत्रबहलोऽपि कीदृशः शोभते? न कीदृगपीति भावः; एवं विनयमूलविकलो धर्मोऽपि न शोभां बिभर्त्ति। तथा 'न च' नैव मूले—बुध्ने विभिन्नो घटो जलादीनि वस्तूनि कचिदपि धारयति, एवं धर्मघटोऽपि विनयमूले सञ्जातछिद्रो न किमपि ज्ञानादिजलं धारयितुमिष्टे। अतोऽहं विनयं कारयामीति प्रक्रमः ॥ ४३६३ ॥

किं वा मए न नायं, दुविहे गहणम्मि जं जहिं कमती।
भन्नइ अभिनवगहणं, सचित्तं ते न विन्नायं ॥ ४३६४ ॥

सचित्ता-ऽचित्तभेदाद् द्विविधेऽपि ग्रहणे यद् यत्राभिनवं पुराणं वा क्रामति तत् तत्र मया किं वा न ज्ञातं येनैवं 'न जानासि ग्रहणस्वरूपम्' इत्याद्यभिधीयते?। इतरः प्रतिब्रूते—भण्यते अत्रोत्तरम्—अभिनवं सचित्तग्रहणं त्वया न विज्ञातम् ॥ ४३६४ ॥ तच्चेदम्—

अट्ठारस पुरिसेसुं, वीसं इत्थीसु दस नपुंसेसु।
पव्वावणाअणरिहा, अनला एएत्तिया वुत्ता ॥ ४३६५ ॥
अडयालीसं एते, वज्जित्ता सेसगाण तिण्हं पि।
अभिनवगहणं एयं, सचित्तं ते न विन्नायं ॥ ४३६६ ॥

'पुरुषेषु' पुरुषविषयाः "[1]बाले वुड्ढे नपुंसे य०" इत्यादिगाथाद्वयोक्ता अष्टादश भेदाः, स्त्रीषु त एव गुर्विणी-बालवत्सासहिता विंशतिर्भेदाः, नपुंसकेषु तु "[2]पंडए वाइए कीवे०" इत्यादयो दश भेदाः प्रव्राजनाया अनर्हाः—अयोग्याः। अत एव [ "एएत्तिय" त्ति ] एते एतावन्तो भेदा अनला इति निशीथाध्ययने उक्ताः, "अली भूषण-पर्याप्ति-वारणेषु" इति धातुपाठाद् अपर्याप्ताः, प्रव्रज्यापरिपालनेऽसमर्था इत्यर्थः ॥ ४३६५ ॥

एतान् सर्वसङ्ख्यया अष्टाचत्वारिंशतं भेदान् वर्जयित्वा शेषाणां 'त्रयाणामपि' पुरुष-स्त्री-नपुंसकानां प्रव्राजनं कर्तुं कल्पते। एतदभिनवग्रहणं सचित्तं "ते" त्वया न विज्ञातम्। एवं तेनोक्ते सति क्षपकः 'सती नोदना' इत्यभिधाय प्रवृत्तस्तथैव यथारत्नाधिकं वस्त्रप्रदानं कर्तुमिति ॥ ४३६६ ॥

॥ यथारत्नाधिकवस्त्रग्रहणप्रकृतं समाप्तम् ॥

१ बाले वुड्ढे नपुंसे य, जड्डे कीवे य वाहिए। तेणे रायावगारी य, उम्मत्ते य अदंसणे ॥
दासे दुट्ठे य मूढे य, अणत्ते जुंगिते इ य। ओबद्धए य भयए, सेहनिप्फेडिते ति य ॥"

२ "पंडए वाइए कीवे, कुंभी ईसालुय त्ति य। सउणी तक्कमसेवी य, पक्खियापक्खिए इ य ॥
सोगंधिए य आसत्ते, दस एते नपुंसगा। संकिलिट्ठ त्ति साहूणं, पव्वावेउं अकप्पिया ॥"

## यथारत्नाधिकशय्यासंस्तारग्रहणप्रकृतम्

सूत्रम्—

**कप्पइ निग्गंथाण वा निग्गंथीण वा आहारायणियाए सेज्जासंथारए पडिग्गाहित्तए १७ ॥**

अथास्य सूत्रस्य कः सम्बन्धः ? इत्याह—

**घेत्तुं जहक्कमेणं, उवही संथारएसु ठवयंति ।**
**तेसिं पि जदा गहणं, तं पि हु एमेव संबंधो ॥ ४३६७ ॥**

यथारत्नाधिकक्रमेणोपधिं गृहीत्वा तत्तत्ते स्वस्वसंस्तारकभूमीषु स्थापयन्ति । 'तेषामपि च' संस्तारकाणां यदा ग्रहणं तदा तदपि 'एवमेव' यथारत्नाधिकं कर्त्तव्यम् । एष पूर्वसूत्रेण सह सम्बन्धः ॥ ४३६७ ॥

अनेन सम्बन्धेनायातस्यास्य व्याख्या—कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा यथारत्नाधिकं शय्यासंस्तारकान् प्रतिग्रहीतुमिति सूत्रसङ्क्षेपार्थः ॥ अथेदमेव सूत्रं विवरीषुराह—

**सेज्जासंथारो या, सेज्जा वसही उ थाण संथारो ।**
**पुव्वण्हम्मि उ गहणं, अगेण्हणे लहुगो आणादी ॥ ४३६८ ॥**

शय्यासंस्तारो नाम शय्या—वसतिस्तस्यां यत् 'स्थानं' शयनयोग्यावकाशलक्षणं स शय्यासंस्तारक उच्यते । तस्य च शय्यासंस्तारकस्योपाश्रयं प्राप्तैः पूर्वाह्णवेलायामेव ग्रहणं कर्त्तव्यम् । अग्रहणे मासलघु प्रायश्चित्तम्, आज्ञादयश्च दोषाः ॥ ४३६८ ॥

**चोयगपुच्छा दोसा, मंडलिबंधम्मि होइ आगमणं ।**
**संजम-आयविराहण, वियालगहणे य जे दोसा ॥ ४३६९ ॥**

अत्र नोदकः पृच्छां करोति—यदि पूर्वाह्ण एव ग्रामं प्राप्तास्तनस्तदैव शय्यासंस्तारकमपि गृह्णन्तु, वयमप्येतन् प्रतिपद्यामहे; परं यदि भक्तवेलायां प्राप्तास्तदा प्रथमं भिक्षां पर्यटन्तु, ततो बहिरेव समुद्दिश्य चरमपौरुषीप्रत्युपेक्षणां कृत्वा स्वाध्यायं च विधाय विकालवेलायां ग्रामं प्रविशन्तु । सूरिराह—"दोस" त्ति बहिर्भुञ्जानानां बहवो दोषाः । कथम् ? इत्याह—'मण्डलीबन्धे' चिलिमिलिकां दत्त्वा मण्डलीरचनया भोजने विधीयमाने कुतूहलेन सागारिकाणामागमनं भवति, तैः सहासङ्खडे क्रियमाणे संयमा-ऽऽत्मविराधना । विकाले च वसतेर्ग्रहणे ये दोषा भवन्ति तन्निष्पन्नं प्रायश्चित्तं भवतीति द्वारगाथासमासार्थः ॥४३६९॥ साम्प्रतमेनामेव विवरीषुराह—

**अइभारेण व इरियं, न सोहए कंटगाइ आयाए ।**
**भत्तट्ठिय-वोसिरिया, अतिंतु एवं जढा दोसा ॥ ४३७० ॥**

परः प्राह—भक्तवेलायां प्राप्तैस्तावत् प्रथमतो भक्तं ग्रहीतव्यम्, अन्यथा वेलातिक्रमे भक्त-पानलाभो न भवेत् । ततो भक्त-पानं गृहीत्वा वसतिं गवेषयित्वा यदि तदानीमेव तत्र प्रवेशः क्रियते तदा भक्त-पानोपकरणसत्को यो अतिभारस्तेन वाशब्दस्यानुक्तसमुच्चयार्थतया बुभुक्षया तृष्णापरितापनया चोपयोगमप्रयच्छन्तः संयमे ईर्यां न शोधयेयुः, आत्मनि कण्टका-

दिकं न पश्येयुः, एवं च यथाक्रमं संयमा-ऽऽत्मनोर्विराधना । ततः 'भक्तार्थि-व्युत्सृष्टाः' पूर्वं भक्तार्थिताः—बहिरेव समुद्दिष्टास्ततो व्युत्सृष्टाः—कृतपुरीष-प्रश्रवणोत्सर्गाः सन्तो ग्रामम् 'अतियन्तु' प्रविशन्तु, एवं हि 'दोषाः' संयमा-ऽऽत्मविराधनालक्षणाः परित्यक्ता भवन्ति ॥ ४३७० ॥ अथाचार्यः प्रत्युत्तरयति—

**आयरियवयण दोसा, दुविहा नियमा उ संजमा-ऽऽयाए ।**
**वच्चह को वा सामी, असंखडं मंडलीए वा ॥ ४३७१ ॥**

आचार्यस्य वचनमिदम्—त्वदुक्तनीत्या बहिर्भुञ्जानानां नियमाद् 'द्विविधाः' संयमा-ऽऽत्मविराधना[लक्षणाः] दोषा भवन्ति । तथाहि—तैस्तत्र भक्त-पानमानीतं सागारिकाश्च कुतूहलवशात् तद्दर्शनार्थमागताः, ततो यदि तावन्तं कालं भक्त-पानं धारयन्तस्तिष्ठन्ति तदा भारेण महती परितापना भवेत् सूत्रार्थयोश्च परिहाणिरुपजायेत । अथ सागारिकान् ब्रुवते—'व्रजत यूयम्' ततोऽधिकरणं भवति । अथवा ते सागारिका एवमुच्यमाना ब्रवीरन्[1]—कोऽस्य वृक्षस्य देवकुलस्य वा स्वामी ये चास्माकं सम्मुखं 'व्रजत' इति भणत ? । एवमसङ्खडे तैः सह सञ्जाते ततश्च भाजनभेदादयो दोषाः । अथ मण्डल्यां रचितायां सागारिकाः समागच्छन्ति ततो महान्तमुड्डाहं कुर्युः ॥ ४३७१ ॥ अमुमेवार्थं सविशेषमाह—

**भत्तट्ठण सज्झाए, पडिलेहण रत्तिगेण्हणे जं च ।**
**पुव्वण्हम्मि उ गहणे, परिहरिया ते भवे दोसा ॥ ४३७२ ॥**

'भक्तार्थनं' मण्डल्या भोजनं स्वाध्यायं प्रत्युपेक्षणां वा क्रियमाणां विलोक्य ते उड्डाहं उड्डुञ्चकान् वा कुर्वीरन्, तत्रापि तथैवासङ्खडदोषः । अथ ते सागारिकाः प्रद्विष्टाः सन्तो वसतिं न प्रयच्छन्ति ततोऽपरं ग्रामं गच्छेयुः, तत्र च विकाले प्राप्ताः सन्तो रात्रौ वसतिग्रहणं कुर्वन्तो यद् दोषजालमापद्यन्ते तन्निष्पन्नं प्रायश्चित्तम्, अतः पूर्वाह्ण एव वसतेर्ग्रहणं कर्त्तव्यम् । ततश्च 'ते' पूर्वोक्ता दोषाः परिहृता भवन्ति ॥ ४३७२ ॥ किञ्च—

**कोतूहल आगमणं, संखोहेणं अकंठगमणादी ।**
**ते चेवऽसंखडादी, वसहिं च न देंति जं चऽन्नं ॥ ४३७३ ॥**

मण्डल्यां सागारिकाः कौतूहलेनागमनं कुर्युः तत्र कस्यापि संयतस्य संक्षोभेण भक्त-पानस्य 'अकण्ठगमनादिकम्' अश्रोतोगमनप्रभृतिकं भवेत् । अथवा कोऽप्यसहिष्णुर्ब्रूयात्—किमेवं प्रलोकयथ ?; ततस्त एवासङ्खडादयो दोषाः । अथ 'सागारिकम्' इति कृत्वा अभुक्त्वा एव भक्त-पानव्यग्रहस्ता ग्रामं प्रविशन्ति तत्र च यैः सममसङ्खडं कृतं ते वसतिं न प्रयच्छेयुः, अन्यानपि च ददतो निवारयेयुः । "जं चऽन्नं" ति वसतावप्राप्यमाणायां यदन्यद् दोषजातमापद्यन्ते तन्निष्पन्नम् ॥ ४३७३ ॥

अथ वसत्यभावादकृतभोजना एवान्यं ग्रामं गच्छेयुः तत इमे दोषाः—

**भारेण वेयणाए, न पेहई खाणुमाइए दोसे ।**
**इरियाइ संजमम्मी, परिगलमाणे य छक्काया ॥ ४३७४ ॥**

---

१ °न्—किमस्य वृक्षस्य देवकुलस्य वा यूयं स्वामिनः ? । एव° भा० ॥

भक्त-पानस्योपकरणस्य च सम्बन्धिना भारेण वेदना या भवेत् तया च स्थाणु-कण्टकादीन् दोषान् न प्रेक्षते, ततश्चात्मविराधना । यत् पुनरीर्याया अशोधनं सा संयमविराधना । परिगलति च भक्त-पाने षट्कायविराधना ॥ ४३७४ ॥ तत्रप्राप्तानां दोषानभिधित्सुराह—

**पविसण मग्गण ठाणे, वेसित्थि दुगंछिए य सुण्णे य ।**
**सज्झाए संथारे, उच्चारे चेव पासवणे ॥ ४३७५ ॥**

अन्यस्मिन् ग्रामे विकालवेलायां प्रवेशे कृते वसतेर्मार्गणे परस्परस्फिटितानामाकारणेन महानधिकरणदोषो भवति । वेश्यास्त्रीपाटके चर्मकारादिस्थाने वा जुगुप्सिते तिष्ठतां वक्ष्यमाणं दोषजातं 'शून्यगृहादौ च' अप्रत्युपेक्षितायां ⊲ वसतौ स्वाध्यायं ⊳ संस्तारकमुच्चारं प्रश्रवणं च कुर्वतामकुर्वतां च बहवो दोषा भवन्तीति द्वारगाथासमासार्थः ॥ ४३७५ ॥

अथैनामेव विवृणोति—

**सावय तेणा दुविहा, विराहणा जा य उवहिणा उ विणा ।**
**गुम्मिय गहणा-ऽऽहणणा, गोणादी चमढणा रत्तिं ॥ ४३७६ ॥**

विकाले प्रविशतां श्वापदभयं भवति । 'स्तेना द्विविधाः' शरीरापहारिण उपकरणापहारिणश्च, ते तदानीमभिद्रवन्ति । उपधावपहृते या तेन विना तृणग्रहणा-ऽग्निसेवनादिका संयमविराधना तन्निष्पन्नम् । अथवा स प्रत्यन्तप्रदेशवर्त्ती ग्रामः तनस्तत्र बद्धस्थानकाः 'गौल्मिकाः' आरक्षिकपुरुषाः स्तेनादीनभिलीयमानान् रक्षन्ति, ते विकालवेलायां प्राप्तान् 'स्तेना अमी' इति बुद्ध्या ग्रहणा-ऽऽहननादिकं कुर्युः । अथवा विकाले प्रविशन्तो गवादिभिः पादप्रहारादिकां चमढनामासादयन्ति । ⊲ एते रात्रौ प्राप्तानां दोषाः ⊳ ॥ ४३७६ ॥ किञ्च—

**फिडियऽन्नोन्नाऽऽगारण, तेणयं रत्तिं दिया व पंथम्मि ।**
**साणाइ वेस कुच्छिय, तवोवणं मूसिगा जं च ॥ ४३७७ ॥**

विकाले वसतिगवेषणार्थं पृथक् पृथग् गताः, ततः 'स्फिटिताः' परस्परपरिभ्रष्टाः सन्तोऽन्योऽन्यम् आकारणं—व्याहारणं कुर्युः । स्तेनकास्तद्वचनं श्रुत्वा रात्रौ मुषितुमभिलषेयुः, दिवा वा द्वितीये दिवसे 'पथि' मार्गे गच्छतस्तान् स्तेनका मुष्णेयुः । श्वानादयो वा रात्रौ वसतिगवेषणार्थं पर्यटतस्तान् उपद्रवेयुः । "वेस कुच्छिय" त्ति रात्रौ च वसतिमन्वेषयन्तो न जानन्ति किमेतद् गृहं वेश्यापाटकस्य प्रत्यासन्नम् ? उत न ? इति, यद्वा किमेतत् चर्मकार-रजकादिजुगुप्सितकुलासन्नम् ? आहोश्विद् न ? इति । एवं चाजानानास्ते वेश्यापाटकासन्ने प्रतिश्रये वसेयुः ततो लोको ब्रूयात्—अहो ! तपोवनमध्यासते जितेन्द्रिया अमी महर्षय इति । अथ जुगुप्सितस्थानासन्ने स्थितास्ततो लोको ब्रवीत—स्वस्थानं मूषिकाः समागताः, एतेऽप्येवंजातीया इति

---

१ 'वेदनया' च क्षुदादिरूपया स्था° भा० ॥ २ ⊲ ⊳ एतदन्तर्गतः पाठः भा० कां० एव वर्त्तते ॥ ३ गोमादी ताभा० ॥ ४ °णा चेव भा० । एतत्पाठानुसारेणैव भा० प्रतौ व्याख्येति न तत्र "रत्तिं" पदव्याख्या वर्त्तते, दृश्यतां टिप्पणी ५ ॥ ५ ⊲ ⊳ एतदन्तर्गतः पाठः भा० नास्ति ॥ ६ °य राओ दि° भा० ॥ ७ °गा चेव भा० । एतत्पाठानुसारेणैव भा० प्रतौ व्याख्येति न तत्र "जं च" इति पदस्य व्याख्या वर्त्तते । दृश्यतां पत्रं ११८४ टिप्पणी १ ॥

भावः । ◁ "[1]जं च" त्ति यच्च रात्रावन्योऽन्यालपनेऽप्कायानयनादिकमधिकरणं तन्निष्पन्नं प्रायश्चित्तम् । ▷ तथा तत्रोपाश्रये रात्रौ प्राप्ताः सन्तः 'कालभूमी न प्रत्युपेक्षिता' इति कृत्वा यदि स्वाध्यायं न कुर्वन्ति ततः सूत्रा-ऽर्थनाशादयो दोषाः । अथ कुर्वन्ति ततः सामाचारीविराधना ॥ ४३७७ ॥ अथ संस्तारकद्वारं व्याख्याति—

**अप्पडिलेहिय कंटा, बिलं व संथारगम्मि आयाए ।**
**छक्कायाण विराहण, विलीण सेहऽन्नहाभावो ॥ ४३७८ ॥**

अप्रत्युपेक्षितायां वसतौ कण्टका भवेयुः, बिलं वा सर्पादिसम्बन्धि, ततः संस्तारके प्रस्तीर्यमाणे आत्मनि विराधना भवेत् । पृथिव्यादयो वा षट्कायास्तत्र भवेयुः, तेषां संस्तारकेणाक्रम्यमाणानां विराधना भवति । 'विलीनं वा' जुगुप्सितं संज्ञा-कायिक्यादिकं तत्र भवेत्, ततः शैक्षस्य जुगुप्सया 'अन्यथाभावः' उन्निष्क्रमणाभिप्रायो भवेत् ॥ ४३७८ ॥

अथोच्चार-प्रश्रवणद्वारद्वयं युगपदाह—

**खाणुग-कंटग-वाला, बिलम्मि जइ वोसिरिज्ज आयाए ।**
**संजमओ छक्काया, गमणे पत्ते अइंते य ॥ ४३७९ ॥**

अप्रत्युपेक्षिते प्रतिश्रये स्थाणु-कण्टक-[2]व्याला भवेयुः, तदाकुले बिलसमाकुले वा प्रदेशे यदि व्युत्सृजति तत आत्मविराधना । अथ पृथिव्यादिषट्कायवति भूभागे व्युत्सृजति ततः संयमविराधना । एते द्वे अपि विराधने "गमणे" त्ति संज्ञा-कायिकीव्युत्सर्जनार्थं गच्छतः "पत्ते" त्ति संज्ञाभुवं कायिकीभुवं वा प्राप्तस्य "अइंते अ" त्ति संज्ञां कायिकीं वा व्युत्सृज्य भूयोऽपि वसतिं प्रविशतो यथासम्भवं मन्तव्ये ॥ ४३७९ ॥

अथ विराधनाभयाद् न व्युत्सृजति तत इमे दोषाः—

**मुत्तनिरोहे चक्खुं, वच्चनिरोहेण जीवियं चयइ ।**
**उड्डनिरोहे कोढं, गेलन्नं वा भवे तिसु वि ॥ ४३८० ॥**

मूत्रस्य निरोधे विधीयमाने चक्षुरुपहन्यते । वर्चः-पुरीषं तस्य निरोधेन जीवितं परित्यजति, अचिरादेव मरणं भवतीत्यर्थः । ऊर्द्ध्व—वमनं तस्य निरोधे कुष्ठं भवति । 'ग्लान्यं वा' सामान्यतो मान्द्यं 'त्रिष्वपि' मूत्र-पुरीष-वमनेषु निरुध्यमानेषु भवेत् ॥ ४३८० ॥

यत एते दोषा अतः—

**पढम-बिइयाएँ तम्हा, गमणं पडिलेहणा पवेसो य ।**
**पुव्वठियाऽसइ गच्छं, ठवेत्तु बाहिं इमे तिन्नि ॥ ४३८१ ॥**

तस्मात् प्रथमायां द्वितीयस्यां वा पौरुष्यां विवक्षितग्रामे गमनं कृत्वा ततो वसतेः प्रत्युपेक्षणा प्रवेशश्च तस्यां कर्त्तव्यः । कथम्? इत्याह—यदि तत्र केऽपि साधवः पूर्वस्थिताः सन्ति तदा सर्वेऽपि प्रविशन्ति । अथ न सन्ति पूर्वस्थिताः ततो गच्छं क्वचिद् वृक्षादेरधो बहिः स्थापयित्वा 'इमे' ईदृशास्त्रयः साधवो ग्रामं प्रविशन्ति ॥ ४३८१ ॥

**परिणयवय गीयत्था, हयसंका पुंछ चिलिमिली दोरे ।**

---

१ ◁ ▷ एतदन्तर्गतः पाठः भा० नास्ति ॥ २ °व्याल-बिलसमाकुले प्रदेशे भा० ॥

**तिन्नि दुवे एक्को वा, वसहीपेहट्ठया पविसे ॥ ४३८२ ॥**

ये गीतार्थाः परिणतवयसो अत एव 'हतशङ्काः' अशङ्कनीयाः ते गुरुमापृच्छ्य दण्डप्रोञ्छनकं चिलिमिलीं दवरकांश्च गृहीत्वा त्रयो जनास्तदभावे द्वौ जनौ तदभावेको वा वसतिप्रत्युपेक्षणार्थं ग्रामं प्रविशन्ति । ततो वसतिं गृहीत्वा प्रमृज्य च चिलिमिलिकां च दत्त्वा सबालवृद्धमपि गच्छं तत्र प्रवेशयन्ति ॥ ४३८२ ॥

⊲[3] अथ 'विकालवेलायां न प्रवेष्टव्यम्' इति यदुक्तं तदपवदन्नाह— ⊳

**विइयं ताहे पत्ता, पए व पत्ता उवस्सयं न लभे ।**
**सुन्नघर देउले वा, उज्जाणे वा अपरिभोगे ॥ ४३८३ ॥**

द्वितीयपदमत्राभिधीयते—'तदानीं' विकालवेलायामेव प्राप्ताः, यद्वा 'प्रगे' प्रभाते प्राप्ताः परमुपाश्रयं न लभन्ते ततो विकालेऽपि प्रविशेयुः । प्रभातप्राप्ताश्च दिवा शून्यगृहे देवकुले वा उद्याने वा 'अपरिभोग्ये' जनोपभोगरहिते तिष्ठन्ति, तत्रैव च समुद्देशनं कुर्वन्ति ॥ ४३८३ ॥

**आवाय चिलिमिणीए, रन्ने वा निब्भये समुद्दिसणं ।**
**सभए पच्छन्नाऽसइ, कमढग कुरुया य संतरिया ॥ ४३८४ ॥**

अथ शून्यगृहादौ सागारिकाणामापातो भवति ततश्चिलिमिलिकां दत्त्वा समुद्देष्टव्यम् । अरण्यं वा यदि निर्भयं ततस्तत्र गत्वा समुद्दिशन्ति । अथारण्यं सभयं ततो वसिमसमीपे एव यः प्रच्छन्नः प्रदेशस्तत्र समुद्देशनं कर्त्तव्यम । अथ प्रच्छन्नस्थानं नास्ति ततस्तत्रैव शून्यगृहादौ 'कमठकेषु' शुक्ललेपेन सबाह्याभ्यन्तरं लिप्तेषु कांस्यकरोटकाकारेषु समुद्दिशन्ति, 'कुरुकुचा च' समुद्देशनानन्तरं पादप्रक्षालनादिका बहुना द्रवेण कर्त्तव्या, समुद्दिशन्तश्च 'सान्तराः' सावकाशा बृहदन्तराला उपविशन्ति । एवं भुक्त्वा बहिरेव संज्ञादि व्युत्सृज्य ततो ग्रामं प्रविशन्ति । प्रविष्टाश्च या पूर्वं भिक्षां हिण्डमानैर्वसतिः प्रत्युपेक्षिता तस्यां वसन्ति ॥ ४३८४ ॥

कथम् ? इत्याह—

**कोट्ठग सभा व पुव्वं, काल-वियाराइभूमिपडिलेहा ।**
**पच्छा अतिंति रत्तिं, अहव ण पत्ता निसिं चेव ॥ ४३८५ ॥**

'कोष्ठकः' आवासविशेषः 'सभा' प्रतीता, एवमादिकं यत् 'पूर्वं' भिक्षां पर्यटद्भिः प्रत्युपेक्षितं तत्र कालग्रहणयोग्यां भूमिं विचारस्य च—संज्ञाया आदिशब्दात् कायिक्याश्च भूमिं सूर्ये ध्रियमाण एव प्रत्युपेक्षन्ते । ततः पश्चात् सर्वेऽपि वसतौ 'रात्रौ' प्रदोषसमये 'अतियन्ति' प्रविशन्ति । "अहव ण" त्ति अथवा ते साधवस्तत्र निशायामेव प्राप्ता भवेयुः ॥ ४३८५ ॥

ततः को विधिः ? इत्याह—

**गोम्मिय भेसण समणा, निब्भय बहि ठाण वसहिपडिलेहा ।**
**सुन्नघर पुव्वभणिए, कंचुग तह दारुदंडे य ॥ ४३८६ ॥**

गुल्मेन—समुदायेन चरन्तीति 'गौल्मिकाः' स्थानरक्षपालाः ते यदि 'भेषणं' वित्रासनं

१ गुरुनापृ° भा० कां० ॥ २ ⊲ ⊳ एतदन्तर्गतमवतरणं भा० नास्ति ॥ ३ °त्र प्रोच्यते कां० ॥ ४ रत्तिं, पत्ता वा ते भवे रत्तिं भा० ॥

कुर्वन्ति ततो वक्तव्यम्—श्रमणा वयं न स्तेनाः । यदि च स सन्निवेशो निर्भयो भवति तदा "बहि ठाण" ति बहिरेव गच्छस्तावदवस्थानं करोति, वृषभास्तु वसतिप्रत्युपेक्षणार्थं ग्रामं प्रविशन्ति । तत्र च शून्यगृहं पूर्वभणितेन विधिना प्रत्युपेक्ष्य सर्पादिपतनभयाद् गोपालकञ्चुकं परिधाय 'दारुदण्डेन' दण्डप्रोञ्छनकेन वसतिमुपरि प्रस्फोटयन्ति, ततो गच्छः प्रविशति ॥ ४३८६ ॥ अथ संस्तारकग्रहणविधिमाह—

**संथारगभूमितिगं, आयरिए सेसगाण एक्केक्कं ।**
**रुंदाएँ पुप्फकिन्ना, मंडलिया आवली इतरे ॥ ४३८७ ॥**

"आयरिए" त्ति षष्ठी-सप्तम्योरर्थं प्रत्यभेदादाचार्यस्य योग्यं संस्तारकभूमित्रयं प्रथमतो निरूपणीयम्—तत्रैका निवाता संस्तारकभूमिः, अपरा प्रवाता, अन्या निवात-प्रवाता । शेषाणां साधूनां योग्यामेकैकां संस्तारभूमिमन्वेषयेत् । इह च वसतिस्त्रिधा—विस्तीर्णा क्षुल्लिका प्रमाणयुक्ता च । तत्र रुन्दा नाम–विस्तीर्णा घट्टशालादिरित्यर्थः तस्यां 'पुष्पावकीर्णाः' पुष्पप्रकरवदवकीर्णाः–अनियतक्रमा अयथायथं स्वपन्ति येन सागारिकाणामवकाशो न भवति । अथ क्षुल्लिका ततो मध्ये पात्रकाणि कृत्वा मण्डलिकाकारेण पार्श्वतः शेरते । 'इतरा नाम' प्रमाणयुक्ता तस्याम् 'आवल्या' पङ्क्त्या स्वपन्ति ॥ ४३८७ ॥

⊲ अत्रैव[2] विधिविपर्यासे प्रायश्चित्तमाह—⊳

**सीसं इतो य पादा, इहं च मे वेंटिया इहं मज्झं ।**
**जइ अगहियसंथारो, भणाइ लहुगोऽहिकरणादी ॥ ४३८८ ॥**

इतो मे शीर्षं भविष्यति, इह मे पादौ भविष्यतः, इह च मे वेण्टिका भाजनानि वा स्थास्यन्ति, एवं यद्यगृहीतसंस्तारको आत्मीयया इच्छया भणति विण्टिकादिकं च स्थापयति तदा लघुमासः प्रायश्चित्तम् ; अधिकरणादयश्च दोषा भवन्ति । अधिकरणं नाम–द्वितीयोऽपि साधुरेवमेव ब्रूयात्—ममाप्यत्रैव शीर्षादि भविष्यतीतिः ततश्चास्थिभङ्गादयो दोषाः ॥ ४३८८ ॥

यत एवमतः—

**संथारग्गहणाए, वेंटियउक्खेवणं तु कायव्वं ।**
**संथारो घेत्तव्वो, माया-मयविप्पमुक्केणं ॥ ४३८९ ॥**

"संथारग्गहणाए" त्ति आर्षत्वात् स्त्रीत्वम्, संस्तारकग्रहणकाले वेण्टिकाया उत्क्षेपणं कर्त्तव्यं येन सुखेनैव दृष्टायां भुवि संस्तारका विभक्तुं शक्यन्ते । स च संस्तारको यो यस्मै साधवे दीयते स तेन माया-मदविप्रमुक्तेन ग्रहीतव्यः । माया नाम–'अहं वातार्थी, ममात्रावकाशं प्रयच्छत' इत्यादिका सुन्दरतरावकाशलोभेनासद्भूतकारणनिवेदनलक्षणा, मदः–अहङ्कारः 'अहो ! अहममुष्मादपि गरीयान् येन मे शोभना संस्तारकभूमिः प्रदत्ता' इति ॥ ४३८९ ॥

अथ किमर्थं संस्तारकग्रहणकाले वेण्टिका उत्क्षिप्यन्ते ? उच्यते—

**सम-विसमाइँ न पासइ, दुक्खं च ठियम्मि ठायई अन्नो ।**
**नेव य असंखडादी, विणयो अममिजया चेव ॥ ४३९० ॥**

१ 'घट्टशाला°' भा० ॥ २ ⊲ ⊳ एतच्चिह्नमध्यगतमवतरणं भा० नास्ति ॥

विण्टिका यदि नोत्क्षिप्यन्ते तदा गणावच्छेदिकादिसंस्तारकान् विभजमानः सम-विषमाणि स्थानानि न पश्यति, अवकाशानित्यर्थः । तथा एकस्मिन् साधौ विण्टिकासहिते पूर्वस्थिते सति अन्यो न तिष्ठति, स्थातुं न शक्नोतीति भावः । अपि च वेण्टिकासूत्क्षिप्तासु असङ्खडादयो दोषा नैव भवन्ति । यथारत्नाधिकं च संस्तारकग्रहणे विनयः कृतो भवति । 'अममता च' ममत्वं संस्तारकभूमिविषयं परिहृतं भवति । अतः साधुभिः स्वस्वोपकरणे प्रत्युपेक्षिते उपाश्रये च प्रमार्जिते सति सूरिभिर्वक्तव्यम्—आर्याः! उत्क्षिपत स्वाः स्वा विण्टिकाः । एवमुक्ते यो नोत्क्षिपति तस्य मासलघु ॥ ४३९० ॥

अथ वेण्टिकासूत्क्षिप्यमाणासु कश्चिदिमां मायां कुर्यात्—

**संथारग्गहणम्मि य, कंटग वीयार पासवण धम्मे ।**
**पयलणे मासो गुरुओ, सेसेसु वि मासियं लहुगं ॥ ४३९१ ॥**

संस्तारग्रहणकाले सम-सुन्दरभूमिलोभेन कण्टकोद्धरणमहं सम्प्रति करिष्यामि, 'विचारं वा' संज्ञां वा व्युत्स्रष्टुं प्रश्रवणं वा कर्तुं बहिर्गमिष्यामि, धर्मं वा शय्यातरादेरग्रे कथयिष्यामि इत्यादि ब्रूयात्, प्रचलायनं वा तदानीं विदध्यात्, एवं मायायाः करणे आज्ञादयो दोषाः । अत्र च प्रचलायने मासगुरु । 'शेषेषु' कण्टकादिषु मायाभेदेषु मासलघुकम् ॥ ४३९१ ॥

अथ कण्टकादिपदानि विवृणोति—

**दुक्खं ठिओ व निज्जइ, न याणुवाएण पेल्लिउं सक्का ।**
**जो वि य णे अवणेहिइ, तं पि य नाहामि इति मंता ॥ ४३९२ ॥**
**संथारभूमिलुद्धो, भणाइ छंदेण भंते ! गिण्हित्तो ।**
**संथारगभूमीओ, कंटगमहमुद्धरामेणं ॥ ४३९३ ॥**

कोऽपि सम-सुन्दरे अवकाशे संस्तारकं कर्तुकामः, तत्र चापरः कोऽपि साधुः स्थित उपविष्टो वर्तते, स च 'दुःखं' दुःखेन 'नीयते' अन्यत्र स्थाप्यते, न च 'अनुपायेन' कण्टकोद्धरणादिव्याजमन्तरेण प्रेरयितुं शक्यः, योऽपि च "णे" इति मदीयं कण्टकमपनेष्यति तमप्यहं ज्ञास्यामीति मत्वा संस्तारकभूमिलुब्धो भणति—भदन्त ! इतः संस्तारकभूमीत उत्थाय 'छन्देन' स्वाभिप्रायेण 'गृह्णीत' संस्तारकम्, अहं पुनरत्र कण्टकमेनमुद्धरामीति । एवं मायाकरणे मासलघु प्रायश्चित्तम् ॥ ४३९२ ॥ ४३९३ ॥

◁ अथ सद्भावादेव कण्टको लग्नः ततः किम्? इति अत आह—▷[2]

**लग्गे व अणहियासम्मि कंटए उक्खिवावे अन्नेणं ।**
**मज्झवगमवणेत्ता, कमागयं गेण्हह ममं पि ॥ ४३९४ ॥**

'वा' इत्यथवा सद्भावेनैव तस्य कण्टको लग्नः स च अनधिसह्यः—सोढुमशक्यः ततो वेण्टिकामन्येनोत्क्षेपयेत् । उत्क्षेप्य च ब्रूयात्—मदीयं कण्टकमपनीय क्रमागतं ममापि योग्यं संस्तारकं गृह्णीत; एष शुद्धः ॥ ४३९४ ॥ अथ विचारादिद्वाराण्यतिदिशन्नाह—

**एमेव य वीयारे, उज्जु अणुज्जू तहेव पासवणे ।**

१ °षयं न भव° भा० ॥ २ ◁ ▷ एतदन्तर्गतमवतरणं भा० नास्ति ॥

**धम्मकहालक्खेण व, आवज्जइ मासियं मादी ॥ ४३९५ ॥**

एवमेव विचारविषयेऽपि ऋजुरनृजुश्च वक्तव्यः, मायी अमायी चेत्यर्थः । तथैव प्रश्रवणद्वारेऽपि विभाषा कर्त्तव्या । धर्मकथाया वा लक्ष्येण—व्याजेन कश्चित् क्रमागतसंस्तारकव्यत्यासं करोति सोऽपि 'मायी' मायावानिति कृत्वा मासिकं लघुकमापद्यते । अथ सद्भावतो धर्मकथां करोति ततः शुद्ध एव ॥ ४३९५ ॥

अपि च—तदानीं सद्भावतो धर्मकथायां विधीयमानायाममी गुणाः—

**दुवियड्ढबुद्धिमलणं, सड्ढा सेज्जायरेयराणं च ।**
**तित्थविवड्ढि पभावण, असारियं चेव कहयंते ॥ ४३९६ ॥**

श्रोतॄणां या दुर्विदग्धा—विपरीतशास्त्रपल्लवग्राहिणी बुद्धिस्तस्या मलनं—मर्दनं कृतं भवति । शय्यातरस्य इतरेषां च—श्राद्धानां श्रद्धा वर्धिता भवति । धर्मश्रवणानन्तरं च बहुषु भव्येषु प्रव्रज्यां प्रतिपद्यमानेषु तीर्थस्य विवृद्धिः कृता भवति, प्रभावना च प्रवचनस्य जायते—अहो ! विजयते जैनेन्द्रशासनं यत्रेदृशा धर्मकथालब्धिसम्पन्ना इति । अपि च—सागारिका बहिर्धर्मश्रवणव्याक्षिप्ताः सन्तः प्रतिश्रयमध्ये न प्रविशेयुः, ततश्च साधूनामुपकरणं प्रत्युपेक्षमाणानामसागारिकं भवति । एवमेते गुणा धर्मं कथयति भवन्ति ॥ ४३९६ ॥

अथ प्रचलायनद्वारं भावयति—

**मा पयल गिण्ह संथारगं ति पयलाइ इय वि जइ वुत्तो ।**
**को नाम न निग्गिण्हइ, खणमित्तं तेण गुरुओ से ॥ ४३९७ ॥**

गणावच्छेदिकादिना कश्चित् प्रचलायमानो भणितः—मा प्रचलाय, गृहाण संस्तारकम्; इति उक्तोऽपि यद्यसौ प्रचलायते ततो ज्ञातव्यम्—शठ एषः । कुतः ? इत्याह—'को नाम' महानिद्रालुरपि 'क्षणमात्रं' यावता संस्तारको गृह्यते तावन्मात्रं कालं निद्रां न निगृह्णाति ? स तु तावन्तमपि कालं निद्रानिरोधमकुर्वाणः परिस्फुटं मायावानेव मन्तव्यः । अत एव "से" तस्य तीव्रतरमायाविनो मासगुरु प्रायश्चित्तम् ॥ ४३९७ ॥ अथ संस्तारकग्रहणे विधिमाह—

**विच्छिण्ण कोट्टिमतले, डहराए विसमए अ घेप्पंति ।**
**होइ अहाराइणियं, राइणिया ते इमे होंति ॥ ४३९८ ॥**

विस्तीर्णायां वा 'डहरायां वा' सङ्कीर्णायां वसतौ कुट्टिमतले वा विषमे वा भूभागे यथारत्नाधिकं संस्तारका गृह्यन्ते । ते च रत्नाधिका इमे भवन्ति ॥ ४३९८ ॥

**उवसंपज्ज गिलाणे, परित्त खमए अवाउडिय थेरे ।**
**तेण परं विच्छिण्णे, परियाए मोत्तिमे तिन्नि ॥ ४३९९ ॥**

प्रथमतो गुरूणां संस्तारकत्रयं दत्त्वा ततो यो ज्ञानाद्यर्थमुपसम्पदं प्रतिपन्नस्तस्य संस्तारको दातव्यः । ततो ग्लानस्य, ततः परीत्तोपधेः, ततः क्षपकस्य, ततो 'अपावृतिकस्य' 'अपावृतेन मया सकलाऽपि रजनी गमनीया' इत्येवं प्रतिपन्नाभिग्रहस्य, तदनन्तरं 'स्थविरस्य' श्रुतेन वयसा वा वृद्धस्य, ततः परं विस्तीर्णे प्रतिश्रये पर्यायरत्नाधिकक्रमेण संस्तारका ग्रहीतव्याः,

१ °माप्नोति । अथ कां० ॥ २ °रको गृह्यते । ते त० डे० मो० ॥ ३ °रको ग्रहीतव्यः । परं त० डे० ॥

परं मुक्त्वा 'अमून् त्रीन्' क्षुल्लक-शैक्ष-वैयावृत्यकरान् वक्ष्यमाणगाथायामभिधास्यमानान् ॥ ४३९९ ॥ आह उपसम्पन्न-ग्लानादीनां क्रियतां प्रथमं संस्तारकप्रदानेनानुग्रहः, यस्तु तपस्वी विपुलां निर्जरामभिलषन् स्वयमेव 'अपावृतेन मया स्थातव्यम्' इत्येवमभिग्रहं गृह्णाति तस्य किमर्थं स्थविरादिभ्यः प्रथमं संस्तारको दीयते ? उच्यते—

**कामं सकामकिच्चो, अभिग्गहो न उ बलाभिओगेणं ।**
**तणुसाहारणहेतुं, तह वि निवाएम्हि ठावेंति ॥ ४४०० ॥**

'कामम्' अनुमतमिदम्—स्वकामेन—स्वकीययैव इच्छया कृत्यः—कर्तव्यो अभिग्रहो न तु बलाभियोगेन, परं तथापि 'तनुसाधारणहेतोः' शरीरस्य शीतोपद्रवसंरक्षणनिमित्तं निवाते प्रदेशे तं स्थापयन्ति ॥ ४४०० ॥ कुतः ? इति चेद्[1] इत्याह—

**अन्नोन्नकारेण विनिज्जरा जा, न सा भवे तस्स विवज्जयेणं ।**
**जहा तवस्सी धुणते तवेणं, कम्मं तहा जाण तवोऽणुमंता ॥ ४४०१ ॥**

अन्योन्यकारो नाम—परस्परं वैयावृत्यकरणं तेन या 'विनिर्जरा' विशिष्टकर्मक्षयरूपा सा 'तस्य' अन्योन्यकारस्य 'विपर्ययेण' व्यतिरेकेण न भवति । यथा किल तपस्वी तपसा 'कर्म' ज्ञानावरणादि धुनोति तथा यस्तस्य साहाय्यकरणेन तदीयतपसो अनुमन्ता तमपि तथैव कर्मक्षयकारिणं जानीहि । अतो युक्तमेवापावृताभिग्रहिकस्यानुग्रहविधानम् ॥ ४४०१ ॥

अथ यदुक्तम्—'अमून् त्रीन् मुक्त्वा' ( गा० ४३९९ ) इति तस्य व्याख्यानार्थमाह—

**बीभेंत एव खुड्डे, वेयावच्चकरे सेहे जस्स पासम्मि ।**
**विसमऽप्पे तिन्नि गुरुणो, इतरे गहियम्मि गिण्हंति ॥ ४४०२ ॥**

क्षुल्लकः स्वभावादेव बिभ्यन् भवति, ततो बहिः स्थाप्यमानः कूजित-रुदितादि कुर्यात्, अतो यस्तं परिवर्तयति तस्य समीपे स्थाप्यते । 'वैयावृत्यकरः' ग्लानस्य प्रतिचरकः स ग्लानस्यैव पार्श्वे क्रियते । शैक्षो यस्य पार्श्वे शिक्षां गृह्णाति तस्यान्तिके स्थापनीयः । तथा विषमे वा 'अल्पे वा' सङ्कीर्णे प्रतिश्रये त्रीन् संस्तारकान् गुरूणां दत्त्वा ततः 'इतरे' उपसम्पन्नादयो गुरुभिर्गृहीते सति संस्तारकत्रये यथोक्तक्रमेण गृह्णन्ति । एष सङ्ग्रहगाथासमासार्थः ॥४४०२॥

अथास्या एव पूर्वार्धं विभावयिषुराह—

**बीभेज्ज बाहिं ठवितो उ खुड्डो, तेणाइगम्मो य अजग्गिरो य ।**
**सारेइ जो तं उभयं च नेई, तस्सेव पासम्मि करेंति तं तू ॥ ४४०३ ॥**

क्षुल्लको बहिः स्थापितः सन् बिभियात्, स्तेनादिगम्यो वा भवेत्, 'अजागरणशीलश्च' असौ बहिः सुप्तः सन् केनाप्यनुत्थापितः प्रतिक्रमणवेलायामपि न जागृयात्, ततो यः 'तं' क्षुल्लकं 'सारयति' शिक्षां ग्राहयति 'उभयं च' संज्ञा-कायिकीलक्षणं तदीयं यः 'नयति' परिष्ठापयति तस्यैव पार्श्वे तं कुर्वन्ति ॥ ४४०३ ॥

**संथारगं जो इतरं व मत्तं, उव्वत्तमादी व करेइ तस्स ।**
**गाहेइ सेहं खलु जो व मेरं, करेंति तस्सेव उ तं सगासे ॥ ४४०४ ॥**

---

१ °द् उच्यते भा० ॥

ग्लानस्य संस्तारकं यः करोति, 'इतरद्वा' संज्ञाद्युत्सर्जनां यो ग्लानं कारयति, मात्रकं वा परिष्ठापयति, उद्वर्त्तन-परावर्त्तनादीनि वा 'तस्य' ग्लानस्य यः करोति तं वैयावृत्यकरं तस्यैव पार्श्वे स्थापयन्ति । यो वा शैक्षं 'मेरां' सामाचारीं ग्राहयति तं तस्यैव सकाशे कुर्वन्ति ॥४४०४॥ एवं विस्तीर्णायां वसतौ तावद् विधिरुक्तः, अथ सङ्कीर्णायां विधिमभिधित्सुराह—

**सम-विसमा थेराणं, आवलिया तत्थ अप्पणो इच्छा ।**
**खेल पवाय निवाए, पाहुणए जं विहिग्गहणं ॥ ४४०५ ॥**

सङ्कीर्णायां वसतौ सर्वत्रापि संस्तारणीयम्, न पुनर्विषम इति कृत्वा कश्चिदप्यवकाशः शून्यो मोक्तव्यः । ततः 'आवलिकया' पङ्क्त्या यथारत्नाधिकं विभज्यमाना संस्तारकभूमिः 'स्थविराणां' वृद्धानां समा वा समागच्छेद् विषमा वा । 'तत्र' विषमायां तेषामात्मीया इच्छा, कोऽर्थः ? यदि सहिष्णुतया विषमेऽपि संस्तारयितुं शक्नुवन्ति ततस्तत्रैव संस्तारयन्ति, अथासहिष्णवस्ततस्तरुणान् समां भूमिमनुज्ञापयन्ति । "खेल" त्ति यस्य खेलः स्पन्दते तस्य मध्येऽवकाशः समायातः, ततस्तेन विविक्तेऽवकाशे यस्य संस्तारकः सोऽनुज्ञापनीयः । यः पित्तलः स प्रवाते स्थातुमभिलषति, यस्तु वातलः स निवाते, एतयोः परस्परं संस्तारकपरावर्त्तो भवति । 'प्राघुणकः' आचार्यादिः समागतस्तस्यापि यद् विधिना वक्ष्यमाणेन संस्तारकग्रहणं तदनुज्ञातमिति पुरातनगाथासमासार्थः ॥ ४४०५ ॥ अथैनामेव विभावयिपुराह—

**विसमो मे संथारो, गाढं पासा मि एत्थ भज्जंति ।**
**को देज्ज मज्झ ठाणं, समं ति तरुणा सयं बेंति ॥ ४४०६ ॥**

संस्तारकभूमिः स्थविराणां विषमा तरुणानां समा समायाता, ततो यः स्थविरोऽसहिष्णुः स ब्रूयात्—विषमः 'मे' मदीयः संस्तारकः, पार्श्वाणि च 'अत्र' विषमे शयानस्य गाढं मम भज्यन्ते, अतः को नाम मह्यं समं स्थानं दद्यात् ? इति । ततो ये तरुणास्ते स्वयमेव गुरुभिरनुक्ता ब्रुवते—अस्माकमवकाशे यूयं संस्तारयतेति ॥ ४४०६ ॥

**जइ पुण अत्थिज्जंता, न देंति ठाणं बला न दावेंति ।**
**देंति तहिँ पुंछणादी, बहिभावाऽसंखडं मा वा ॥ ४४०७ ॥**

यदि पुनस्तरुणाः समं भूभागमर्थ्यमाना अपि न प्रयच्छन्ति ततो वृषभाः सूरयो वा न तैर्बलाद् दापयन्ति, मा बलाद् दाप्यमानास्ते बहिर्भावं गच्छेयुः असङ्खडं वा कुर्युः । स्थविराश्च 'तत्र' विषमेऽवकाशे पादप्रोञ्छनादिकं ददति येन सुखेनैव संस्तारयितुं शक्यते ॥ ४४०७ ॥

खेलद्वारमाह—

**मज्झम्मि ठाओ मम एस जातो, पासंदए निच्च ममं च खेलो ।**
**ठाओ सरावस्स य नत्थि एत्थं, सिंचिज्ज खेलेण य मा हु सुत्ते ॥ ४४०८ ॥**

श्लेष्मलो ब्रूयात्—मम तावदेषः 'स्थायः' अवकाशो मध्ये सञ्जातः, मम च 'खेलः' श्लेष्मा नित्यं प्रस्पन्दते, अत्र चोभयतोऽपि पार्श्ववर्त्तिसंस्तारकाकीर्णे 'शरावस्य' खेलमल्लकस्य नास्त्यवकाशः, अत्र च संस्तारयन्नहं प्रत्यासन्नसुप्तान् शेषसाधूनपि मा श्लेष्मणा सिञ्चेयमिति ।

१ °त्थं, सिंसेज्ज तादी° ॥

ततो यस्य विविक्ते प्रदेशे संस्तारकः स तस्यात्मीयमवकाशं प्रयच्छति ॥ ४४०८ ॥

प्रवातनिवातद्वारमाह—

**निद्दं न विंदामिह उव्वरेणं, को मे पवायम्मि दएज्ज भूमिं ।**
**सीएण वाएण य मज्झ बाहिं, न पच्चए अन्नमहऽन्न आह ॥ ४४०९ ॥**

पित्तलो ब्रूयात्—अहम् 'इह' निवाते संस्तारयन् 'उव्वरेण' घर्मोपतापेन निद्रां 'न विन्दामि' न लभे, अतः को नाम मे प्रवाते भूमिकां दद्यात्?; 'अथ' अनन्तरम् 'अन्यः' वातलः सः 'आह' ब्रूयात्—शीतेन वातेन च पीड्यमानस्य मम बहिः प्रसुप्तस्यान्नं 'न पच्यते' न जीर्यते; तत एतौ परस्परं संस्तारकं परिवर्त्तयतः ॥ ४४०९ ॥

इह सङ्ग्रहगाथायां खेल-प्रवात-निवातग्रहणमुपलक्षणं तेनेदमभिधीयते—

**जोइंति पक्कं न उ पक्कलेणं, ठावेंति तं सूरहगस्स पासे ।**
**एक्कम्मि खंभम्मि न मत्तहत्थी, बज्झंति वग्घा न य पंजरे दो ॥ ४४१० ॥**

यः 'पक्कः' असङ्खडिकः कलहनशील इत्यर्थः तं पक्वेन सह न योजयन्ति, किन्तु यः 'शूरहकः' कलहादिकुर्वतां शिक्षां कर्त्तुं समर्थस्तस्य पार्श्वे तं स्थापयन्ति । यत एकस्मिन्नालानस्तम्भे द्वौ मत्तहस्तिनौ न बध्येते, परस्परं भण्डनसम्भवात्; एवमेकस्मिन् पञ्जरे द्वौ व्याघ्रौ न प्रक्षिप्येते ॥ ४४१० ॥

अथ "पाहुणए जं विहिग्गहणं" ( गा० ४४०५ ) ति पदं व्याख्यातुमाह—

**रायणिओ आयरिओ, आयरियस्सेव अक्कमइ ठाणं ।**
**इतरो वसभट्ठाए, ठायइ जे ते व दो ठाणा ॥ ४४११ ॥**

यदि प्राघूर्णक आचार्यो रत्नाधिकस्ततोऽसावाचार्यस्यैव 'स्थानम्' अवकाशमाक्रामति, वास्तव्याचार्यस्थाने संस्तारयतीत्यर्थः । 'इतरः' वास्तव्याचार्यः 'वृषभस्य' उपाध्यायस्य 'स्थाने' अवकाशे 'तिष्ठति' संस्तारयति; अथवा यद् आचार्यसत्कं संस्तारकत्रयं तन्मध्यादेकस्मिन् प्राघुणकाचार्यः प्रसुप्तः, "जे ते व दो ठाण" त्ति ततो यौ तौ द्वाववशिष्यमाणौ संस्तारकौ तयोरेकस्मिन् वास्तव्याचार्यः संस्तारयति ॥ ४४११ ॥

**ओमो पुण आयरिओ, वसभोगासे अणंतरे वसभो ।**
**संछोभपरंपरओ, चरिमं सेहं च मोत्तूणं ॥ ४४१२ ॥**

अथासौ प्राघुणक आचार्यः 'अवमः' पर्यायलघुस्ततोऽसौ वृषभस्यावकाशे संस्तारयति । वृषभस्तु तदनन्तरे—अवमरात्निकस्थाने स्वपिति[3] । एवं संस्तारकाणां 'संछोभपरम्परकः' परम्परया स्थानान्तरसङ्क्रमणरूपः तावद् मन्तव्यो यावद् द्विचरमः साधुः । यस्तु चरमः—सर्वपाश्चात्यावकाशशायी तं शैक्षं च मुक्त्वा, तयोः संस्तारको नान्यत्र सङ्क्रामयितव्य इति भावः ॥ ४४१२ ॥ इदमेव व्याचष्टे—

---

१ °हकरणशीलः तं भा० ॥ २ °स्य "ठाए" अव° भा० ॥

३ एतदग्रे कां० पुस्तके—॥ छ ॥ इति श्रीकल्पस्य द्वितीयं खण्डं ॥ छ ॥ इति वर्त्तते । मो० पुस्तके—ग्रन्थाग्रं० १५१६० इति वर्त्तते ॥

**चरिमो बहिं न कीरइ, सेहं न सहायगा विजुयलेंति ।**
**रंगिड्ढिपुरिसनायं, सव्वे तत्थेव मावेंति ॥ ४४१३ ॥**

'चरमः' पर्यन्तवर्ती बहिर्न क्रियते, शैक्षमपि 'सहायकात्' शिक्षाग्राहकान्न 'वियुगलयन्ति' युगलान्न स्फेटयन्ति, बहिर्निष्काश्यमानौ हि तौ बहिर्भावं गच्छेताम्, बहिर्भावगमनतः प्रतिगमनादीनि कुर्यातां, अतः संस्तारकाः संक्षिप्य तथा प्रस्तरणीयाः यथा 'तयोरपि' चरम-शैक्षयोः संस्तारकौ प्रतिश्रयमध्य एव पूर्येते । तथा चात्र रङ्गे ये ऋद्धिमन्तः पुरुषास्तैर्ज्ञातम्—दृष्टान्तः कर्त्तव्यः—यथा रङ्गभूमौ पूर्वं प्राकृतजनैराकीर्णायामपि ये राजा-ऽमात्य-श्रेष्ठिप्रभृतयः प्रधानपुरुषाः पश्चादागच्छन्ति तेषामुपवेशनयोग्यान् अवकाशान् दत्त्वा संक्षिप्ततरावकाशस्थापनेन प्रागुपविष्टा अपि तत्रैव माप्यन्ते; एवमस्माकमपि प्राघूर्णकाः प्रधानपुरुषकल्पाः, ततस्तेषां यथायोग्यमवकाशान् दत्त्वा वृषभाः संस्तारकभूमीः संक्षिप्य प्रयच्छन्तः सर्वानपि साधून् तत्रैव मापयन्ति ॥ ४४१३ ॥[1] ( ग्रन्थाग्रम्—२९४२० )

॥ **यथारत्नाधिकशय्यासंस्तारग्रहणप्रकृतं समाप्तम्** ॥

## कृ ति क र्म प्र कृ त म्

सूत्रम्—

**कप्पइ निग्गंथाण वा निग्गंथीण वा अहारायणियाए किइकम्मं करित्तए १८ ॥**

अथ कोऽस्य सूत्रस्य सम्बन्धः ? इत्याह—

**संथारं दुरुहंतो, किइकम्मं कुणइ वातिगं मायं ।**
**पातो वि य पणिवायं, पडिबुद्धो एक्कमेक्कस्स ॥ ४४१४ ॥**

'मायं' प्रदोषसमये पौरुष्यां पूर्णायां गुरुप्रदत्तायां भुवि प्रमार्ज्य संस्तारकमारोहन् 'वाचिकं कृतिकर्म' 'नमः क्षमाश्रमणेभ्यः' इति लक्षणं वाचनिकं प्रणामं करोति, 'प्रातरपि च' प्रभातेऽपि प्रतिबुद्धः सर्वेकैकस्य साधोः 'प्रणिपातं' वन्दनं यथारत्नाधिकं करोति, अत इदं कृतिकर्मसूत्रमारभ्यते ॥ ४४१४ ॥

अनेन सम्बन्धेनायातस्यास्य व्याख्या—कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा 'यथारात्निकं' यो यो रत्नाधिकस्तदनतिक्रमेण कृतिकर्म कर्त्तुमिति सूत्रसङ्क्षेपार्थः ॥

अथ विस्तरार्थं भाष्यकार आह—

**किइकम्मं पि य दुविहं, अब्भुट्ठाणं तहेव वंदणगं ।**
**वंदणगं तहिँ ठप्पं, अब्भुट्ठाणं तु वोच्छामि ॥ ४४१५ ॥**

---

१ एतदग्रे त० पुस्तके—॥ छ ॥ ग्रन्थाग्रं० १४१६० ॥ चतुर्दशसहस्र एकाग्रशतषष्टिः ॥ एतत् ग्रन्थाग्रं ॥ छ ॥ ॥ छ ॥ कल्पटीका द्वितीयखंडं ॥ ॥ श्रीः ॥ ॥ इति वर्त्तते । डे० पुस्तके—॥ छ ॥ ग्रन्थाग्रं० १४१६० ॥ इति वर्त्तते । ताटी० पुस्तके—॥ छ ॥ ग्रंथाग्रं १४१६० ॥ ॥ छ ॥ मंगलं महाश्रीः ॥ शुभं भवतु समस्तसंघस्य ॥ छ ॥ श्री कल्पवृत्तिद्वितीयखंडं इति वर्त्तते ॥

कृतिकर्म द्विविधम्, तद्यथा—अभ्युत्थानं वन्दनकं च । 'तत्र' तयोर्द्वयोर्मध्ये वन्दनकं 'स्थाप्यं' पश्चाद् भणिष्यत इत्यर्थः । अभ्युत्थानं तु साम्प्रतमेव वक्ष्यामि ॥ ४४१५ ॥

प्रतिज्ञातमेव निर्वाहयन्नाह—

**अब्भुट्ठाणे लहुगा, पासत्थाद-ऽण्णतित्थि-गिहिएसु ।**
**अहछंद अण्णतित्थिणि, संजइवग्गे अ गुरुगा उ ॥ ४४१६ ॥**

साधुभिः साधूनामेवाभ्युत्थानं विधेयं न गृहस्थादीनाम्, तत्रापि संविग्नानामेव न पार्श्वस्थादीनाम् । अथ पार्श्वस्थादीनामन्यतीर्थिकानां गृहिणां च अभ्युत्थानं करोति तदा चत्वारो लघवः । यथाच्छन्दानामन्यतीर्थिनीनां संयतीवर्गस्य चाभ्युत्थाने चतुर्गुरवः ॥ ४४१६ ॥

अथात्रैव दोषानुपदर्शयति—

**उट्ठेइ इत्थि जह एस एंतिं, धम्मे ठिओ नाम न एस साहू ।**
**दक्खिन्नपन्ना वसमेइ चेवं, मिच्छत्तदोसा य कुलिंगिणीसु ॥ ४४१७ ॥**

संयतं कस्या अपि स्त्रिय अभ्युत्तिष्ठन्तं दृष्ट्वा श्रावकादिश्चिन्तयेत्—यथैष साधुः स्त्रियमायातीं दृष्ट्वाऽभ्युत्तिष्ठति तथा 'नाम' इति सम्भावनायाम्, सम्भावयाम्यहम्—नैष सम्यग् 'धर्मे' श्रुत-चारित्रात्मके स्थितः, अन्यथा किमेवमेनामभ्युत्तिष्ठति ?, अपि च—एवं स्त्रिया अभ्युत्तिष्ठन् दाक्षिण्यवान् भवति, दाक्षिण्यपण्याच्च तस्याः 'वशम्' आयत्ततामुपैति, ततश्च ब्रह्मचर्यविराधनादयो दोषाः । यास्तु कुलिङ्गिन्यः—तापसी-परिव्राजिकाप्रभृतयः तास्वभ्युत्थीयमानासु यथा-भद्रकादीनां मिथ्यात्वगमनादयो दोषा भवन्ति ॥ ४४१७ ॥ अन्यतीर्थिकेषु पुनरिमे दोषाः—

**ओभावणा पवयणे, कुतित्थ उब्भावणा अबोही य ।**
**खिंसिज्जंति य तप्पक्खिएहिं गिहिसुव्वया बलियं ॥ ४४१८ ॥**

भौत-भागवत-सौगतादीनामन्यतीर्थिकानामभ्युत्थाने प्रवचनस्य महती अपभ्राजना भवति—अहो ! निःसारं प्रवचनममीषाम् यदेवमन्यदर्शनिनामभ्युत्थानं विदधतीति । तदीयस्य च कुतीर्थस्य 'उद्भावना' प्रभावना भवति—एतदेव दर्शनं शोभनतरं यदेवं जैना अप्येतत्प्रति-पन्नानभ्युत्तिष्ठन्तीति । "अबोही य" त्ति प्रवचनलाघवप्रत्ययं मिथ्यात्वमोहनीयं कर्मोपचित्य भवोदधौ परिभ्रमन् बोधिलाभं नासादयति । ये च गृहिणः सुव्रताः—शोभनाणुव्रतधारकाः सुश्रावका इत्यर्थः ते 'तत्पाक्षिकैः' शाक्यादिपक्षपातिभिरुपासकैः 'बलिकम्' अत्यर्थं खिंस्यन्ते—अस्माकमेव दर्शनं सर्वोत्तमम्, भवदीयगुरूणामपि गौरवार्हत्वात् ॥ ४४१८ ॥

**एए चेव य दोसा, सविसेसयरऽन्नतित्थिगीसुं पि ।**
**लाघव अणुज्जियत्तं, तहागयाणं अवन्नो य ॥ ४४१९ ॥**

एत एव 'दोषाः' प्रवचनापभ्राजनादयोऽन्यतीर्थिकीष्वपि भवन्ति, नवरं 'सविशेषतराः' शङ्कादिभिर्दोषैः समधिकतरा मन्तव्याः । गृहिणामन्यतीर्थिकादीनां चाभ्युत्थाने सामान्यत इमे दोषाः, तद्यथा—'लाघवम्' 'एतेभ्योऽप्ययं हीनः' इत्येवंलक्षणो लघुभाव उपजायते । 'अनू-र्जितत्वं' वराकत्वमुपदर्शितं भवति, तथाहि लोको ब्रूयात्—अहो ! अदत्तदाना श्वाना इव वराका अमी, यदेवमाहारादिनिमित्तमविरतकानामपि चाटूनि कुर्वन्ति । तथा—तेन यथावस्थितपदार्थो-

प्रलम्बकात्मकेन प्रकारेण गतं—ज्ञानमेषां ते 'तथागताः' सद्भूतार्थवेदिनः तीर्थकर-गणधरा इत्यर्थः तेषामवर्णवादो भवति, यथा—नामी सम्यग् मोक्षमार्गं दृष्टवन्त इति ॥ ४४१९ ॥

अथ संयतीनामभ्युत्थाने दोषं विशेषतो दर्शयन्नाह—

**पायं तवस्सिणीओ, करेंति किइकम्म मो सुविहियाणं ।**
**एसुत्तिट्ठइ वतिणिं, भवियव्वं कारणेणेत्थं ॥ ४४२० ॥**

संयतीमभ्युत्तिष्ठन्तं दृष्ट्वा कश्चिदभिनवधर्मा चिन्तयेत्—प्रायः 'तपस्विन्यः' संयत्यः सुविहितानां कृतिकर्म कुर्वन्ति, "मो" इति पादपूरणे, एष पुनर्व्रतिनीमुत्तिष्ठति, तद् भवितव्यमत्र कारणेनेति । ◁ एवं शङ्कायां चतुर्गुरु, निःशङ्किते मूलम् । ▷ यत एते दोषास्ततो नैषामभ्युत्थानं विधेयम् ॥४४२०॥ अथ येषामभ्युत्थातव्यं तदभ्युत्थानाकरणे प्रायश्चित्तमभिधित्सुराह—

**आयरिए अभिसेगे, भिक्खुम्मि तहेव होइ खुड्डे य ।**
**गुरुगा लहुगा लहुगो, भिन्ने पडिलोम बिइएणं ॥ ४४२१ ॥**

आचार्येऽभिषेके भिक्षौ तथैव क्षुल्लके आचार्यादीन् प्राघुणकान् यथाक्रममनभ्युत्तिष्ठति गुरुका लघुका लघुको भिन्नमासश्चेति प्रायश्चित्तानि । द्वितीयादेशेनेदमेव प्रायश्चित्तं 'प्रतिलोमं' प्रतीपक्रमेणाचार्यादीनां वक्तव्यम्, आचार्यस्य भिन्नमासः, अभिषेकस्य लघुमासः, भिक्षोश्चतुर्लघवः, क्षुल्लकस्य चतुर्गुरव इति भावः । एष सङ्ग्रहगाथासमासार्थः ॥ ४४२१ ॥

अथैनामेव विवृणोति—

**आयरियस्सायरियं, अणुट्ठियंतस्स चउगुरू होंति ।**
**वसभे भिक्खु खुड्डे, लहुगा लहुगो य भिन्नो य ॥ ४४२२ ॥**

आचार्यस्याचार्यं प्राघूर्णकमायान्तमनुत्तिष्ठतश्चतुर्गुरवो भवन्ति, वृषभमनभ्युत्तिष्ठतश्चतुर्लघुकाः, भिक्षुमनुत्तिष्ठतो लघुमासः, क्षुल्लकमनुत्तिष्ठतो भिन्नमासः ॥ ४४२२ ॥

◁ एवमाचार्यस्य प्रायश्चित्तमुक्तम् । अथ शेषाणामतिदिशति—▷

**सट्ठाण परट्ठाणे, एमेव य वसह-भिक्खु-खुड्डाणं ।**
**जं परठाणे पावइ, तं चेव य सोहि सट्ठाणे ॥ ४४२३ ॥**

एवमेव वृषभ-भिक्षु-क्षुल्लकानामपि स्वस्थान-परस्थानप्रायश्चित्तं वक्तव्यम् । स्वस्थानं नाम—वृषभस्य वृषभः, परस्थानं वृषभस्याचार्यः ◁ भिक्षु-क्षुल्लकाः; एवं ▷ भिक्षु-क्षुल्लकयोरपि स्वस्थान-परस्थानभावना कर्तव्या । अत्र च यत् परस्थाने आचार्यः प्राप्नोति तदसावपि वृषभादिः स्वस्थाने प्राप्नोति । किमुक्तं भवति?—वृषभस्य प्राघूर्णकमाचार्यमनभ्युत्तिष्ठतश्चतुर्गुरुकाः, वृषभस्यानभ्युत्थाने चतुर्लघवः, भिक्षोरनभ्युत्थाने मासलघु, क्षुल्लकस्यानभ्युत्थाने भिन्नमासः; एवं भिक्षु-क्षुल्लकयोरपि मन्तव्यम् । अत्र परस्थानमाचार्यस्य वृषभादयः, तेषामनभ्युत्थाने यथाऽसौ चतुर्लघुकादिकमापन्नवान् तथा वृषभादयोऽपि स्वस्थानमनभ्युत्तिष्ठन्तस्तदेव प्राप्नुवन्ति ॥ ४४२३ ॥

---

१ °लम्भात्म° भा० ॥ २ ◁ ▷ एतन्मध्यगतः पाठः भा० नास्ति ॥ ३ °क्खुम्मि तह य होइ ताभा० ॥ ४ अत्र बहुषु स्थलेषु भा० पुस्तके प्राघूर्णिक इति पाठः दृश्यते ॥ ५ ◁ ▷ एतन्मध्यगतमवतरणं भा० नास्ति ॥ ६ ◁ ▷ एतदन्तर्गतः पाठः भा० कां० एव वर्त्तते ॥

अथैतदेव प्रायश्चित्तं तपः-कालाभ्यां विशेषयन्नाह—

**दोहि वि गुरुगा एते, आयरियस्सा तवेण कालेण ।**
**तवगुरुगा कालगुरू, दोहि वि लहुगा य खुड्डस्स ॥ ४४२४ ॥**

आचार्यस्य 'एतानि' चतुर्गुरुकादीनि प्रायश्चित्तानि द्वाभ्यामपि गुरुकाणि कर्त्तव्यानि, तद्यथा—तपसा कालेन च । वृषभस्य तपोगुरुकाणि, भिक्षोः कालगुरुकाणि, क्षुल्लकस्य 'द्वाभ्यामपि' तपः-कालाभ्यां लघुकानि ॥ ४४२४ ॥

**अहवा अविसिट्ठं चिय, पाहुणयाऽऽगंतुए गुरुगमादी ।**
**पावेंति अणुट्ठिंता, चउगुरु लहुगा लहुग भिन्नं ॥ ४४२५ ॥**

'अथवा' इति प्रायश्चित्तस्य प्रकारान्तरताद्योतकः । 'अविशिष्टमेव' आचार्यादिविशेषैर्विरहितं प्राघूर्णकमागन्तुकमनुत्तिष्ठन्तः 'गुर्वादयो' आचार्यप्रभृतयो यथाक्रमं चतुर्गुरुक-चतुर्लघुक-लघुमास-भिन्नमासान् प्राप्नुवन्ति । तद्यथा—आचार्यस्य यं वा तं वा प्राघूर्णकमागतमनभ्युत्तिष्ठतश्चतुर्गुरु, वृषभस्य चतुर्लघु, भिक्षोर्लघुमासः, क्षुल्लकस्य भिन्नमास इति ॥ ४४२५ ॥

**अहवा जं वा तं वा, पाहुणगं गुरुमणुट्ठिहं पावे ।**
**भिन्नं वसभो सुक्कं, भिक्खु लहू खुड्डए गुरुगा ॥ ४४२६ ॥**

अथवा यं वा तं वा प्राघूर्णकमनुत्तिष्ठन् 'गुरुः' आचार्यो भिन्नमासं प्राप्नोति, वृषभः 'शुक्ल-मासं' लघुमासमित्यर्थः, भिक्षुश्चतुर्लघुकम्, क्षुल्लकश्चतुर्गुरुकम् । एतेन "पडिलोम बिइएणं" (गा. ४४२१) ति पदं व्याख्यातम् ॥ ४४२६ ॥

अथ किमर्थमयं द्वितीयादेशः प्रवृत्तः ? इत्याह—

**वायण-वावारण-धम्मकहण-सुत्तत्थचिंतणासुं च ।**
**वाउलिए आयरिए, बिइयादेसो उ भिन्नाई ॥ ४४२७ ॥**

इहाचार्यस्यानेकधा व्याक्षेपः, तद्यथा—वाचना नाम-अनुयोगः सा विनेयानां दातव्या, व्यापारणं साधूनां वैयावृत्त्यादिषु यथायोग्यं विधेयम्, श्राद्धानां धर्मकथनं विधातव्यम्, स्वयं च सूत्रा-ऽर्थयोश्चिन्तना- अनुप्रेक्षा कर्त्तव्या । एवमादिषु कार्येषु निरन्तरमाचार्यो व्याकुलितो भवति, वृषभादयस्तु न तथा व्याकुला इत्यतोऽयं भिन्नमासादिर्द्वितीय आदेशः प्रवृत्तः । इयमत्र भावना—आचार्यो बहुव्याकुलतया प्राघुणकमागच्छन्तं दृष्ट्वाऽपि नाभ्युत्थातुं पारयेत्, अतस्तस्य स्वल्पतरं प्रायश्चित्तम् । वृषभ-भिक्षु-क्षुल्लकास्तु यथाक्रममल्पा-ऽल्पतरा-ऽल्पतमव्याक्षेपाः, ततो लघुमासादीनि प्रभूत-प्रभूततर-प्रभूततमानि तेषां प्रायश्चित्तानीति ॥ ४४२७ ॥

अथ क्षुल्लकस्य गुरुतमप्रायश्चित्तदाने विशेषकारणमाह—

**वेसइ लहुमुट्ठइ य, धूलीधवलो असंफुरो खुड्डो ।**
**इति तस्स होंति गुरुगा, पालेइ हु चंचलं दंडो ॥ ४४२८ ॥**

'क्षुल्लकः' बालः स लघुशरीरतया सुखेनैवोपविशति उत्तिष्ठति च, क्रीडनशीलतया च

---

१ स क्रीडनशीलतया प्रायेण 'धूलीधवलः' रजोगुण्डितदेहो भवति, असंस्फुरश्चासौ, ततः 'लघु' शीघ्रमुपविशति उत्तिष्ठति च, अतो वयसा° भा० ॥

प्रायेण 'धूलीधवलः' रजोगुण्डितदेहः 'असंस्फुरश्च' असंवृतोऽसौ भवति, अतो यद्यसावपि प्राघुणकमागतं नोत्तिष्ठति तदा महद् दूषणमाप्नोति, अत एतस्य चतुर्गुरुकाः प्रायश्चित्तम् । किञ्च—यश्चञ्चलः—◁ स्वभावात् चपलोऽपि सन् गुर्वादीनां नाभ्युत्तिष्ठति ▷ तं 'दण्डः' प्रायश्चित्तलक्षणो दीयमानः पालयति, चञ्चलत्वमपनयतीत्यर्थः ॥ ४४२८ ॥ अपि च—

**जइ ता दंडत्थाणं, पावइ बालो वि पयणुए दोसे ।**
**ह णु दाणि अक्खमं णे, पमाइउं रक्खणा सेसे ॥ ४४२९ ॥**

बालस्यापि गुरुके प्रायश्चित्ते दत्ते सति शेषसाधवश्चिन्तयेयुः—यदि तावदयं बालोऽपि 'प्रतनुके' अनभ्युत्थानमात्रलक्षणे स्वल्पेऽप्यपराधे एवं दण्डस्थानं प्राप्नोति "ह णु दाणि" त्ति तत इदानीमस्माकं 'प्रमत्तुम्' अभ्युत्थाने प्रमादं कर्तुम् 'अक्षमम्' अनुचितमिति शेषसाधुवर्गस्यापि रक्षणं कृतं भवति ॥ ४४२९ ॥ आह—अभ्युत्थानमकुर्वतामात्म-संयमयोस्तावत् काचिदपि विराधना नास्ति ततः किं कारणमेवमेव प्रायश्चित्तं दीयते ? उच्यते—

**दिट्ठंतो दुवक्खरए, अब्भुट्ठितेहिँ जह गुणो पत्तो ।**
**तम्हा उट्ठेयव्वो, पाहुणओ गच्छे आयरिओ ॥ ४४३० ॥**

इह प्राघुणकमाचार्यमनुत्तिष्ठन् भगवतामाज्ञामतिक्रामति । तथा चात्र **'द्व्यक्षरकेण'** **दासेन** दृष्टान्तः—

एगो राया, सो केणइ दुअक्खरएणं आराहिओ । रन्ना से पट्टं बंधिउं पहाणं रज्जं दिन्नं । तत्थ दंड-भड-भोइयाइणो 'दुअक्खरो' त्ति काउं परिभवेणं तस्स अब्भुट्ठाणाइयं न करेंति, ताहे तेण ते अणब्भुट्ठंता दंडिया मारिया य । जे विणीया ते अब्भुट्ठिंति, तेसिं तेण परितुट्ठेण रज्जसंविभागो दिन्नो ॥

अथार्थोपनयः—यथा तैरभ्युत्तिष्ठद्भिरिहलोके गुणः प्राप्तः तथा साधवोऽपि प्राघुणकमाचार्यमभ्युत्तिष्ठन्त इह परत्र च गुणानासादयन्ति । तस्मात् प्राघुणक आचार्यः सकलेनापि गच्छेनाभ्युत्थातव्यः ॥ ४४३० ॥ अमुमेव द्व्यक्षरकदृष्टान्तं व्याख्यानयति—

**आराहितो रज्ज सपट्टबंधं, कासी य राया उ दुवक्खरस्स ।**
**पसासमाणं तु कुलीयमादी, नाढंति तं तेण य ते विणीया ॥ ४४३१ ॥**

'आराधितः' केनापि गुणविशेषेण परितोषं प्रापितः सन् राजा द्व्यक्षरकस्य सपट्टबन्धं राज्यमकार्षीत, पट्टबन्धनृपतिं तं विहितवानिति भावः । ततस्तं द्व्यक्षरकराजं राज्यं प्रशासत् 'कुलीनादयो नाद्रियन्ते' 'वयं कुलीनाः, अयं तु हीनकुलोत्पन्नः, आदिशब्दाद् वयं प्रधानपुरुषाः, अयं पुनः कर्मकरः' इत्यादिपरिभवबुद्ध्या नाभ्युत्थानादिकमादरं तस्य कुर्वन्ति । ततस्ते तेन राज्ञा 'विनीताः' शिक्षां प्रापिताः, "विनयः शिक्षा-प्रणत्योः" ( हैमाने० त्रिस्वर० श्लोक ११०५ ) इति वचनात् ॥ ४४३१ ॥ कथं शिक्षिताः ? इत्याह—

**सव्वस्सं हाउणं, निच्छूढा मारिया य विवदंता ।**
**भोगेहिँ संविभत्ता, अणुकूल अणुव्वणा जे उ ॥ ४४३२ ॥**

१ ◁ ▷ एतच्चिह्नान्तर्गतः पाठः भा० नास्ति ॥ २ निच्छूढा भा० ॥

सर्वस्वमपहृत्य ते स्वनगराद् "निज्जूढा" निष्काशिताः । ये च तत्र निष्काश्यमाना विवदन्ते—'किमस्माभिरपराद्धम्? यो यो व्यक्षरको भविष्यति तस्य तस्य किं वयमभ्युत्थानं करिष्यामः?' इत्यादि कलहायन्ते ते विवदमाना मारिताः । ये तु तत्र 'अनुकूलाः' अभ्युत्थानादिकारिणः 'अनुल्वणाः' अगर्वितास्ते भोगैः 'संविभक्ताः' राज्यभोगसंविभागस्तेषां कृतः ॥ ४४३२ ॥ एष दृष्टान्तः, अयमर्थोपनयः—

**अहिराया तित्थयरो, इयरो उ गुरू उ होइ नायव्वो ।**
**साहू जहा व दंडिय, पसत्थमपसत्थगा होंति ॥ ४४३३ ॥**

यथा 'अधिराजः' मौलः पृथिवीपतिः तथा तीर्थकरः । यथा 'इतरः' व्यक्षरकराजः तथा तीर्थकराधिराजेनैवानुज्ञातानाचार्यपदपट्टबन्धमहितगणाधिपत्यराज्यः 'गुरुः' आचार्यो ज्ञातव्यो भवति । यथा च ते प्रशस्ता-ऽप्रशस्तरूपा दण्डिकास्तथा साधवोऽप्युभयस्वभावा भवन्ति ॥ ४४३३ ॥ तत्र—

**जह ते अणुट्ठिहंता, हियसव्वस्सा उ दुक्खमाभागी ।**
**इय णाणे आयरियं, अणुट्ठिहंताण वोच्छेदो ॥ ४४३४ ॥**

यथा ते दण्ड-भट-भोजिकादयो व्यक्षरकनृपतिमनुत्तिष्ठन्तो हृतसर्वस्वा ऐहिकस्य दुःखस्याभागिनः सञ्जाताः 'इति' एवमाचार्यमप्यनुत्तिष्ठतां दुर्विनीतसाधूनां ज्ञाने उपलक्षणत्वाद् दर्शन-चारित्रयोश्च व्यवच्छेदो भवति । ततश्चानेकेषां जन्म-जरा-मरणादिदुःखानामाभागिनस्ते सञ्जायन्ते ॥ ४४३४ ॥ एषोऽप्रशस्तोपनयः, अथ प्रशस्तोपनयः—

**उट्ठाण-सेज्जा-ऽऽसणमाइएहिं, गुरुस्स जे होंति सयाऽणुकूला ।**
**नाउं विणीए अह ते गुरू उ, संगिण्हई देइ य तेसि सुत्तं ॥ ४४३५ ॥**

उत्थानं-गुरुमागच्छन्तं दृष्ट्वा ऊर्द्धीभवनम्, शय्या-सम-सुन्दरावकाशे गुरूणां संस्तारकरचनम्, आसनम्-उपवेशनयोग्यनिषद्यादिरचनम्, यद्वा "सेज्जा-ऽऽसणं" ति गुरूणां शय्याया आसनाच्च नीचतरशय्या-ऽऽसनयोराश्रयणम्, आदिशब्दादञ्जलिप्रग्रहादिपरिग्रहः । एवमादिभिर्विनयभेदैर्ये शिष्याः सदैव गुरोरनुकूला भवन्ति तान् विनीतान् ज्ञात्वा 'अथ' अनन्तरं गुरुः 'संगृह्णाति' 'मयैते सम्यक् पालनीयाः' इत्येवं सङ्ग्रहबुद्ध्या स्वीकरोति सूत्रं च तेषां प्रयच्छति । ततश्च ते इह परत्र च कल्याणपरम्पराभाजनं जायन्ते ॥ ४४३५ ॥

अथाप्रशस्तोपनयं विशेषतो भावयन्नाह—

**पज्जाय-जाई-सुततो य वुड्ढा, जच्चन्निया सीससमिद्धिमंता ।**
**कुव्वंतऽवण्णं अह ते गणाओ, निज्जूहई नो य ददाइ सुत्तं ॥ ४४३६ ॥**

पर्यायतो ये वृद्धास्ते 'अवमरात्निकोऽयम्' इति बुद्ध्या, जातिमधिकृत्य ये वृद्धाः—षष्टिवर्षजन्मपर्याया इत्यर्थस्ते 'बालकोऽयम्' इति बुद्ध्या, 'श्रुततश्च' श्रुतमङ्गीकृत्य ये वृद्धास्ते 'अल्पश्रुतोऽयम्' इति कृत्वा, 'जात्यन्विताः' विशिष्टजातिसम्भूताः 'हीनजात्युद्भवोऽयम्' इति मत्वा, 'शिष्यसमृद्धिमन्तः' परिवारसम्पदुपेताः 'अल्पपरिवारोऽयम्' इति बुद्ध्या गुरोः 'अवज्ञाम्'

१ °द् "निच्छूढा" मो० ताटी० । °द् 'निर्यूढाः' निष्का° ले० ॥

अनभ्युत्थानलक्षणां कुर्वन्ति । अथैवमवज्ञाकरणानन्तरं गुरुस्तान् स्वगच्छनगराद् निर्यूहति । ये च बहुपाक्षिकत्वादिभिः कारणैर्निर्यूहितुं न शक्यन्ते तेषां भोगसंविभागकल्पं 'सूत्रं' श्रुतं न प्रयच्छति ॥ ४४३६ ॥ एवं तावत् प्राघुणकमाचार्यमङ्गीकृत्याभ्युत्थाना-ऽनभ्युत्थानयोर्गुण-दोषा उपवर्णिताः । अथ सामान्यतो गच्छमध्यस्थितस्यैवाचार्यस्यानभ्युत्थाने दोषमाह—

**मज्झत्थ पोरिसीए, लेवे पडिलेह आइयण धम्मे ।**
**पयल गिलाणे तह उत्तिमट्ठ सव्वेसि उट्ठाणं ॥ ४४३७ ॥**

आचार्यमागच्छन्तं दृष्ट्वा गच्छसाधवो मध्यस्थास्तिष्ठन्ति न पुनरभ्युत्तिष्ठन्ति पूर्वोक्तमेव प्रायश्चित्तम् । सूत्रा-ऽर्थपौरुषीं लेपप्रदानं प्रतिलेखनां "आइयणं" ति समुद्देशनं धर्मकथां वा विदधानाः प्रचलायमाना वा नाभ्युत्तिष्ठन्ति अत्रापि 'तदेव' वृषभादिविषयं प्रायश्चित्तम् । ग्लानो वा उत्तमार्थप्रतिपन्नो वा शक्तौ सत्यां यदि नोत्तिष्ठति तदा तस्यापि प्रायश्चित्तम् । यत एवमतः सर्वेषामप्यभ्युत्थानं भवति । इदमत्र हृदयम्—आचार्याणामनभ्युत्थाने सूत्रपौरुषीकरणादीनि कदालम्बनानि नालम्बनीयानि, यथा—ममायमालापकोऽर्धपठितो वर्त्तते, लेपो वा पात्रके नाद्यापि परिपूर्णो दत्तः, प्रतिलेखनादिकं वा सम्प्रति कुर्वाणोऽस्मि, ग्लानो वा कृतभक्तप्रत्याख्यानो वा अहमस्मीति; किन्तु सर्वैरपि सूत्राध्ययनादिव्यापारं परिहृत्याभ्युत्थातव्यम् ॥ ४४३७ ॥ एवं तावदुपाश्रये विधिरभिहितः, अथान्यत्र गृहादौ रथ्यादिषु वा यत्र दृश्यते तत्रायं विधिः—

**दूरागयमुट्ठेउं, अभिनिग्गंतुं नमंति णं सव्वे ।**
**दंडगहणं च मोत्तुं, दिट्ठे उट्ठाणमन्नत्थ ॥ ४४३८ ॥**

दूरादाचार्यमागतं दृष्ट्वा अभि—आभिमुख्येन निर्गत्य सर्वेऽपि साधवः "णं"मिति एनमाचार्यं 'नमन्ति' शिरसा वन्दन्ते । यदा च गुरव उपाश्रयं प्रविशन्ति तदा दण्डकग्रहणमपि कर्त्तव्यम् । 'अन्यत्र तु' गृहादौ दृष्टे गुरौ दण्डकग्रहणं मुक्त्वा अभ्युत्थानमेव कर्त्तव्यम् ॥ ४४३८ ॥

एवमभ्युत्थाने के गुणाः ? इत्याह—

**परपक्खे य सपक्खे, होइ अगम्मत्तणं च उट्ठाणे ।**
**सुयपूयणा थिरत्तं, पभावणा निज्जरा चेव ॥ ४४३९ ॥**

परपक्षः—परपाषण्डिनः स्वपक्षः—पार्श्वस्थादिवर्गस्तयोः 'अगम्यत्वम्' अनभिभवनीयता गुरोरभ्युत्थाने भवति । तथा गुरवो बहुश्रुता भवन्तीति श्रुतपूजनमपि कृतं स्यात् । अन्येषामभ्युत्थानादौ विनये सीदतां स्थिरत्वमनुष्ठितं भवति । प्रभावना च शासनस्यैवं कृता भवेत्—अहो ! शोभनमिदं प्रवचनं यत्रैवंविधो विनयो विधीयते । निर्जरा च कर्मक्षयरूपा विपुला भवति, विनयस्याभ्यन्तरतपोभेदत्वात्, ⊲ तस्य च निर्जरानिबन्धनतया सुप्रतीतत्वात् ⊳ ॥ ४४३९ ॥

आह—यः प्रव्रजितः सर्वपापोपरतस्तस्य किं नाम विनयेन कार्यम् ? इति उच्यते—

**अकारणा नत्थिह कज्जसिद्धी, न याणुवाएण वदंति तण्णा ।**
**उवायवं कारणसंपउत्तो, कज्जाणि साहेइ पयत्तवं च ॥ ४४४० ॥**

---

१ °खनाम् 'अदनं वा' समु° भा० ॥ २ ⊲ ⊳ एतन्मध्यगतः पाठः भा० नास्ति ॥

